व्याख्या—तस्मिन् काले=तस्मिन् समये, श्रमणो=भगवान् महावीरः ग्रीष्मस्य स्त्रीत्वं बहुत्वं च आर्षत्वात्। चतुर्थे मासे अष्टमे पक्षे आषाढसुदि "छट्ठीपक्खे णं ति" दिनरात्रिभ्यां अहोरात्रिभ्यां अहोरात्रस्य उभयपक्षत्वात् षष्ठ्या अहोरात्रस्य रात्रौ, क्वापि "छट्ठीदिवसे णं त्ति" पाठः, तत्र दिवसशब्देन तिथिर्ग्राह्या, तस्यां रात्रौ महाविमानात् च्युत्वा। परं कीदृशात् महाविमानात्?। महान् विजयो यत्र। तच्च तत् पुष्पोत्तरं च पुष्पोत्तरनामकं तदेव प्रवरेषु पुण्डरीकमिव उत्तमत्वात्। पुनः किंविशिष्टात् महाविमानात्?। विंशतिसागरोपमस्थितिकात्। "आउक्खएणं त्ति" देवसंबंधिनः आयुषः क्षयेण, "भव त्ति" भवस्य देवगतेः क्षयेण, "ठिइक्खएणं" स्थितेराहारस्य वैक्रियशरीरे अवस्थानस्य वा क्षयेण "अणंतरं त्ति"=अन्तररहितं पश्चादित्यर्थः। "चयं" देवसम्बन्धि शरीरं। 'चइत्ता"=त्यक्त्वा, अथवा चयं च्यवनं "चिच्चा" कृत्वा, "इहेव जंबुदीवे" अस्मिन्नेव जम्बूद्वीपे नान्यस्मिन्, यतो जम्बूद्वीपा अन्ये असङ्ख्याताः सन्ति। भरतक्षेत्रे अस्यां अवसर्पिण्यां सुषमसुषमानामके प्रथमे अरे व्यतिक्रान्ते सति तत्स्वरूपं च इदम्—चतुष्कोटाकोटिसागरप्रमाणं, तत्र युगलकानां त्रिपल्योपमायुः त्रिक्रोशप्रमाणं शरीरम्, चतुर्थदिने तुअरीकणमात्रम् आहारं गृह्णाति, २५६ पृष्ठकरंडकः (पांशुल्यः) ४९ दिनानि यावत् अपत्यपालनां करोतीति ॥ १ ॥ पुनः सुषमानामके द्वितीयेऽपि अरे व्यतीते सति तत्स्वरूपं चेदम्—त्रिकोटाकोटिसागरप्रमाणं, तत्र युगलकानां द्विपल्योपमायुः क्रोशद्वयं देहप्रमाणम्, तृतीयदिने बदरप्रमाणम् आहारं गृह्णाति, १२८ पृष्ठकरंडकः (पांशुल्यः) ६४ दिनानि यावत् अपत्यपालनां करोतीति ॥ २ ॥

षडारकाणां स्वरूपम्।

तं जहा—गय—वसह—सीह—अभिसेय—दाम—ससि—दिणयरं—झयं—कुंभं । पउमसर—सागर—विमाण(भवण)रयणुच्चय—सिहिं च ॥ ४ ॥ तए णं सा देवाणंदा माहणी इमे एयारूवे उराले कल्लाणे सिवे धण्णे मंगल्ले सस्सिरीए चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा समाणी, हट्ठतुट्ठचित्तमाणंदिआ पीअमणा परमसोमणसिआ हरिसवसविसप्पमाणहियया धाराहयकलंबुगंपिव समुस्ससिअरोमकूवा सुमिणुग्गहं करेइ, सुमिणुग्गहं करित्ता सयणिज्जाओ अब्भुट्ठित्ता अब्भुट्ठेइ, अतुरिअमचवलमसंभंताए अविलंबिआए रायहंससरिसीए गईए, जेणेव उसभदत्ते माहणे, तेणेव उवागच्छइ, उवागच्छित्ता उसभदत्तं माहणं जएणं विजएणं वद्धावेइ, वद्धावित्ता सुहासणवरगया आसत्था वीसत्था करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ ५ ॥

व्याख्या—श्रमणो भगवान् महावीरो देवलोके गर्भेऽपि स्थितः त्रिज्ञानसहितोऽभवत्। तत्र यद्यपि देवानां षण्मासशेषायुषां 'माल्यम्लानिः १ कल्पवृक्षप्रकंपः २ श्री ३ ह्रीनाशो ४ वाससां चोपरागः ५। दैन्यं ६ तन्द्रा ७ कामरागां ८ गभङ्गो ९ दृष्टेर्भ्रान्ति १० र्वेपथुश्चारतिश्च १२ ॥' इति भावा जायन्ते, तथाऽपि तीर्थङ्करसुराः

ब्राह्मणानां "कुण्डं"=आज्ञा यस्मिन् ग्रामे स ब्राह्मणकुण्डग्रामः, तस्मिन् ऋषभदत्तस्य ब्राह्मणस्य "कोडालस" इति नाम्ना गोत्रस्य तस्य या भार्या देवानन्दानाम्नी "जालन्धर" इतिगोत्रा तस्याः कुक्षौ गर्भतया व्युत्क्रान्तः= उत्पन्न इत्यर्थः। कस्मिन् समये ?। पूर्वरात्रश्चासौ अपररात्रश्च स एव काललक्षणः समयो न समाचारादिलक्षणः तत्र मध्यरात्रे इत्यर्थः। आर्षत्वात् एकरेफलोपः, अपरात्रशब्दोऽयं वा। 'अर्धे गते सर्वं गतम्' इति न्यायात् अपगता रात्रिः (यस्मात् सः) अपरात्रः। पुनः हस्तोत्तरानक्षत्रे चन्द्रेण सह योगमुपगते सति "आहारवक्कंतीए त्ति" आहारापक्रान्त्या=देवाहारपरित्यागेन अथवा आहारव्युत्क्रान्त्या=अपूर्वाहारोत्पादेन मनुष्योचिताहारग्रहणेनेत्यर्थः। एवमन्यदपि पदद्वयं व्याख्येयम् ॥

ते णं कालेणं तेणं समएणं समणे भगवं महावीरे तिन्नाणोवगए आवि होत्था, 'चइस्सामि' त्ति जाणइ, 'चयमाणे' न जाणइ, 'चुएमि' त्ति जाणइ ॥ जं रयणिं च णं समणे भगवं महावीरे देवानंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते, तं रयणिं च णं सा देवाणंदा माहणी सयणिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमेएयारूवे, उराले, कल्लाणे, सिवे, धन्ने, मंगल्ले सस्सिरीए चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा

तं जहा–गय–वसह–सीह–अभिसेय–दाम–ससि–दिणयरं–झयं–कुंभं । पउमसर–सागर–विमाण(भवण)रयणुच्चय–सिहिं च ॥ ४ ॥ तए णं सा देवाणंदा माहणी इमे एयारूवे उराले कल्लाणे सिवे धण्णे मंगल्ले सस्सिरीए चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा समाणी, हट्ठतुट्ठचित्तमाणंदिआ पीअमणा परमसोमणसिआ हरिसवसविसप्पमाणहियया धाराहयकलंबुगंपिव समुस्ससिअरोमकूवा सुमिणुग्गहं करेइ, सुमिणुग्गहं करित्ता सयणिज्जाओ अब्भुट्ठित्ता अब्भुट्ठेइ, अतुरिअमचवलमसंभंताए अविलंबिआए रायहंससरिसीए गईए, जेणेव उसभदत्ते माहणे, तेणेव उवागच्छइ, उवागच्छित्ता उसभदत्तं माहणं जएणं विजएणं वद्धावेइ, वद्धावित्ता सुहासणवरगया आसत्था वीसत्था करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ ५ ॥

व्याख्या–श्रमणो भगवान् महावीरो देवलोके गर्भेऽपि स्थितः त्रिज्ञानसहितोऽभवत्। तत्र यद्यपि देवानां षण्मासशेषायुषां 'माल्यम्लानिः १ कल्पवृक्षप्रकंपः २ श्री ३ ह्रीनाशो ४ वाससां चोपरागः ५। दैन्यं ६ तन्द्रा ७ कामरागां ८ गभङ्गौ ९ दृष्टेर्भ्रान्ति १० वेंपथुश्चारतिश्च १२॥' इति भावा जायन्ते, तथाऽपि तीर्थङ्करसुराः

पुण्योत्कर्षात् कान्तिविज्ञानादिना युक्ता भवन्ति "चइस्सामि" च्यवनकालं भगवान् जानाति "चयमाणे" च्यवमानो न जानाति च्यवनस्य एकसमयकत्वात् । छद्मस्थज्ञानोपयोगस्य च जघन्यतोऽपि अन्तर्मौहूर्त्तिकत्वात् । "जं रयणिं" यस्यां रजन्यां रात्रौ श्रमणो भगवान् महावीरो देवानन्दायाः कुक्षौ अवतीर्णः । तस्यां रात्रौ सा देवानन्दा शय्यायां सुत्तजागरा=नातिसुप्ता नातिजाग्रती "उहीरमाणी" वारंवारं ईषन्निद्रां गच्छन्ती, कल्पटिप्पणकोक्तत्वात् । तृतीयनिद्रया प्रचलायमाना इमान् वक्ष्यमाणान् चतुर्दश १४ स्वप्नान् दृष्ट्वा प्रतिबुद्धा=जागरिता । किंविशिष्टान् स्वप्नान् ? । एतद्रूपान् एतदेव वर्णितलक्षणं रूपं येषां स्वप्नानां न कविकृतं न्यूनं अधिकं वा एतद्रूपाः ते तथा तान् । "उराले" उदारान्=प्रधानान्, कल्याणानां=शुभसमृद्धिविशेषाणां कारणत्वात् । कल्पं नीरोगत्वं वा "अणंति"=गच्छन्ति कल्याणाः तान् कल्याणान् शिवान् उपद्रवोपशमहेतुत्वात् । धन्या धनावहत्वात् मङ्गले दुरितोपशमे साधुत्वात् माङ्गल्यान्=सश्रीकान् सशोभान् । तद्यथा तान् चतुर्दशस्वप्नान् नामत आह-प्रथमस्वप्ने देवानन्दा गजं पश्यति । द्वितीये वृषभम्, तृतीये सिंहं, चतुर्थे श्रीदेवीसम्बन्धिनं अभिषेकम्, पञ्चमे पुष्पदाम, षष्ठे शशिनं चन्द्रम्, सप्तमे दिनकरं सूर्यम्, अष्टमे ध्वजम्, नवमे पूर्णकलशम्, दशमे पद्मसरोवरम्, एकादशे समुद्रम्, द्वादशे देवविमानम् । तत्रायं विशेषः-यः तीर्थङ्करो देवलोकादवतरति तन्माता विमानं पश्यति । यस्तु नरकादागच्छति श्रेणिकादिवत् तन्माता भवनं=प्रासादं पश्यति । चतुर्दशैव एते स्वप्ना विमानभवनयोरेकतरदर्शनात् । त्रयोदशे रत्नोच्चयं=रत्नभृतं स्थालम्, चतुर्दशे शिखिनं=निर्धूममग्निम् ।

ततश्चतुर्दश स्वप्नान् एतादृशान् दृष्ट्वा प्रतिबुद्धा समाना देवानन्दा ब्राह्मणी कीदृशी जाता ? इत्याह–हृष्टा=विस्मिता, तुष्टा=तोषवती, आनन्दिततत्वात्। आनन्दितं चित्तं यस्याः सा चित्तानन्दिता, मकारः प्राकृतत्वात्, अथवा हृष्टं=विस्मितम्, तुष्टं=तोषवत्–चित्तं यत्र तत्तथा, तद्यथा भवति एवं आनन्दिता। प्रीतिः=आप्यायनं मनसि यस्याः सा प्रीतिमनाः परमं सौमनस्यं जातमस्याः सा, परमसौमनस्यिता हर्षवशेन विसर्पत्=विस्तारयायि हृदयं यस्याः सा तथा, एकार्थिकानि एतानि हर्षाधिक्यप्रतिपादनार्थत्वात्। धाराभिः=मेघवारिधाराभिः आहतं यत् कदम्बपुष्पं तदिव समुच्छ्वसितानि उद्धुषितानि रोमाणि कूपेषु=रोमरन्ध्रेषु यस्याः सा। अथ देवानन्दा एतादृशी सती किं करोति ? इत्याह–देवानन्दा ब्राह्मणी स्वप्नानां स्मरणं करोति, "विशिष्टफलादि विभावयतीत्यन्ये," स्मरणं कृत्वा शय्यातः उत्तिष्ठति। अत्वरितं=मानसौत्सुक्याभावेन, अचपलं=कायतश्चापल्यस्याभावेन, असम्भ्रान्तया अस्खलन्त्या राजहंससदृशया गत्या कृत्वा, यत्र स्थाने ऋषभदत्तो ब्राह्मणः तत्र आगच्छति, आगत्य च ऋषभदत्तं ब्राह्मणं वर्द्धापयति। केन कृत्वा ? जयेन, जयः=परैः अनभिभूयमानता प्रतापवृद्धिश्च तेन, विजयः परेषां असहमानानां अभिभवः तेन। अथवा जयः स्वदेशे, विजयः परदेशे, वर्द्धापयित्वा। भद्रासने उपविष्टा सती कीदृशी जाता ?। "आसत्था" आश्वस्ता, गतिजनितश्रमाभावात्। पुनः किंभूता ?। "वीसत्था" विश्वस्ता सङ्क्षोभाभावात् अनुत्सुका। पुनः किंभूता ?। "सुहासनवरगया"=सुखेण सुखं वा शुभं वा आसनवरं गता या सा, एवंविधा सती मस्तके अंजलिं=मुकुलितकमलाकारं कृत्वा एवं अवादीत्–

किंविशिष्टं अञ्जलिं ? करतलाभ्यां परिगृहीतं=आत्तम् । पुनः किंविशिष्टं ? । शिरसि आवर्त्तः आवर्त्तनं= प्रादक्षिण्येन परिभ्रमणं यस्य स शिरस्यावर्त्तः तम् । पुनः किंविशिष्टं ? । दश नखा यस्मिन् स तम् । किं अवादीत् ? इत्याह—

एवं खलु अहं देवाणुप्पिया ! अज्ज सयणिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे उराले जाव सस्सिरीए चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा । तं जहा—गय जाव—सिंहिं च ॥ ६ ॥ एएसिं णं देवाणुप्पिया ! उरालाणं जाव चउद्दसण्हं महासुमिणाणं के मण्णे कल्लाणे फलवित्तिविसेसे भविस्सइ ? तए णं से उसभदत्ते माहणे देवाणंदाए माहणीए अंतिए एअमट्ठं सुच्चा निसम्म हट्ठतुट्ठ जाव हिअए धाराहयकयंबपुप्फगं पिव समुस्ससियरोमकूवे सुमिणुग्गहं करेइ, करिता ईहं अणुपविसइ, इहं अणुपविसित्ता अप्पणो साभाविएणं मइपुव्वएणं बुद्धिविण्णाणेणं तेसिं सुमिणाणं अत्थुग्गहं करेइ, अत्थुग्गहं करित्ता देवाणंदं माहणिं एवं वयासी ॥ ७ ॥

व्याख्या—सूत्रं सुगमम्, नवरं हे देवानुप्रिय सुभग ! अथवा देवानपि अनुरूपं प्रीणातीति देवानुप्रियः, तस्य

सम्बोधनं हे देवानुप्रिय ! 'मन्ये' इति वितर्कार्थे निपातः। एतेषां स्वप्नानां को मन्ये कल्याणफलवृत्तिविशेषो भविष्यति ?। ततः ऋषभदत्तब्राह्मणो देवानन्दासमीपे एतं अर्थं श्रुत्वा=श्रोत्रेण आकर्ण्य, निशम्य=हृदयेन अवधार्य, हृष्टतुष्टादिविशेषणोपेतो जातः। ततः किं करोति ? इत्याह—ऋषभदत्तः स्वप्नावग्रहं अर्थावग्रहतः करोति। तत ईहां तदर्थपर्यालोचनलक्षणां अनुप्रविशति। ततः आत्मसम्बन्धिना स्वाभाविकेन=सहजेन, मतिपूर्वकेण=आभिनिबोधिकप्रभावेण बुद्धिविज्ञानेन। तत्र मतिः=अप्राप्तविषया, बुद्धिः साम्प्रतदर्शिनी, विज्ञानं अतीताऽनागतवस्तुविषयम्, तेन तेषां स्वप्नानां अर्थावग्रहं स्वप्नफलनिश्चयं करोति, कृत्वा च देवानन्दां इत्यवादीत्। किं अवादीत् ? तदाह—

उराला णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, कल्लाणा सिवा धन्ना मंगल्ला सस्सिरिआ आरोग्ग–तुट्ठि–दीहाउ–कल्लाण–मंगल्लकारगा णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, तं जहा— अत्थलाभो देवाणुप्पिए ! भोगलाभो देवाणुप्पिए ! पुत्तलाभो देवाणुप्पिए ! सुक्खलाभो देवाणुप्पिए ! एवं खलु तुमं देवाणुप्पिए ! नवण्हं मासाणं बहुपडिपुन्नाणं अद्धट्ठमाणं राइंदिआणं विइक्कंताणं सुकुमालपाणिपायं अहीणपडिपुन्नपंचिंदियसरीरं लक्खणवंजणगुणोववेअं

माणुम्माणपमाणपडिपुन्नसुजायसव्वंगसुंदरंगं ससिसोमाकारं कंतं पिअदंसणं सुरूवं देवकुमारोवमं दारयं पयाहिसि ॥ ८ ॥

व्याख्या–हे देवानुप्रिये ! त्वया उदारादिविशेषणोपेताः स्वप्ना दृष्टाः, पुनः आरोग्यं=नीरोगता, तुष्टिः=सन्तोषः दीर्घायुः=चिरंजीवित्वं, तेषां कारकाः स्वप्ना दृष्टाः । अथ तेषां फलमाह–हे देवानुप्रिये ! अर्थ–लाभादयः तव भविष्यन्ति इति शेषः । पुनः एवंरूपान् उक्तफलसाधनसमर्थान् स्वप्नान् त्वं दारकं=पुत्रं प्रजनिष्यसीति सम्बन्धः । परं कदा ? । नवसु मासेषु प्रतिपूर्णेषु । पुनः अर्धं अष्टमं येषु रात्रिदिवसेषु=अहोरात्रेषु एतावता नवमासेषु सार्धसप्तदिनेषु च गतेषु किंविशिष्टं पुत्रं ? । सुकुमारपाणिपादं सुकुमारौ पाणिपादौ हस्तचरणौ यस्य तं । पुनः किंविशिष्टं पुत्रं ? । अहीनानि लक्षणतः प्रतिपूर्णानि स्वरूपतः पञ्चेन्द्रियाणि यस्मिन् तत् तथाविधं शरीरं यस्य तम् । पुनः किंविशिष्टं पुत्रम् ? । लक्षणानि स्वस्तिकचक्रादीनि इह सामान्यपुरुषाणां मध्ये उत्तमनरस्य ३२ लक्षणानि भवन्ति । तद्यथा–यस्य नख १ चरण २ हस्त २ जिव्हा ४ ओष्ठ ५ तालु ६ लोचनान्तानि ७ रक्तानि भवन्ति, स ससाङ्गलक्ष्मीं भजति । यस्य कक्षा १ हृदय २ हनु ३ नासिका ४ नख ५ मुखानि ६ उन्नतानि भवन्ति तस्य उन्नतयो जायन्ते । पुनर्यस्य दन्त १ त्वक् २ केश ३ अङ्गुलीपर्व ४ नखाः ५ सूक्ष्मा भवन्ति, तस्य धनं प्रभूतं स्यात् । पुनर्यस्य अक्षि १ स्तनान्तर २ नासा ३ हनु ४ भुजाः ५ दीर्घा

भवन्ति, स दीर्घायुः स्यात्। पुनर्यस्य भाल १ हृदय २ मुखानि ३ विस्तीर्णानि भवन्ति स राजा स्यात्। पुनर्यस्य ग्रीवा १ जङ्घा २ पुरुषचिन्हं ३ लघु स्यात्, सोऽपि राजा स्यात्। पुनर्यस्य स्वर १ नाभि २ सत्त्वानि ३ गम्भीराणि भवन्ति, स सप्तसमुद्रान्तपृथ्वीपतिः स्यात् इति ३२ लक्षणानि प्राकृतमनुष्याणाम्। बलदेववासुदेवानां एकशतं अष्टौ च लक्षणानि भवन्ति। चक्रवर्तितीर्थङ्कराणां तु एकसहस्रं अष्टौ च लक्षणानि भवन्ति, यानि हस्तपादादौ स्फुटं प्रकटतया दृश्यन्ते। व्यञ्जनानि मष-तिलकादीनि तेषां गुणः=प्रशस्तता, तेन उपपेतम्-उप १ अप २ इत ३ इति शब्दत्रयस्य स्थाने शकन्ध्वादिदर्शनात् उपपेतं इति स्यात्। यद्वा सहजं लक्षणं पश्चाद्भवं व्यञ्जनं, गुणाः=सौभाग्यादयः, तैः सहितम्। पुनः किंविशिष्टं पुत्रम्?। मानेन[1] १ उन्मानेन २ प्रमाणेन ३ च प्रतिपूर्णानि=अन्यूनानि सुजातानि=सुनिष्पन्नानि सर्वाण्यङ्गानि शिरःप्रभृतीनि यस्मिन् तत् तथाविधं सुन्दरं अङ्गं=शरीरं यस्य स तम्। तत्र जलभृतकुण्डिकायां यस्मिन् नरे प्रविष्टे जलस्य द्रोणो बहिः पतति स मानोपेतः। द्रोणमानं यथा-द्विशतषट्पञ्चाशत् २५६ पलप्रमाणं द्रोणमानं॥ १॥ तथा यस्तुलारूढोऽर्धभारं तुलति स उन्मानोपेतः। भारमानं यथा-षड्भिः सर्षपैरेको यवः, त्रिभिर्यवैरेको गुञ्जः स्यात्। त्रिभिर्गुञ्जाभिः एको वल्लः स्यात्, षोडशभिर्वल्लैः एकः गद्याणः स्यात्, दशभिर्गद्याणैरेकं पलं स्यात् पलानां सार्धशतेन[150] मणः स्यात् दशभिर्मणैः एका धटिः स्यात्, दशभिर्धटिभिः एको भारः स्यात्।

१. जलदोणमद्धभारं, सुमुहाइं समूसिओ जो न च ओ। माणुम्माणपमाणं, तिविहं खलु लक्खणं नेयं॥ १॥ संदेहवि०।

एवं यः अर्धभारं तुलति स उन्मानोपेतः, ॥ २ ॥ तथा यः स्वाङ्गुलेन अष्टोत्तर[108]शतोच्चो भवेत् स प्रमाणोपेतः ॥ ३ ॥ सुमुखात् द्वादशाङ्गुलप्रमाणात् देहं नवगुणं, [ अष्टोत्तरशत[108]मंगुलानां भवति ] शेषपुरुषलक्षणमेतत् । तीर्थङ्करास्तु विंशत्यङ्गुल[120]शतमाना भवन्ति । तेषां हि मस्तके द्वादशाङ्गुलं उष्णीषं भवति । पुनः किंविशिष्टं पुत्रम् ? । शशिवत्=चन्द्रवत् सौम्याकारो यस्य स तम् । पुनः किंविशिष्टं पुत्रं? । कान्तं=कमनीयं अत एव द्रष्टॄणां प्रियं दर्शनं यस्य स तं, अत एव सुरूपं=शोभनरूपं । पुनः स पुत्रः कीदृशो भावी ? तदाह—

सेऽविय णं दारए उम्मुक्कबालभावे, विण्णायपरिणयमित्ते, जोव्वणगमणुपत्ते, रिउवेअ–जउव्वेअ–सामवेअ–अथव्वणवेअ–इतिहासपंचमाणं, निग्घंटुछट्ठाणं संगोवंगाणं, सरहस्साणं चउण्हं वेआणं सारए, पारए, धारए, सडंगवी, सट्ठितंतविसारए, संखाणे, सिक्खाणे, सिक्खाकप्पे, वागरणे, छंदे, निरुत्ते, जोइसामयणे, अण्णेसु य बहुसु बंभण्णएसु, परिव्वायएसु नएसु सुपरिनिट्ठिए आविभविस्सइ ॥ ९ ॥ तं उराला णं तुमे देवाणुप्पिए ! सुमिणा-दिट्ठा जाव–आरोग्ग–तुट्ठि–दीहाउय–कल्लाण–मंगलकारका णं तुमे देवाणुप्पिए सुमिणा दिट्ठ-त्ति कट्टु भुज्जो भुज्जो अणुवूहइ ॥ १० ॥

व्याख्या–सोऽपि यालक उन्मुक्तयालभावः सञ्जातोऽष्टवर्षः, पुनर्विज्ञातं–विज्ञानं परिणतमात्रं यस्य सः। क्वापि "विणयेति" पाठः, तत्र विज्ञ एव विज्ञकः, स चासौ परिणतमात्रश्च फलादिषु इति गम्यम्। पुनः यौवनकमनुप्रासः सन्। एतेषां=ऋग्वेद १ यजुर्वेद २ सामवेद ३ अथर्वण ४ वेदानाम्, अत्र प्राकृतत्वात् षष्ठीलोपः। किंविशिष्टानां वेदानाम्?। इतिहासपुराणं पञ्चमं येषां ते। पुनः किंविशिष्टानां वेदानां?। निघण्टुर्नाममाला षष्ठा येषां ते। पुनः किंभूतानां वेदानाम्?। साङ्गोपाङ्गानां अङ्गैः उपाङ्गैश्च सहितानाम्। तत्र अङ्गानि–शिक्षा १ कल्प २ व्याकरण ३ छन्दो ४ ज्योति ५ निरुक्तयः ६ षडिति, उपाङ्गानि–तेषां एव अङ्गानां प्रपञ्चनपराः प्रबन्धाः। किंभूतानां वेदानाम्?। सरहस्यानां=ऐदंपर्यसहितानाम्, सारकः=अध्यापनेन प्रवर्तकः स्मारको वा विस्मृतस्य स्मारणात्। पुनः पारगः=पर्यन्तगामी, धारकः=अधीतान् धारयितुं क्षमः। क्वचित् "वारए" इति पाठः, तत्र–वारकः, अशुद्धपाठनिषेधात्। पुनः षडङ्गवित्=शिक्षादिविचारकः, ज्ञानार्थे तु पौनरुक्त्यं न स्यात्। पुन: षष्टिरर्थास्तन्त्रिता अत्रेति षष्टितन्त्रम्=कापिलीयशास्त्रम् तत्र विशारदः। पुनः संख्याने संकलितव्यवकलितादिगणितस्कन्धे। "सिक्खाणे"त्ति शिक्षामणति=प्रतिपादयति शिक्षाणं=आचारशास्त्रम्, तत्र शिक्षा च अक्षरस्वरूपनिरूपकं शास्त्रम्, कल्पश्च यज्ञादिसमाचारीवाचकं चेति शिक्षाकल्पम्। तत्र पुनः व्याकरणे=शब्दलक्षणशास्त्रे, छन्दसि=पद्यलक्षणनिरूपकशास्त्रे, निरुक्ते=पदभञ्जने। पुनः ज्योतिषां अयने=ज्ञाने ज्योतिःशास्त्रेषु इत्यर्थः। अन्येष्वपि वहुषु ब्राह्मणकेषु=वेदव्याख्यानरूपेषु ब्राह्मणसंबन्धिषु ब्राह्मणहितेषु वा परिव्राजकदर्शनप्रसिद्धेषु नयेषु=

आचारेषु न्यायशास्त्रेषु वा परीनेष्टितः सुनिश्चातश्चापि भविष्यति । पुनर्विस्तरतः शास्त्रनामानि—ब्रह्मपुराण १ अम्भोरुहपुराण २ विष्णुपुराण ३ वायुपुराण ४ भागवतपुराण ५ नारदपुराण ६ मार्कण्डेयपुराण ७ अग्निदैवतपुराण भविष्यत्पुराण ९ ब्रह्मविवर्तपुराण १० लिङ्गपुराण ११ वराहपुराण १२ स्कन्दपुराण १३ वामनपुराण १४ मत्स्यपुराण १५ कूर्मपुराण १६ गरुडपुराण १७ ब्रह्माण्डपुराण १८ इति अष्टादशपुराणानि तेषां ज्ञाता भविष्यति। पुनः मानवीस्मृति १ आत्रेयीस्मृति २ वैष्णवीस्मृति ३ हारीतीस्मृति ४ याज्ञवल्कीस्मृति ५ उशनसीस्मृति ६ आङ्गिरसीस्मृति ७ यामीस्मृति ८ आपस्तम्बीस्मृति ९ सांवर्तीस्मृति १० कात्यायनीस्मृति ११ बार्हस्पतीस्मृति १२ पाराशरीस्मृति १३ शाङ्खीस्मृति १४ दाक्षीस्मृति १५ गौतमीस्मृति १६ शान्तातपीस्मृति १७ वैशिष्ठीस्मृति १८ इति अष्टादशस्मृतयः तासामपि ज्ञाता भविष्यति। पुनः ऐन्द्रव्याकरण १ पाणिनिव्याकरण २ जैनेन्द्रव्याकरण ३ शाकटायनव्याकरण ४ आपिशलीव्याकरण ५ चान्द्रव्याकरण ६ सरस्वतीकण्ठाभरणव्याकरण ७ बुद्धिसागरव्याकरण ८ विश्रान्तविद्याधरव्याकरण ९ भीमसेनव्याकरण १० कालापकव्याकरण ११ मुष्टिव्याकरण १२ शैवव्याकरण १३ गौडव्याकरण १४ नन्दिजयोत्पलव्याकरण १५ सारस्वतव्याकरण १६ सिद्धहेमव्याकरण १७ जयहेमव्याकरणेति १८ अष्टादश व्याकरणानि, तेषामपि ज्ञाता भविष्यति। पुनः शिक्षा १ कल्प २ व्याकरण ३ च्छन्दो ४ ज्योतिष ५ निरुक्ति ६ इति ६ षडङ्गानि। वेदाः एवं १० मीमांसा ११ तर्कविद्या १२ धर्म्मशास्त्र १३ पुराण १४ इति चतुर्दश विद्याः, तासामपि ज्ञाता भविष्यति। पुनरपि ऋषभ-

दत्तः किं करोति? इत्याह—'हे देवानुप्रिये! त्वया प्रधानाः स्वप्ना दृष्टाः' इति कृत्वा=इति भणित्वा, वारं २ स्वप्नान् अनुवृंहति=अनुमोदयति। अथ देवानन्दा किं करोति? इत्याह—

तएणं सा देवाणंदा माहणी उसभदत्तस्स अंतिए एअमट्ठं सुच्चा निसम्म हट्ठतुट्ठ जाव हियया जाव करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु उसभदत्तं माहणं एवं वयासी ॥ ११ ॥ एवमेयं देवाणुप्पिआ ! तहमेयं देवाणुप्पिआ ! अवितहमेयं देवाणुप्पिआ ! असंदिद्धमेयं देवाणुप्पिआ ! इच्छियमेअं देवाणुप्पिआ ! पडिच्छिअमेअं देवाणुप्पिआ ! इच्छियपडिच्छियमेअं देवाणुप्पिआ ! सच्चे णं एसमट्ठे, से जहेयं तुब्भे वयहत्ति कट्टु ते सुमिणे सम्मं पडिच्छइ पडिच्छित्ता उसभदत्तेणं माहणेणं सद्धिं उरालाइं माणुस्सगाइं भोगभोगाइं भुंजमाणी विहरइ ॥ १२ ॥

व्याख्या-"तएणं सा देवाणंदा—" ततः सा देवानन्दा ब्राह्मणी ऋषभदत्तस्य समीपे एतं अर्थं श्रुत्वा हृष्टतुष्टा सती मस्तके अञ्जलिं कृत्वा ऋषभदत्तस्य एवं अवादीत्-'हे देवानुप्रिय! त्वया यदुक्तं तत् मम एवमेतत् इति प्रतिवचने प्रत्ययाविष्करणम्। एतदेव स्फुटयति पुनः "तहमेयं" तथैव एतद्यथा भवन्तः प्रतिपाद-

यन्ति, अनेन अन्वयः तद्वचनसत्यता उक्ता। पुनः अवितथमेतत्, व्यतिरेकाभावात्। पुनः असन्दिग्धमेतत्, सन्देहाभावात्। अत एव इष्टं=ईप्सितं वा ममैतत्। पुनः प्रतीष्टं=प्रतीप्सितं वा अभ्युपगतं=युष्मन्मुखात् आगृहीतं वा धर्मद्वययोगोऽत्यन्ताऽऽदरख्यापकः सत्योऽयं अर्थोऽयं यूयं वदथ, इति कृत्वा तान् स्वप्नान् सम्यक् प्रतीच्छति। ततः ऋषभदत्तेन ब्राह्मणेन समं भोगार्हा भोगा भोगभोगाः, तान् भुञ्जमाना विहरति। प्राकृतत्वात् नपुंसकत्वम्। अथ तस्मिन् समये किं जातं? इत्याह—

तेणं कालेणं तेणं समएणं सक्के देविंदे देवराया वज्जपाणी पुरंदरे सयक्कऊ सहस्सक्खे मघवं पागसासणे दाहिणड्ढलोगाहिवई बत्तीसविमाणसयसहस्साहिवई एरावणवाहणे सुरिंदे अरयंबरवत्थधरे आलइअमालमउडे नवहेमचारुचित्तचंचलकुंडलविलिहिज्जमाणगल्ले महिड्ढिए महज्जुइए महाबले महायसे महाणुभावे महासुक्खे भासुरबुंदी पलंबवणमालधरे सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सुहम्माए सभाए सक्कंसि सीहासणंसि, से णं तत्थ बत्तीसाए विमाणवाससयसाहस्सीणं, चउरासीए सामाणिअसाहस्सीणं, तायत्तीसाए तायत्तीसगाणं, चउण्हं लोगपालाणं, अट्ठण्हं अग्गमहिसीणं सपरिवाराणं, तिण्हं परिसाणं, सत्तण्हं अणी-

आणं, सत्तण्हं अणीआहिवईणं, चउण्हं चउरासीए आयरक्खदेवसाहस्सीणं, अन्नेसिं च बहूणं सोहम्मकप्पवासीणं वेमाणिआणं देवाणं देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं अणाईसरसेणावच्चं कारेमाणे पालेमाणे महयाहयनट्टगीयवाइअतंतीतलतालतुडियघणमुइंगपडुपडहवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ ॥ १३ ॥

व्याख्या–"तेणं कालेणं ति" तस्मिन् काले, तस्मिन् समये शक्रस्य आसनविशेषस्य अधिष्ठाता (स्वामी)। ततः शक्रः देवानां मध्ये परमैश्वर्यात् इन्द्र इति देवेन्द्रः=देवेषु राजा, कान्त्यादिभिः अधिकं विराजमानत्वात् इति देवराजः, वज्रं पाणौ=हस्ते यस्य स वज्रपाणिः। असुरादिपुराणां दारणात्=विदारणात् इति पुरन्दरः। शतं क्रतवो=अभिग्रहविशेषाः पञ्चमप्रतिमानां कार्तिकभवे यस्य स शतक्रतुः। कार्तिकश्रेष्ठिसम्बन्धस्तु एवम्–पृथिवीभूषणं नाम पुरम्, प्रजापालो राजा कार्तिकनामा श्रेष्ठी राजमान्यो महर्द्धिकः परमजैनश्रावकः, तेन श्रेष्ठिना श्राद्धप्रतिमानां शतं कृतम्, तेन शतक्रतुरिति लोके प्रसिद्धिर्जाता। अन्यदा मासोपवासी गैरिकनामा परिव्राजकः समागतः। सर्वोऽपि राजादिको नगरलोकः परमभक्तो जातः, परं कार्तिकः श्रावकः तेन गैरिकं न मन्यते, तद्वृत्तान्तं ज्ञात्वा, गैरिको रुष्टो राजानं प्राह–'हे राजन्! अहं तव गृहे पारणं तदा करोमि यदा कार्तिकश्रेष्ठी मम भुञ्जानस्य परिवेषयति।' तदा राजा श्रेष्ठिगृहे गतः, श्रेष्ठिना सत्कृत्य प्रयोजनं पृष्टः राजा प्राह–

'हे भ्रातः! हे महाश्रेष्ठिन्! मम गुरुः गैरिकतापसः तं त्वं परिवेषणेन भोजय।' श्रेष्ठी प्राह–'अहं सम्यक्त्वधारी श्रावको न मम योग्यता, परं तव पुरवासित्वात् "रायाभिओगेणं" इति आगारसद्भावाच्च करिष्यामि' इति अङ्गीकृत्य, राज्ञो गृहे आगत्य, क्षैरेयी परिवेषयित्वा भोजितः। स च (गैरिकतापसः) भुञ्जानो निजाङ्गुल्या घृष्टोऽसीति श्रेष्ठिनं निर्भर्त्सयति स्म। श्रेष्ठी च तदा चेतसि चिन्तितवान्–'अहो! यदा मया दीक्षा न गृहीता, तदा इयं मम हीलना जाता। ततः श्रीमुनिसुव्रतस्वामिसमीपे अष्टाधिकसहस्रवणिक्पुत्रैः सार्धं दीक्षा गृहीता। द्वादशाङ्गानि पठित्वा, द्वादशवर्षाणि दीक्षां पालयित्वा सौधर्मे प्रथमदेवलोके इन्द्रो जातः। गैरिकतापसश्च मृत्वा इन्द्रस्य ऐरावणवाहनत्वेन जातः, इन्द्रं दृष्ट्वा पलायितः। इन्द्रेण धृतः इन्द्रोऽधिरूढः तदा मस्तकद्वयं चक्रे। इन्द्रेणापि रूपद्वयं कृतम्, एवं तेन मस्तकचतुष्टयं इन्द्रेणापि रूपचतुष्टयं, ततोऽवधिना ज्ञात्वा तर्जितः इन्द्रेण–'रे! न जानासि त्वं गैरिको मम वाहनत्वेन जातः?।' ॥ इति कार्तिकश्रेष्ठिकथा ॥

पुनः इन्द्रः कीदृशोऽस्ति? "सहस्सक्खे" सहस्राक्षः, पञ्चमन्त्रिशतानि सन्ति तेषां प्रत्येकं अक्षिद्वयसद्भावात् सहस्रनेत्राणि तानि इन्द्रस्य राजकार्ये अक्षीणीव व्यापृतानि सन्ति। पुनः कीदृशः? मघवा। मघाः देवविशेषाः वा वशे सन्ति यस्य सः। पुनः कीदृशः? "पागसासणे" पाकाः=बलवन्तोऽरयः, पाको वा (दैत्य) दानवविशेषः, तान् तं वा शास्ति। पुनः कीदृशः? दक्षिणार्धलोकाधिपतिः। मेरोः दक्षिणतः सर्वस्य तदायत्तत्वात्। पुनः कीदृशः? ३२ द्वात्रिंशल्लक्षविमानाधिपतिः। पुनः किंभूतः? "ऐरावण" ऐरावणरूपः सुरो वाहनं यस्य सः। पुनः

कीदृशः ? "सुरिंदे" सुराणां इन्द्रः आह्लादकत्वात्। पुनः किंभूतः ? अरजांसि=निर्मलानि अम्बर-वस्त्राणि स्वच्छतया आकाशसदृशानि वस्त्राणि धरति। पुनः कीदृशः ? "आलइय मालमउडे" आलिङ्गितौ=यथास्थानं स्थापितौ माला-मुकुटौ येन सः। पुनः कीदृशः ? नवाभ्यामिव हेम्नः सत्काभ्यां चारुभ्यां आश्चर्यकारिभ्यां- चञ्चलाभ्यां इतस्ततः चलनरूपाभ्यां कुंडलाभ्यां विलिख्यमानौ गल्लौ यस्य सः। पुनः किंभूतः ?। "महड्ढीए" महती ऋद्धिः छत्रादिराजचिन्हरूपा यस्य सः। "महज्जुईए" महती द्युतिः=कान्तिः आभरणादीनां द्युतिर्वा सम-ग्रोचितवस्तुप्राप्तिर्यस्य सः "महब्बले" महत् बलं यस्य सः। "महायसे" महान्यशो यस्य सः। "महाणुभावे" महान् अनुभावः=प्रभावो यस्य सः। "महसुक्खे" महद्देवसम्बन्धि सौख्यं यस्य सः। "भासुरबोंदी" भासुरा=दीप्तिमती बोंदिः=वपुः यस्य सः। "पलंबवणमालधरे" प्रलम्बा वनमाला=आभरणविशेषः पादा-न्तलम्बिनी पञ्चवर्णा पुष्पमाला यस्य सः। ईदृशः सन् सौधर्मे देवलोके सौधर्मावतंसके विमाने सुध-र्मासभायां शक्रे सिंहासने स इन्द्रः, 'णं' वाक्यालङ्कारे तत्र आर्षत्वात् स्त्रीत्वं, ३२ लक्षविमानानां, ८४ सहस्र-सामानिकसुराणां, तथा ३३ त्रयस्त्रिंशानां देवानां पूज्यस्थानीयानां मन्त्रिकल्पानां वा। तथा चतुर्णां सोम १ यम २ वरुण ३ कुबेराणां ४ लोकपालानां, तथा अष्टानां अग्रमहिषीणां-पद्मा १ शिवा २ शची ३ अंजू ४ अमला ५ अप्सरा ६ नवमिका ७ रोहिणी ८ नाम्नीनां सपरिवाराणां, तथा तिसृणां पर्षदां-अभ्यन्तर १ मध्यम २ बाह्य ३ रूपाणां, तथा सप्तानां अनीकानां-गन्धर्व १ नट्ट २ हय ३ गय ४ रह ५ भड ६ वसह ७ रूपाणां,

पुनः ससानीकाधिपतीनां, तथा चतुरशीतयः सहस्राः आत्मरक्षकदेवाः चतुर्दिशं वर्तन्ते। ततः ३६ सहस्राधिकलक्षत्रयमितानां अङ्गरक्षकदेवानां अन्येषां च बहूनां सौधर्मकल्पवासिनां वैमानिकानां देवानां देवीनां च "आहेवच्चं" अधिपतिकर्म=रक्षां। एतत् सामान्यत आरक्षकेणापि क्रियते, अत आह–"पोरेवच्चं" पौरावर्त्यं, सर्वाग्रेसरत्वम्। तच्च स्वामिमान्यजनेऽपि स्यात्, अत आह–"सामित्तं" स्वामित्वं नायकत्वम्। तदपि पोषकत्वं विनापि हरिणयूथाधिपस्येव स्यात्, अत आह–"भट्टित्तं" भर्तृत्वं पोषकत्वम्। अत आह–"महत्तरगत्तं" गुरुतरत्वम्। तदपि आज्ञाविरहितः आज्ञाविकलस्यापि, यथा कस्यचित् वणिजः स्वदासदासीवर्गं प्रति स्यात्, अतः आह–"आणाईसरसेणावच्चं" आज्ञया ईश्वरः आज्ञेश्वरः सेनायाः पतिः तस्य कर्म्म आज्ञेश्वरसेनापत्यं स्वसैन्यं प्रति अद्भुतं आज्ञाप्राधान्यं इत्यर्थः। "कारेमाणे" कारयन् नियुक्तैः, "पालेमाणे" पालयन् स्वयमेव, एतादृशः सन् किं कुर्वन् आस्ते? अत आह–"महता रवेण" इति योगः, अहतं अव्यवच्छिन्नं यन्नाट्यं तत्र यद्गीतं यानि च वादित्राणि तन्त्री–वीणा–तलताला=हस्तस्फोटरवाः, यद्वा तलाः=हस्ताः, तालाः=कांसिकाः। "तुडियत्ति" शेषतूर्याणि घनमृदङ्गो मेघध्वनिमर्दलः यच्च पटुपटहवादितं। ततः कर्मधारयगर्भो द्वन्द्वः, ततश्च तेषां यो रवः तेन दिव्यानि देवजनोचितानि भोगभोगानि, आर्षत्वात् नपुंसकत्वम्। भुञ्जानो विहरति=आस्ते इति॥ पुनः स किं कुर्वन्? इत्याह–

**इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणे २ विहरइ, तत्थणं समणं**

भगवं महावीरं जंबुद्दीवे दीवे भारहे वासे दाहिणड्ढभरहे माहणकुंडगामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंतं पासइ, पासित्ता हट्ठतुट्ठचित्तमाणंदिए णंदिए परमानंदिए पीअमणे परमसोमणस्सिए हरिसवसविसप्पमाणहियए धाराहयनीवसुरभिकुसुमचंचुमालइयऊससियरोमकूवे विकसियवरकमलनयणवयणे पयलियवरकडगतुडियकेऊरमउडकुंडलहारविरायंतवच्छे पालंवपलंवमाणघोलंतभूसणधरे ससंभमं तुरिअं चवलं सुरिंदे सीहासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता वेरुलियवरिट्ठरिट्ठंजणनिउणोवि (वचि)अमिसिमिसिंतमणिरयणमंडिआओ पाउयाओ ओमुअइ, ओमुइत्ता एगसाडिअं उत्तरासंगं करेइ, करित्ता अंजलिमउलिअग्गहत्थे तित्थयराभिमुहे सत्तट्ठ पयाइं अणुगच्छइ, सत्तट्ठ पयाइं अणुगच्छित्ता वामं जाणुं अंचेइ, अंचित्ता दाहिणं जाणुं धरणियलंसि साहट्टु तिक्खुत्तो मुद्धाणं धरणियलंसि निवेसेइ, निवेसित्ता ईसिं पच्चुन्नमइ, पच्चुण्णमित्ता कडगतुडिअथंभिआओ

भुआओ साहरेइ, साहरित्ता करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ १४ ॥

व्याख्या–अथ इन्द्रः इमं जम्बूद्वीपं केवलकल्पं सम्पूर्णं विस्तीर्णेन अवधिज्ञानेन "आभोएमाणे" आभोगयन् पश्यन् विहरति=आस्ते, तत्प्रस्तावे जम्बूद्वीपे दक्षिणभरतार्धे ब्राह्मणकुण्डग्रामे ऋषभदत्तस्य भार्यायाः देवानन्दायाः कुक्षौ भगवन्तं अवतीर्णं पश्यति, दृष्ट्वा च हृष्टः तुष्टः नन्दितः समृद्धितरतां प्राप्तः, परमानन्दितोऽतीवसमृद्धिभावं गतः, धाराहतं यत् नीपस्य=कदम्बस्य सुरभिकुसुमं तदिव "चंचुमालइयत्ति" पुलकितो अत एव "ऊससियत्ति" उच्छ्रितरोमकूपश्च यः स तथा, पुनः विकसितानि उत्फुल्लानि भगवतोऽवतरणात् उत्पन्नात् आनन्दात् वरकमलवत् आननं नयने च यस्य। पुनः प्रचलितानि सम्भ्रमात् कंपितानि वराणि कटकानि=कङ्कणानि, त्रुटिकाश्च=बाहुरक्षिकाः, केयूराणि=बाहुमूलभूषणानि च यस्य, मुकुटं च किरीटं च कर्णाभरणे कुण्डले यस्य। पुनः हारविराजद्वक्षाः, ततः पदद्वयस्य कर्मधारयः। पुनः प्रालम्बो झुंबनकं मुक्तामयं प्रालम्बमानं "घोलंत" दोलायमानं भूषणं=आभरणं धारयति यः सः। तथा ससम्भ्रमं सादरं सौत्सुक्यं "तुरिअं" वेगवच्च यथा स्यादेवं सुरेन्द्रः सिंहासनात् अभ्युत्तिष्ठति–ततः पादपीठात् अवतरति–उत्तरति, ततः पादुके अवमुञ्चति। परं पादुके कीदृशे स्तः? इत्याह–वैडूर्येण मध्यवर्तिना वरिष्ठे रिष्टाञ्जने रत्नविशेषौ ययोः ते। पुनः निपुणेन शिल्पिना "ओविअत्ति" परिकर्मिते। पुनः "मिसिमिसिंत" अत एव चिकिचिकायमाने। पुनः

मणिभिः चन्द्रकान्तादिभिः रत्नैश्च कर्केतनादिभिः मण्डिते ये ते तथा। ततः पदचतुष्टयस्य कर्मधारयः। एवंविधे पादुके मुक्त्वा, ततः एकखण्डशाटकमयं उत्तरासङ्गं वैकक्षं करोति, कृत्वा च अञ्जलिना मुकुलितौ मुकुलाकृती कृतौ अग्रहस्तौ येन, तीर्थङ्करस्य अभिमुखः सन् ससाष्टपदान् अनुगच्छति, ततः वामं जानुं "अंचेइ दाहिणं जाणुं धरणियलंसि कट्टु" पृथ्वीतले कृत्वा, "साहट्टु" इति पाठे तु संहृत्य=निवेश्य, "तिक्खुत्तो" त्रिःकृत्वः=त्रीन् वारान् मस्तकं धरणीतले निवेश्य "ईसिं पच्चुन्नमइ" ईषत्=मनाक् प्रत्युन्नमति। ततः एवंविधे भुजे "साहरेइत्ति" ऊर्ध्वं नयति=स्तम्भिकोपमे करोति। कीदृशे भुजे ?। कङ्कण १ बाहुरक्षाभ्यां २ स्तम्भिते। ततः करतलाभ्यां परिगृहीतं=कृतं "सिरसावत्तं" आवर्तनं=आवर्तः, शिरसि आवर्तो यस्य सः तम्। मस्तके अञ्जलिं कृत्वा एवं अवादीत्—

नमुत्थु ण अरिहंताणं भगवंताणं, ॥ १ ॥ आइगराणं तित्थयराणं सयंसंबुद्धाणं ॥ २ ॥ पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीयाणं पुरिसवरगंधहत्थीणं ॥ ३ ॥ लोगुत्तमाणं लोगनाहाणं लोगहियाणं लोगपईवाणं लोगपज्जोअगराणं ॥ ४ ॥ अभयदयाणं चक्खुदयाणं मग्गदयाणं सरणदयाणं जीवदयाणं बोहिदयाणं ॥ ५ ॥ धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं ॥ ६ ॥ दीवो ताणं सरणं गई पइट्ठा अप्पडि-

हयवरनाणदंसणधराणं विअट्टछउमाणं ॥ ७ ॥ जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोअगाणं ॥ ८ ॥ सव्वण्णूणं सव्वदरिसीणं, सिवमयलमरुअमणंतमक्खयमव्वाबाहमपुणरावित्तिसिद्धिगइनामधेयं ठाणं संपत्ताणं, नमो जिणाणं जियभयाणं ॥ ९ ॥

व्याख्या—"नमुत्थु णं" नमो=नमस्कारो अस्तु=भवतु। "णं" इति वाक्यालङ्कारे। नमोऽस्तु इति सर्वत्र सम्बध्यते। सर्वत्र प्राकृते चतुर्थीस्थाने षष्ठी। अत्र पाठत्रयम्—'अरहंताणं' १ 'अरिहंताणं' २ 'अरुहंताणं' ३। तत्र चतुःषष्टिसुरेन्द्रैः कृतां पूजां अर्हन्ति इति अर्हन्तः तेभ्यः ॥ १ ॥ "अरिहंताणं" अरीन्=कर्मरूपशत्रून् घ्नन्ति इति अरिहन्तारः ॥२॥ "अरुहंताणं" भवे अप्ररोहणात् बहुवचनम्। अद्वैतोच्छेदेन अर्हताम्, बहुत्वख्यापनार्थं नमस्कारकर्तुः फलस्य अतिशयज्ञापनार्थं च। भगवंताणं" भगशब्दस्य चतुर्दश: १४ अर्थाः—तत्र अर्कयोनि २ अर्थद्वयरहिता, द्वादश (१२) अर्थग्राह्यास्ते च एवं ज्ञानवन्तः १ माहात्म्यवन्तः २ यशस्विनः शाश्वतवैरिणां वैरोपशमनात् ३ वैराग्यवन्तः राजश्रीत्यजनात् ४ मुक्तिमन्तः ५ रूपवन्तः ६ वीर्यवन्तः अपरिमितबलत्वात् ७ प्रयत्नवन्तः तपः[१२]कर्मणि उत्साहवत्त्वात् ८ इच्छावन्तो भवात् जन्तूनामुद्धरणे ९ श्रीमन्तः—चतुस्त्रिंशदतिशयविराजमानत्वात् १० धर्मवन्तः ११ ऐश्वर्यवन्तः अनेकदेवकोटिसेव्यत्वात् १२ ततश्चतुर्थी तेभ्यः संपदा १ "आइगराणं" श्रुतधर्मस्य अर्थापेक्षया नित्यत्वेऽपि स्वस्वतीर्थेषु आदिकरणात् "तित्थयराणं" तीर्थं चतुर्विधः सङ्घः प्रथमगणधरो वा तत्स्थापनात् "सयंसंबुद्धाणं" स्वयं आत्मना बुद्धाः परोपदेशं विना

तत्त्वाऽवबोधात् संपदा २। कुत एवम् ?। यतः "पुरिसुत्तमाणं" पुरुषोत्तमेभ्यः पुरुषेषु संसारेऽपि परार्थप्राधान्यम् १ स्वार्थगौणत्वम् २ औचित्यम् ३ अदीनभावत्वम् ४ कृतज्ञता ५ गाम्भीर्य च ६ इत्यादिगुणैरुत्तमाः, पुनरुत्तमत्वमेव उपमात्रयेण आह–"पुरिससीहाणं" पुरुषाः पुरुषेषु सिंहा इव कर्मशत्रुषु क्रूरत्वात् परीषहेषु सावही(हे)लनत्वात् उपसर्गेषु निर्भयत्वाच्च। पुनः "पुरिसवरपुंडरीयाणं" पुरुषाः वरपुण्डरीकाणि इव, पुण्डरीकाणि=धवलकमलानि यतो भगवन्तः कर्मपङ्के जाताः भोगजलैर्वर्धिताः ततः उभयमपि त्यक्त्वा जगल्लक्ष्मीनिवासा नृपादिसेव्याश्च जाताः, यद्वा वरपुण्डरीकाणि सेवकानां सन्तापहरत्वात् भूषाकृतित्वाच्च छत्राणीव। पुनः "पुरिसवरगंधहत्थीणं" पुरुषवरगन्धहस्तिभ्यः पुरुषा गन्धहस्तिन इव, यथा गन्धहस्तिनां गन्धेन अन्ये गजा भज्यन्ते, तथा भगवद्विहारेण ईतिमारिप्रमुखा उपद्रवा दूरतो यान्ति संपदा ॥ ३ ॥ पुनः "लोगुत्तमाणं" लोकस्य=भव्यलोकस्य मध्ये उत्तमाः, (३४) चतुस्त्रिंशत् अतिशयसहितत्वात्। पुनः "लोगनाहाणं" लोकस्य=विशिष्टभव्यलोकस्य मध्ये नाथाः अलब्धसम्यक्त्वादेः प्रापणात्, योगस्य प्राप्तस्य रक्षणात् क्षेमस्य च कारित्वात्। पुनः "लोगहियाणं" लोकस्य एकेन्द्रियादिप्राणिगणस्य पञ्चास्तिकायात्मकस्य वा सम्यक् रक्षण–प्ररूपणाभ्यां हितेभ्यः। पुनः "लोगपईवाणं" लोकस्य=देशनायोग्यनरादिरूपस्य प्रदीपा इव प्रदीपाः तेभ्यः मिथ्यात्वतमोहरणात्। पुनः "लोगपज्जोअगराणं" लोकस्य लोकालोकरूपस्य प्रवचनप्रवर्तनेन प्रद्योतं=प्रकाशं कुर्वन्ति संपदा ॥ ४ ॥ पुनः "अभयदयाणं" प्राणान्तकारिष्वपि न भयं ददते, अथवा

इहलोक १ परलोक २ आदान ३ अकस्मात् ४ आजीविका ५ मरण ६ अश्लोकरूप ७ सप्तभयहरणात्। "चक्खुदयाणं" चक्षुरिव चक्षुः=श्रुतज्ञानं तत्-दयन्ते। पुनः "मग्गदयाणं" मार्ग=सम्यक् दर्शनादिकं मोक्षपथं दयन्ते। पुनः "सरणदयाणं" शरणं=त्राणं बहूपद्रवैः पीडितानां तत्त्वतो निर्वाणं दयन्ते। पुनः "जीवदयाणं" जीवनं=जीवो भावप्राणधारणं अमरणधर्मत्वं दयन्ते। अथवा जीवेषु दया येषां ते। पुनः क्वचित् "बोहिदयाणं" इत्यपि दृश्यते,-तत्र बोधिः=जिनधर्मप्राप्तिः तां दयन्ते संपदा ॥५॥ पुनः "धम्मदयाणं" धर्म=देशसर्वचारित्ररूपं दयन्ते। पुनः "धम्मदेसयाणं" धर्म=श्रुतचारित्ररूपं देशयन्ति। पुनः "धम्मनायगाणं" धर्मस्य=क्षायिकज्ञानादिरूपस्य नायकाः तद्वशीकरणात्। पुनः "धम्मसारहीणं" धर्मरूपस्य रथस्य सारथय इव सारथयः, संयमतुल्यस्य रथस्य, आत्मतुल्यस्य रथिकस्य, प्रवचनतुल्यस्य तुरङ्गमस्य, सम्यक्प्रवर्तनात् रक्षणाच्च ॥ अत्र मेघकुमारदृष्टान्तो यथा—

श्रेणिको राजा, धारिणी राज्ञी, तयोः मेघकुमारः पुत्रः श्रीमहावीरवाणीं श्रुत्वा प्रतिबुद्धः, अष्टौ भार्याः त्यक्त्वा दीक्षां गृहीतवान्। रात्रौ प्रान्ते सुप्तस्य प्रविशद्भिः निर्गच्छद्भिश्च साधुभिः तथा सङ्घट्टितो यथा क्षणमपि निद्रां न प्राप। ततो विचारितं मेघकुमारेण-'अहो! एकस्यां रात्रौ अहमेवं सङ्घट्टितः, तदा सदा इत्थं कदर्थनां कथं सहिष्ये?, ततः प्रातः प्रभुं पृष्ट्वा गृहस्थावासं श्रयिष्ये' इति चिन्तयित्वा भगवत्समीपे गतः। तदा भगवता प्रोक्तम्-'हे वत्स! त्वं इतो भवात् तृतीये भवे वैताढ्यपर्वतपृथिव्यां सहस्रहस्तिनां यूथपतिः षड्दन्तः

श्वेतश्च सुमेरुप्रभनामा हस्ती अभूः। तत्र दवाग्निना भीतः सन् सरोवरे प्रविष्टः पङ्के मग्नो वैरिहस्तिना दन्तैर्विद्धः सप्तदिनानि व्यथां सहित्वा १२० वर्षाणि आयुः प्रपाल्य मृत्वा विन्ध्याचलपर्वते पुनश्चतुर्दन्तो रक्तवर्णः ७०० सप्तशतहस्तिनीनायको मेरुप्रभनामा हस्ती जातः। एकदा दावानलं दृष्ट्वा जातिस्मरणं समुत्पन्नम्। तेन योजनमानं स्थण्डिलं कृतम्, वारत्रयं तृणकाष्ठादिदूरीकरणेन शोधितम्। दावानले लग्ने सति अन्यैः जीवैः स्थण्डिले भृतेऽपि स्वयं स्थितः, कर्णमूले कण्डूयनार्थं पादः उत्पाटितः। तत्र पादस्थाने तत्क्षणे एव शशकः स्थितः। त्वमपि कृपया तथैव स्थितो 'मा म्रियतां वराकः' इति। ततः सार्धद्वयदिने दावानल उपशान्तः। शशादयो गताः, तदा दिनत्रयान्ते त्वं पादं मुञ्चन् गिरेः शृङ्गमिव धरित्र्यां पतितः। कृपया मृत्वा त्वं मेघकुमारो जातः। तदानीं हस्तिसङ्घट्टने पादतोलनेन न दुःखी जातः। अधुना साधुसङ्घट्टितो दुःखी भवसि ? एवं श्रीमहावीरदेवेन धर्मे स्थिरीकृतः। ततो मेघकुमारेण अभिग्रहो गृहीतः—"अहं नेत्रद्वयं मुक्त्वा सङ्घट्टनादौ मनसाऽपि न दुःखं करिष्यामि।" ततः तपः तप्त्वा मासिकीं संलेखनां कृत्वा विजये देवो जातः। ततः च्युत्वा महाविदेहे सेत्स्यति॥ इति मेघकुमारदृष्टान्तः समाप्तः॥

इति श्रीकल्पसूत्रस्य प्रथमं व्याख्यानं श्रीसमयसुन्दरोपाध्यायविरचितं सम्पूर्णम्[१]॥

[१ अत्रैव प्रथमव्याख्यानस्य समाप्तिः समुचिता, तथैव बहुषु मूलादर्शेषु निर्देशवत्त्वात्, वाचकानामपि पाठे सुकरत्वाच्च।]

## अथ द्वितीयं व्याख्यानम् ॥

पुनः "धम्मवरचाउरंतचक्कवट्टीणं" धर्मेषु वरः=श्रेष्ठः, तेन नरकादिचतुर्गत्यन्तकरणाच्चतुरान्तेन मिथ्यात्वादिरिपूच्छेदकत्वाच्चक्रेणेव वर्तितुं शीलं येषां ते संपदा ॥ ६ ॥ पुनः "दीवोताणं" इत्यादिषु पञ्चपदेषु चतुर्थ्यर्थे षष्ठ्यन्तपदानि योज्यानि। तत्र दीप इव दीपः समस्तवस्तुप्रकाशकत्वात्। अथवा दीपो भवाम्बुधौ दुःखकल्लोलैरभिहतानां आश्वासहेतुत्वात्। पुनः "त्राणं" अनर्थप्रतिहननं, तस्य हेतुत्वात्। पुनः "शरणं" अर्थसंपादनम्, तस्य हेतुत्वात्। पुनः "गई" गम्यते दुःस्थैः सौख्यार्थं आश्रीयते इति गतिः। पुनः "पइट्ठा" प्रतिष्ठन्ति अस्यां प्रतिष्ठा=आधारः संसारगर्ते पततां जीवानां आलम्बनत्वात्। पुनः "अप्पडिहयवरनाणदंसणधराणं" अप्रतिहते=कटादिभिः अस्खलिते वरे क्षयिकत्वात् केवलज्ञानदर्शने ते धरन्तीति। पुनः "विअट्टछउमाणं" चत्वारि घातिकर्माणि संसारो वा छद्म उच्यते तत् व्यावृत्तं(क्षीणं) येभ्यस्ते संपदा ॥ ७ ॥ पुनः "जिनेभ्यो" रागादिजेतृभ्यः। पुनः "जापकेभ्यः" अन्यैरपि तान् रागादीन् जापयद्भ्यः। पुनः "तीर्णेभ्यः" संसारसमुद्रम् ( भवार्णवपारंगतेभ्यः )। पुनः "तारकेभ्यः" अन्येषामपि उपदेशवर्तिनाम्। पुनः "बुद्धेभ्यः" अज्ञान-

निद्राप्रसुप्ते जगति बुद्धेभ्यः स्वयं तत्त्वं। पुनः "बोधकेभ्यः" अन्यानपि तत्त्वं बोधयन्तीति बोधकाः तेभ्यः। पुनः "मुक्तेभ्यः" बाह्याभ्यन्तरग्रन्थिबन्धनात्। पुनः "मोचकेभ्यः" परेषामपि तस्मात् संपदा ॥ ८ ॥ एतानि विशेषणानि भवावस्थामाश्रित्य उक्तानि, अथ सिद्धावस्थामाश्रित्य उच्यन्ते–पुनः "सव्वन्नूणं" सर्वविशेषरूपतया जानन्ति। पुनः "सव्वदरिसीणं" सामान्यरूपतया पुनः पश्यन्ति, न तु वैशेषिकमतवत् जडाः। पुनः कीदृशेभ्यः? एवंविधं स्थानं प्राप्तेभ्यः। किंविशिष्टं स्थानम्?। शिवम्=निरुपद्रवम्। पुनः किंविशिष्टं स्थानम्?। अचलम्, स्वभावप्रयोगकृतचलनाभावात्। पुनः किंविशिष्टं स्थानम्?। अरुजम्, आधिव्याध्यभावात्। पुनः किंविशिष्टं स्थानम्?। अनन्तम्, अनन्तार्थविषयज्ञानस्वरूपत्वात्, अथवा अनन्तसुखादिरूपत्वात्। पुनः किंविशिष्टं स्थानम्?। अक्षयं=अनाशम्, साद्यनन्तत्वात्। पुनः किंविशिष्टं स्थानम्?। अव्याबाधम्, पीडाकारिकर्माभावात्। पुनः किंविशिष्टं स्थानम्?। अपुनरावृत्ति, पुनः संसारे अवतरणाभावात्। पुनः किंविशिष्टं स्थानम्?। सिद्धिगतिनामधेयम्, सिद्धिः=लोकान्तक्षेत्रम्, स चासौ गम्यमानत्वात् गतिश्च सैव नामधेयं यस्य तत् तादृशं स्थानं व्यवहारतः सिद्धिक्षेत्रं, निश्चयतो यथास्थितं स्वं स्वरूपं प्राप्तेभ्यः अशेषकर्मक्षयेण। "नमो जिणाणं" नमो जिनेभ्यः आद्यन्तकृतो नमस्कारो मध्यव्यापीति। पुनर्जितभयेभ्यो भवप्रपञ्चनिवृत्तेः संपदा ॥ ९ ॥ न चात्र पौनरुक्त्यम्, यतः "स्वाध्याये १ ध्याने २ तपसि ३ औषधे ४ उपदेशे ५ स्तुतौ ६ सद्गुणकीर्तने च वारं वारं कृतेऽपि पुनरुक्तदोषो न भवेत्"। अनेन जिनजन्मादिषु शक्रः स्तौति जिनान् इति शक्रस्तव उच्यते। अत्र

शक्रस्तवे त्रयस्त्रिंशत् ३३ पदानि, नव ९ संपदः, द्वे शते द्वाषष्टिश्च २६२ वर्णाः ॥ अथ पूर्वाचार्या एतत् शक्रस्तवानन्तरं त्रिकालभाविजिनवन्दनार्थं इमां गाथां पठन्ति—"जे अ अईआसिद्धा" ये अतीताः सिद्धाः, "जे अ भविस्संति णागए काले" ये अनागते काले भविष्यन्ति, "संपइ अ वट्टमाणा" संप्रति ये वर्तमानाः "सवे तिविहेण वंदामि" ॥ सर्वान् त्रिविधेन मनो–वाक्–कायैः वन्दामि । ननु–द्रव्यार्हन्तोऽपि नरकस्था भावार्हत इव वन्दनार्हा भवन्ति ?। ओम्, भरतेन मरीचिवत्, इति सामान्यतः सर्वान् भावार्हतः स्तुत्वा। अथ पुनरधिकं वीरं स्तौति—

नमुत्थु णं समणस्स भगवओ महावीरस्स आइगरस्स चरमतित्थयरस्स पुवतित्थयरनिद्दिट्ठस्स जाव संपाविउकामस्स ॥ वंदामि णं भगवंतं तत्थ गयं इह गए, पासउ मे भगवं तत्थ गयं इह गयंतिकट्टु समणं भगवं महावीरं वंदइ नमंसइ, वंदित्ता नमंसित्ता सीहासणवरंसि पुरत्थाभिमुहे सन्निसन्ने ॥ तए णं तस्स सक्कस्स देविंदस्स देवरन्नो अयमेआरूवे अब्भत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था ॥ १५ ॥

व्याख्या–"नमोऽस्तु" मम श्रमणस्य भगवतो महावीरस्य आदिकरस्य चरमतीर्थङ्करस्य पूर्वतीर्थङ्करनिर्दिष्टस्य "जाव संपाविउकामस्स" अत्र यावत्करणात्। "सयं संबुद्धाणं" इत्यत आरभ्य "ठाणं संपत्ताणं" इतिपर्यन्तं

ग्राप्तम्। इह यद्यपि भगवतः सिद्धिगमने कामो नास्ति, तथापि तदानुरूपवेष्टनात् संप्राप्तुं काम इव संप्राप्तुकामः, तत्र असंप्राप्त इत्यर्थः। "वंदामि भगवंतं तत्थ गयं" तत्र ब्राह्मणकुंडग्रामे देवानन्दाकुक्षिगतं अहं "इह गए त्ति" सौधर्मे स्थितः सन्, "पासउ मे भयवं तत्थ गए इह गयंतिकट्टु" पश्यतु मां भगवान् तत्र गतः इह गतं मां इति कृत्वा=इति भणित्वा श्रमणं=भगवन्तं महावीरं, वन्दते=पूर्वोक्तस्तुत्या नमस्यति, शिरोनमनेन सिंहासने पूर्वाभिमुखः "सन्निसन्ने" उपविष्टम्। तत्र किं कृतवान्? इत्याह–"तए णं तस्स०"। ततः तस्य इन्द्रस्य एतद्रूपः सङ्कल्प उत्पन्नः। कीदृशः सङ्कल्पः?। "अब्भत्थिए" आत्मनि अधि अध्यात्म, तत्र भव आध्यात्मिक आत्म-विषय इत्यर्थः। पुनः कीदृशः?। "चिंतिए" चिन्तात्मको न ध्यानात्मकः, स च अप्रार्थितोऽपि स्यात्। अतः "पत्थिए" प्रार्थना संजाता अस्मिन् इति प्रार्थितः, अभिलाषात्मक इति भावः। पुनः कीदृशः?। "मनोगतः"। कः सङ्कल्पः? इत्याह—

**न खलु एयं भूअं, न एयं भव्वं, न एयं भविस्सं, जं णं अरिहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंतकुलेसु वा पंतकुलेसु वा तुच्छकुलेसु वा दरिद्दकुलेसु वा किवणकुलेसु वा भिक्खागकुलेसु वा माहणकुलेसु वा, आयाइंसु वा, आयाइंति वा आयाइस्संति वा ॥ १६॥**

---

१ "मोक्षे भवे च सर्वत्र, निःस्पृहो मुनिसत्तमः ॥" इति वचनात्।

एवं खलु अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा, उग्गकुलेसु वा भोगकुलेसु वा राइण्णकुलेसु वा इक्खागकुलेसु वा खत्तियकुलेसु वा हरिवंसकुलेसु वा अन्नयरेसु वा तहप्पगारेसु वा विसुद्धजाइकुलवंसेसु आयाइंसु वा आयाइंति वा आयाइस्संति वा ॥ १७ ॥

व्याख्या–"न एयं भूअं" न एवं पूर्वं जातम् ॥१॥ "न एयं भवं" नापि एवं भवति ॥२॥ "न एयं भविस्सं" नापि एवं भविष्यति ॥ ३ ॥ यत् अर्हन्तो वा १ चक्रवर्तिनो वा २ बलदेवा वा ३ वासुदेवा वा ४ एतेषु सप्तकुलेषु "आयाइंसु" आयाति, "आयधातुः" आगमे जन्मनि प्रयुज्यते, तत्र आयासिषुर्जज्ञिरे १ आयान्ति वा जायन्ते २ "आयाइस्संति" जनिष्यन्ति ३। कीदृशेषु कुलेषु ?। "अंतकुलेसु वा" अन्त्यानि अन्त्यवर्णत्वात् शूद्रकुलानि तेषु १। "पंतकुलेसु वा" प्रान्तानि=अधमानि तेषु २। "तुच्छकुलेसु वा" तुच्छानि कुटुम्बस्य ऋद्धेर्वा अल्पत्वेन ३। "दरिद्दकुलेसु वा" दरिद्राणि सर्वथा निर्धनानि तेषु ४। "किवणकुलेसु वा" किराटादि तद्गनाः(?) तेषु (कृपणकु०)५। "भिक्खागकुलेसु वा" भिक्षाचराः तालाचरादयः तेषु ६। "माहणकुलेसु वा" ब्राह्मणा धिग्जातयः तेषु ७। एतेषु सप्तकुलेषु एते=अर्हदादयः चत्वारो न आगताः=न आयान्ति न आगमिष्यन्ति ॥ परं एवं वर्तते–एते अर्हदादयः ४ उग्रादि ७ कुलेषु समागच्छन्ति। कीदृशेषु कुलेषु ? इत्याह–"उग्गकुलेसु वा" उग्राः श्रीआदिनाथेन आरक्षकत्वे ये नियुक्ताः तेषु १। "भोगकुलेसु वा" भोगा ये पूज्यत्वेन=गुरुत्वेन स्थापिताः तेषु २। "राइ-

ग्रकुलेसु वा" राजन्या ये वयस्यतया मित्रत्वेन स्थापिताः तेषु ३। "इक्खागकुलेसु वा" इक्ष्वाकुवंशो आद्य-
वंश्याः तेषु ४। "खत्तियकुलेसु वा" क्षत्रियाः श्रीऋषभदेवेनैव शेषप्रकृतितया स्थापिता राजकुलीनाः तेषु ५।
"हरिवंशकुलेसु वा" हरिवर्षक्षेत्रात् आनीतात् युगलात् उद्भवेषु ६। "अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइ-
कुलवंसेसु वा" अन्यतरेषु ज्ञात १ भट २ मल्लकि ३ लेच्छकि ४ कौरव्यादिकुलेषु तत्र ज्ञाताः श्रीऋषभस्वजन-
वंशजा इक्ष्वाकुवंश्या एव, १ नागा वा नगवंशजाः २ भटाः=शौर्यवन्तो ये योधाः ३ मल्लकिनो लेच्छकिनश्च
राजविशेषाः ४ कौरव्याः=कुरुवंशजाः ५ जातिः मातृपक्षः, कुलं पितृसमुत्थं विशुद्धे जातिकुले येषु वंशेषु=
पुरुषान्वयेषु, एषु उत्तमकुलवंशेषु आगताः १ आगच्छन्ति २ आगमिष्यन्ति ३ च।

अथ च अयं श्रीमहावीरदेवो ब्राह्मणकुले आयातः तत् कथं? इत्याह—

अत्थि पुण एसेऽवि भावे लोगच्छेरयभूए अणंताहिं उस्सप्पिणीहिं ओसप्पिणीहिं विइक्कंताहिं समुप्पज्जइ, (१००) नामगुत्तस्स वा कम्मस्स अक्खीणस्स अवेइयस्स अणिज्जिण्णस्स उदएणं जं णं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंतकुलेसु वा पंतकुलेसु वा तुच्छ० दरिद्द० भिक्खाग० किविण० माहण० आयाइंसु वा आयाइंति वा आयाइस्संति वा, कुच्छिंसि गब्भत्ताए वक्कमिंसु वा वक्कमंति वा वक्कमिस्संति वा, नो चेव णं जोणीजम्मणनिक्खमणेणं निक्खमिंसु

वा निक्खमंति वा निक्खमिस्संति वा ॥ १८ ॥ अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते ॥ १९ ॥

व्याख्या—"अत्थि पुण" अस्ति पुनः एषोऽपि भावो भवितव्यताख्यः पदार्थः समुत्पद्यते, लोके आश्चर्यभूतः, अनन्ताभिः उत्सर्पिणीभिः अनन्ताभिः अवसर्पिणीभिश्च उत्पद्यते, कथं नाम गोत्रस्य—गोत्रकर्मणः नामकर्मणोऽथवा नाम्ना संज्ञया गोत्रस्य—नीचैर्गोत्रस्य अक्षीणस्य स्थितेः अक्षयात्। पुनः अवेदितस्य तत् रसस्य अननुभूतत्वात्, पुनः अनिजीर्णस्य नाम तत्प्रदेशानां जीवप्रदेशेभ्योऽपरिशाटनात्, उदयेन यत् अर्हदादयः चत्वारः अन्तकुलादिषु सप्तसु आगता आगच्छन्ति आगमिष्यन्ति परं "नो" नैव "जोणीजम्मणनिक्खमणेणं" योन्या जन्मार्थं निष्क्रमणेन निरक्रमिषुः निष्क्रामन्ति निष्क्रमिष्यन्ति ॥ अथ च अयं श्रमणो भगवान् महावीरदेवः जम्बूद्वीपे भरतक्षेत्रे ब्राह्मणकुण्डग्रामे ऋषभदत्तस्य भार्याया देवानन्दायाः कुक्षौ अवतीर्णः। ततः किं कर्तव्यं? इत्याह—

तं जीअमेअं तीअपच्चुप्पन्नमणागयाणं सक्काणं देविंदाणं देवरायाणं, अरहंते भगवंते तहप्पगारेहिंतो अंतकुलेहिंतो पंतकुलेहिंतो तुच्छकुलेहिंतो दरिद्दकुलेहिंतो भिक्खागकुलेहिंतो किविण-

कुलेहिंतो माहणकुलेहिंतो वा तहप्पगारेसु उग्गकुलेसु वा भोगकुलेसु वा रायन्नकुलेसु वा नायखत्तियहरिवंसकुलेसु वा अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु जाव रज्जसिरिं कारेमाणेसु पालेमाणेसु साहराविनए, तं सेयं खलु ममवि समणं भगवं महावीरं चरमतित्थयरं पुव्वतित्थयरनिद्दिट्ठं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तियकुंडग्गामे नयरे नायाणं खत्तियाणं सिद्धत्थस्स खत्तियस्स कासवगुत्तस्स भारियाए तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहराविनए। जेऽवि य णं से तिसलाए खत्तियाणीए गब्भे तंपि य णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहराविनएत्तिकट्टु एवं संपेहेइ, एवं संपेहित्ता हरिणेगमेसिं पायत्ताणियाहिवइं देवं सद्दावेइ, सद्दावेत्ता एवं वयासी ॥ २० ॥

व्याख्या–"तं जीअमेअंत्ति" ततः इन्द्राणां इदं जीतं=आचरितं कल्पो वर्तते, त्रयोऽप्येकार्थाः। किंविशिष्टानां इन्द्राणाम्?। "तीअपच्चुप्पन्नमणागयाणंत्ति" अतीतानां वर्तमानानां अनागतानां च "तीअत्ति" तीत्यादौ

इन्द्राणां संहरणाचारः ।

इत्यनेन अकारलोपे तीतमिति। किं जीतं यत् अर्हदादीन् अन्तकुलादिभ्यः ससभ्यः उग्रकुलादिषु "साहराविचए" संक्रमयितुं (मोचयितुं) "त्तिकट्टु" इति कृत्वा, इन्द्रः किं कृतवान्? इत्याह—"एवं संपेहेइत्ति", इन्द्र एवं पर्यालोचयति पर्यालोचयित्वा हरिनैगमेषिणं हरेरिन्द्रस्य नैगमेषी=आदेशप्रतीच्छकः इति व्युत्पत्त्या अन्वर्थनामानं "पायत्ताणियाहिवइं" पदात्यनीकाधिपतिं "देवं सद्दावेइ" आकारयति। आकारयित्वा एवं अवादीत्=कथयति स्म। किं अवादीत्? तदाह—

एवं खलु देवाणुप्पिआ! न एअं भूअं, न एअं भवं, न एअं भविस्सं, ज णं अरिहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंत० वा पंत० किविण० दरिद्द० तुच्छ० भिक्खाग०, आयाइंसु वा ३, एवं खलु अरिहंता वा चक्क० बल० वासुदेवा वा उग्गकुलेसु वा भोग० राइन्न० नाय० खत्तिय० इक्खाग० हरिवंसकुलेसु वा अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु आयाइंसु वा ३ ॥ २१ ॥ अत्थि पुण एसेऽवि भावे लोगच्छेरयभूए अणंताहिं उसप्पिणीओसप्पिणीहिं विइक्कंताहिं समुप्पज्जइ(त्ति) ॥

॥ ३२ ॥

व्याख्या—"एवं खलु देवाणुप्पिआत्ति" एवं खलु इति वाक्यस्य उपक्रमे, हे देवानुप्रिय! न एतत् भूतम्, न एतत् भवति, न एतत् भविष्यति—यत् अर्हदादयः ४ अंत—प्रांतादिकुलेषु न आगता न आगच्छन्ति न आगमि-

ष्यन्ति, परं अर्हदादयः ४ उग्रकुलादिष्वेव आगता आगच्छन्ति आगमिष्यन्ति ॥ तर्हि भगवान् कथं ब्राह्मण-कुलेषु उत्पन्नः? इत्याह—परं इदं आश्चर्यम्—अनन्ताभिः उत्सर्पिणीभिः अवसर्पिणीभिश्च (व्यतिक्रान्ताभिः लोके दशप्रकारको आश्चर्यरूपः कश्चित् पदार्थ उत्पद्यते) ॥

अत्र—अस्यां अवसर्पिण्यां दश आश्चर्याणि जातानि तानि कथ्यन्ते—

*उवसग्ग-गब्भहरणं, इत्थीतित्थं अभाविया परिसा। कण्हस्स अवरकंका, अवयरणं चंदसूराणं ॥ १ ॥

हरिवंसकुलुप्पत्ती, चमरुप्पाओ अ अट्ठसयसिद्धा। अस्संजयाण पूआ, दसवि अणंतेण कालेण ॥ २ ॥

व्याख्या—"उवसग्गत्ति" प्रथमं श्रीमहावीरदेवस्य केवलज्ञाने उत्पन्नेऽपि गोशालककृत उपसर्गो जातः तत्सम्बन्धो यथा—एकदा श्रीमहावीरदेवः श्रावस्त्यां नगर्यां समवसृतो गोशालकोऽपि तत्रास्ति, गौतमस्वामी गोचरि(चर्यायै) गतः सन् लोकानां बहूनां इदं वचनं श्रुतवान्—यतः द्वौ जिनौ सर्वज्ञौ श्रावस्त्यां श्रीमहावीरो गोशालकश्च। ततो गौतमस्वामिना भगवत्समीपे समागत्य गोशालोत्पत्तिस्वरूपं पृष्टम्। भगवता प्रोक्तम्—'अयं मङ्खलिपुत्रो नायं सर्वज्ञः। कथं? एको मङ्खलिनामा मङ्खोऽभूत्, तस्य सुभद्रा भार्या, तौ शरवणग्रामे गोबहुलब्राह्मणगोशालायां स्थितौ। तत्र पुत्रो जात, इति गोशालनाम

* उपसर्ग-गर्भहरणं स्त्रियास्तीर्थम् अभाविता पर्षत्। कृष्णस्य अमरकङ्का अवतरणं चन्द्र-सूर्ययोः ॥ १ ॥

हरिवंशकुलोत्पत्तिः चमरोत्पातश्च अष्टशतसिद्धाः। असंयतानां पूजा दशाऽपि अनन्तेन कालेन ॥ २ ॥

दत्तम्। स कियत्काले मम मिलितः, षड्वर्षाणि छद्मस्थेन मया सार्धं विहृतः असत्तः [मत्तः] एव बहुश्रुतवान् जातः, नायं जिनो नायं सर्वज्ञः'। इदं भगवतो वचनं श्रुत्वा, बहुजना नगर्यां त्रिक–चतुष्क–चत्वरादिषु परस्परं एवं वदन्ति स्म–यत् "गोशालो मङ्खलिपुत्रो न जिनो न सर्वज्ञ इति।" गोशालो लोकात् इति वचनं श्रुत्वा, कुपितः सन् गोचर्या (गोचरचर्यार्थं=भिक्षार्थं) नगर्यां आगच्छन्तं भगवतः अन्तेवासिनं आनन्दनामानं साधुं एवं प्राह–'भो आनन्द! त्वं एहि, एकं दृष्टान्तं शृणु—केऽपि वणिजो धनार्थिनो नानाप्रकारक्रयाणकैः शकटानि भृत्वा, देशान्तरं प्रति चलिताः, महाटव्यां प्रविष्टाः तृषापीडिताः सन्तो जलं गवेषयन्ति। तत्र चत्वारि वल्मीकशिखराणि शाड्वलवृक्षाणां मध्ये दृष्टानि। अत्र पानीयं भावि इति ज्ञात्वा, एकं शिखरं तैः भिन्नम्। तत्र पानीयं निःसृतं आकण्ठं पीतम्, भाजनानि च भृतानि। ततो लोभार्थिभिः वृद्धपुरुषेण कष्टदर्शिना वार्यमाणैः अपि द्वितीयं शिखरं भिन्नम्, तस्मात् सुवर्णं निःसृतम्। एवं तृतीयं भिन्नम्, तस्मात् रत्नानि निःसृतानि। पुनः लोभाच्चतुर्थमपि शिखरं भिन्नम्, ततः तस्मात् महाकालः कृष्णवर्णः रक्तलोचनः कोपारुणो लपलपायमानजिह्वः भुजङ्गमो निःसृतः, स सूर्यसन्मुखीभूय, दृष्ट्या सर्वान् समकालं ज्वालयामास। परं यो हितशिक्षादाता वृद्धवणिक् अभूत्, स न्यायदर्शी इति हेतोः, वनदेवतया अनुकम्पया जीवन् रक्षितः सन् स्वस्थानं प्राप्तः। एवं त्वदीयं धर्माचार्यं महावीरं आत्मीयसम्पदा अपरितुष्टं मम अवर्णवादविधायिनं अहं अद्य स्वकीयतपसा भस्मसात् करिष्यामि इति त्वं पश्य। एषोऽहं प्रचलितोऽस्मि, त्वां च न्यायदर्शित्वात् वृद्धपुरुषवत्

रक्षिष्यामि।' एतत् गोशालकवचनं श्रुत्वा, भीतः आनन्दमुनिः, भगवत्समीपे आगत्य, सर्वं कथितवान्। भगवताऽपि गौतमादीन् आकार्य प्रोक्तम्—'भोः! गोशालकः समागच्छन्नस्ति, सर्वेऽपि दूरीभवन्तु, न केनापि किमपि वक्तव्यम्।' ततो गोशालक आगत एव, आगत्य च भगवन्तं प्रति प्राह—'भोः शोभन आयुष्मन् काश्यप! त्वं मां प्रति एवं वदसि—'यत् 'गोशालो मङ्खलिपुत्रः' यो गोशालः तव शिष्योऽभूत्, स तु मृतः, अहं तु अन्य एवाऽस्मि। परं गोशालकशरीरं परीषहसहनसमर्थं ज्ञात्वा मध्ये प्रविष्टोऽस्मि।' इत्यादि कल्पितवृत्तान्तं कथयति स्म। एवं सति सर्वानुभूतिसुनक्षत्रनामानौ द्वौ साधू स्वधर्माचार्यश्रीवीरपराभवं असहमानौ गोशालकनिवारणाय प्रवृत्तौ, गोशालेन कोपेन तेजोलेश्यया दग्धौ। ततः भगवता प्रोक्तम्—'भो गोशालक! त्वं अन्यथा जल्पनेन किं आत्मानं अपलपसि? त्वं मया मुण्डितो, मयैव शिक्षितो, मयैव बहुश्रुतवान् कृतः, ततो माऽवादीः वृथा।' ततः पुनरपि गोशालकेन तेजोलेश्या मुक्ता, सा श्रीभगवन्तं प्रदक्षिणीकृत्य भगवच्छरीरं अनुतापयन्ती गोशालकशरीरे एव प्रविष्टा। तया गोशालकशरीरं दग्धम्। गोशालः सप्तमरात्रौ कालं कृतवान्। भगवतश्च शरीरे तस्या लोहितस्थानं जातम्—इदमाश्चर्यम्, ततश्च अश्वनिमित्तेन कृतेन औषधपाकेन रेवत्या सिंहोऽनगारः प्रतिलाभितः, सिंहेनाऽपि भगवतः पाकः प्रदत्तो भगवता कोष्ठके प्रक्षिप्तः—समाधिश्च जातः॥ इति प्रथमं आश्चर्यम् ॥ १ ॥

अथ—"गब्भहरणंत्ति" गर्भहरणं प्रतीतं इदमेव वाच्यमानमाश्चर्यम् ॥ इति द्वितीयमाश्चर्यम् ॥ २ ॥

अथ–"इत्थीतित्थंत्ति" तृतीयमिदं आश्चर्यम्–मल्लीकुमार्या स्त्रीवेदत्वेन तीर्थं प्रवर्तितम्। तत्सम्बन्धो यथा–श्रीमहाविदेहक्षेत्रे सलिलावतीविजये वीतशोकायां नगर्यां बलो नाम राजा, तस्य धारिणीनाम्नी भार्या, तयोः महाबलः पुत्रो द्विसप्तति-कलावान्। पित्रा यौवने कमलश्रीप्रमुखपञ्चशतकन्यानां पाणिग्रहणं कारितः। पञ्चशतानि सौधानां रत्नस्वर्णरूप्यादीनां च पित्रा यौतके दत्तानि, बलो महाबलाय राज्यं दत्त्वा चारित्रं गृहीतवान्, क्रमात् मोक्षं च प्राप्तः। अथ महाबलस्य राज्ञः अचल १ धरण २ अभिचन्द्र ३ पूरण ४ वसु ५ वैश्रमणाः ६ षट् मित्राणि मिलितानि। अन्यदा गुरोः पार्श्वे धर्मं श्रुत्वा, षड्भिः मित्रैः समं चारित्रं गृहीतम्। सप्ताऽपि गुरुप्रसादात् एकादशाङ्गानि पेठुः। 'सर्वैः समानं तपः कार्यम्' इति प्रतिज्ञां कृत्वा, तपः कर्तुं प्रारब्धम्। महाबलस्तु आगामिभवेऽपि 'अहम् एतेभ्यो अधिको भवामि' इति हेतोः, अधिकतपःकरणाय पारणकदिने 'शिरो मे दूष्यति' इत्यादि मिषं कृत्वा मायया उपवासं कृत्वा, मायाप्रत्ययं स्त्रीगोत्रं कर्म बद्धवान्। विंशतिस्थानकसेवनेन तीर्थङ्करनामगोत्रमपि बद्धवान्। ततः षड्भिः अपि लघुसिंहनिःक्रीडितं तपः प्रारब्धम्। तद्विधिः अयम्–प्रथमश्रेण्यां पारणे विकृतित्यागः १, द्वितीयश्रेण्यां निर्विकृतिकत्यागः २, तृतीयश्रेण्यां अलेपकृत् आहारः ३, चतुर्थश्रेण्यां आचाम्लः ४, दिनमानमिदं वर्षद्वयम् दिनानि अष्टाविंशतिः १ एवं महासिंहनिःक्रीडितं अपि तपः प्रारब्धम्। तदपि पूर्ववत्। नवरं दिनमानमिदं षड्वर्षाणि मासद्वयम् अष्टादश च दिनानि। ततः सर्वेऽपि प्रान्ते द्विमासिकीं संलेखनां कृत्वा, चतुरशीतिपूर्वलक्षाः चतुरशीतिसहस्राश्च वर्षाणां आयुः प्रपाल्य सप्ताऽपि

जयन्ते विमाने देशोन(ईषदून)द्वात्रिंशत्सागरोपमायुष्काः देवाः समुत्पन्नाः। ततश्च्युत्वा आद्यो अचलजीवोऽयोध्यायां प्रतिबुद्धिनामा राजा जातः १, द्वितीयो धरणजीवः चम्पायां चन्द्रच्छायो राजा जातः २, तृतीयो अभिचन्द्रजीवः काशीनगर्यां शङ्खो राजा जातः ३, चतुर्थः पूरणजीवः श्रावस्त्यां रुक्मीनामराजा जातः ४, पञ्चमो वसुजीवः कुरुषु अदीनशत्रुनामा राजा जातः ५, षष्ठो वैश्रमणजीवः कम्पिलायां जितशत्रुनामा राजा जातः ६ एवं षडपि पृथक् पृथक् स्थानेषु राजानो जाताः। महाबलजीवस्तु मिथिलानगर्यां कुंभराज्ञः प्रियायाः प्रभावत्याः कुक्षौ चतुर्दशस्वप्नसूचितः समुत्पन्नः, अश्विनीनक्षत्रे मार्गशीर्षशुक्लैकादश्यां ११ रात्रौ मल्लीकुमारीत्वेन अर्हन् जातः। क्रमात् मल्ली यौवनं प्राप्ता, अवधिज्ञानेन षडपि पूर्वभवमित्रनृपान् अन्यान्यस्थानेषु उत्पन्नान् जानाति स्म। ततः तेषां प्रतिबोधनाय रत्नमयं मोहनगृहं अशोकवाटिकामध्ये कृतम्, तस्मिन् मोहनगृहे षडपवरिकासहिते जालमण्डपे रत्नमयीं शिरश्छिद्रां स्वमूर्तिं चक्रे। ततो मल्लीप्रतिदिनं एकैकां अन्नपिण्डीं स्वहस्तेन मूर्तिच्छिद्रे क्षिप्त्वा क्षिप्त्वा रत्नोत्पलपिधानं ददाति। इतश्च अयोध्यायां सुप्रतिबुद्धिराजा पद्मावत्या स्वदेव्या नागयक्षमन्दिरे पूजार्थं रचितं अत्यन्तं अद्भुतं श्रीदाम दृष्ट्वा दूतान् पृच्छति स्म–'भो दूताः! ईदृशं क्वापि श्रीदाम दृष्टम्?।' तदा दूतैः प्रोक्तम्–'हे राजन्! मल्लीकन्याया इतोऽपि अधिकतरं दृष्टम्, तस्याग्रे इदं लक्षांशोऽपि नायाति।' का मल्ली? कीदृशी च?, तैः सर्वं स्वरूपं निवेदितम्। ततः पूर्वभवप्रेमवशात् मल्लीयाचनार्थं राज्ञा कुंभराजानं प्रति दूतो मुक्तः (१) इतश्च चम्पानगर्यां अरहन्नकप्रमुखा व्यवहारिणः सन्ति, ते च प्रवहणैः चलिताः

गंभीरपत्तनं गत्वा, पुनः द्वीपान्तरं चलिताः। तस्मिन्नवसरे इन्द्रेण अरहन्नकश्रावकस्य सभासमक्षं प्रशंसा कृता–'अद्य भरतक्षेत्रे अरहन्नकसदृशो दृढसम्यक्त्वस्य धारको अन्यः कोपि नास्ति।' तद्वचनं श्रुत्वा, कोऽपि मिथ्यात्वी देवोऽसहमानः तत्रागत्य महत उत्पातान् कृतवान्। मिथ्यात्विलोकाः स्वकीयस्वकीयदेवान् हरिहरादीन् स्मरन्ति स्म। अरहन्नकस्तु श्रावकः साकारं अनशनं प्रत्याख्याय, वीतरागदेवं स्मरन् अक्षोभ्यः स्थितो, देवेन बहुप्रकारं क्षोभितोऽपि न क्षुब्धः, ततो देवेन प्रोक्तम्–'वीतरागदेवं मुक्त्वा, हरिहरादिदेवान् स्मर, यथा उत्पातं निवारयामि, नो चेत् तव अधर्मेण सर्वान् समुद्रे बोलयिष्यामि, पापं च तव।' लोकैरपि सर्वैः प्रोक्तम्–'अरहन्नक! एवं कुरु, परं अरहन्नको निजसम्यक्त्वधर्मे दृढः स्थितः। ततः देवः तुष्टः चलत्कुण्डलाभरणो भूत्वा, प्रदक्षिणां दत्त्वा, करकमलं योजयित्वा, स्तुवति स्म–'अहो अरहन्नक! त्वं धन्यः, त्वं कृतपुण्यः, तव जन्म जीवितं च सफलम्, इन्द्रः त्वां व्याख्यानयति, सन्याय (?) एव तुष्टोऽस्मि, याचस्व यत् कथयसि तत् ददामि।' अरहन्नकः प्राह–'उभयलोकसाधको जिनधर्मो मया प्राप्तोऽस्ति, अन्यत्तु मम किमपि न विलोक्यते, अतो 'अमोघं देवदर्शनम्' इत्युक्त्वा, अनिच्छतोऽपि कुण्डलचतुष्टयं देवो दत्त्वा स्वस्थानं गतः। अथ ते व्यवहारिणः कुशलेन गंभीरपत्तनं प्राप्य क्रमात् मिथिलायां आगताः। तत्र कुम्भस्य राज्ञः कुण्डलद्वयं प्राभृतीकृतम्, राज्ञा च मल्लीकुमार्यै दत्तम्। ततः चम्पायां आगताः तत्र चन्द्रच्छायराज्ञे स्वकीयस्वामिने अन्यत्कुण्डलद्वयं प्राभृतीकृतम्। तस्मिन्नवसरे राज्ञा पृष्टम्–'भो व्यवहारिणः! परदेशे किमपि आश्चर्यं दृष्टम्?।' तदा तैः

मल्लीकुमार्यां रूपवर्णनं कृतम्–'न एतादृशं क्वापि रूपमस्ति!।' ततः चन्द्रच्छायराजेनापि कुम्भं प्रति दूतो मुक्तः–'यत् मल्ली मम देया' इति (२) पुनः इतश्च अन्यदा मल्लीकुण्डलं भग्नं कुम्भेन राज्ञा। कुण्डलसन्धानार्थं स्वर्णकारः समादिष्टः। स प्राह–'हे देव! इदं देवसम्बन्धि कुण्डलं न मया सन्धातुं शक्यते।' ततो रुष्टेन राज्ञा स स्वर्णकारो देशात् निष्कासितो, गतो वाराणस्यां शङ्खराज्ञः समीपे निजवासार्थम्। राज्ञा पृष्टम्–'कथं स्वदेशं त्यक्त्वा अत्रागतः?।' तेन कुण्डलसम्बन्धं कथयता मल्लीरूपवर्णनं कृतम्, तेनापि शङ्खराजेन कुम्भं प्रति दूतो मुक्तः (३) इतश्च रुक्मिराजेनाऽपि सुबाहुनाम्न्या निजपुत्र्या कृते चातुर्मासिकमज्जनविच्छित्तौ क्रियमाणायां दूताः पृष्टाः, ते प्राहुः–'मल्लेः मज्जनक[गृह]स्याग्रे इदं लक्षांशेऽपि नायाति।' तेनापि रुक्मिराजेन कुम्भं प्रति मल्ली निमित्तं दूतो मुक्तः (४) इतश्च कुम्भपुत्रेण मल्लेः लघुभ्रात्रा मल्लदिन्नेन चित्रकरैः चित्रसभा चित्रयिता। चित्रकरेण लब्धिमता यवनिकान्तरितमल्लिपादाङ्गुष्ठं दृष्ट्वा, मल्लीरूपं (यथावत्) तत्स्वरूपं चित्रितमासीत्। तत्रैकदा मल्लदिन्नः स्वभार्याभिः सह क्रीडन्, मल्लीरूपं दृष्ट्वा लज्जितो रोषात् हस्तौ छित्त्वा चित्रकरो देशान्निःकासितः। स हस्तिपुरं गत्वा अदीनशत्रो राज्ञो मिलितः, मल्लीरूपवर्णने कृते अदीनशत्रुराजेनाऽपि मल्लीनिमित्तं कुम्भं प्रति दूतो मुक्तः (५) इतश्च धर्मचर्चायां एका परिव्राजिका चोखेति नाम्नी, मल्लीकुमार्या जिता मानभ्रष्टा कृता। सा रुष्टा सती कम्पिलानगर्यां गत्वा, जितशत्रुराजस्याग्रे मल्लीरूपं पटे लिखित्वा दर्शयति स्म। तेनापि राज्ञा रूपमोहितेन मल्लीकृते कुम्भं प्रति दूतो मुक्तः (६) एवं षण्णामपि राज्ञां षडपि दूताः समकालं

कुम्भसमीपे गताः, मल्ली याचिता, राज्ञा सर्वेऽपि दूता अपमानिताः–"कस्यापि राज्ञो मम पुत्रीं अहं न दास्यामि।" ततः षडपि राजानो अभिमानेन निजं निजं सैन्यं लात्वा समकालमागत्य मिथिलानगरीं रोधयामासुः। कुम्भराजो बहिः निःसृत्य, युद्धं कुर्वन् भग्नो मिथिलां प्रविष्टः। ततो मल्लीप्रपञ्चवचनेन राज्ञा सर्वेऽपि आकारिताः, ते राजानो रत्नगृहं प्राप्ताः, षट्सु अपवरिकासु पृथक् पृथक् प्रविष्टाः। तदा मल्लेः प्रतिमां साक्षात् मल्लिमिव दृष्ट्वा मोहिताः। ततो मल्लीकुमार्या तत्रागत्य, तत्प्रतिमायाः शिरःपिधानं उद्घाट्य दूरीकृतम्। ततः उच्छलितो महादुर्गन्धः। ततः ते राजानो वस्त्रेण नासिकां निपीड्य थूथूकुर्वन्तो नष्टाः। ततः तेषां प्रतिबोधाय मल्ली आगत्य कथयति स्म–'हंहो राजानः! यदि रत्नमय्यामपि पुत्तलिकायां आहारसंसर्गात् ईदृशो दुर्गन्धो जातो भवतां घ्रातुं न शक्यो दुःखावहश्च, तदा स्वाभाविकदुर्गन्धासु स्त्रीषु किं एतावान् रागः प्रतिबन्धश्च क्रियते? कथं रागान्धा जाताः?' इत्यादिप्रतिबोधवचनपूर्वं पूर्वभवमित्रताकथनेन प्रोक्तम्–'सांप्रतं यूयं स्वस्थाने गच्छत, मम केवलज्ञाने उत्पन्ने शीघ्रं समागन्तव्यम्' तेऽपि सर्वे स्वस्वस्थानं गताः। मल्लिश्च समये त्रिशती(३००)राजपुत्रीभिः समं दीक्षां जग्राह। तस्मिन्नेव दिने केवलोत्पत्तौ, तैः षड्भिरपि राजभिः मित्रैर्दीक्षा गृहीता मोक्षं गताः। मल्ल्या च स्त्रीत्वेन तीर्थं प्रवर्तितम्॥ इदं तृतीयं आश्चर्यम्॥ ३॥

अथ–"अभाविआपरिसात्ति" श्रीमहावीरदेवस्य केवलज्ञानं उत्पन्नम्, देवैः समवसरणं रचितम्, सुरा नराश्च कोटिशः समागताः, भगवता देशना दत्ता, परं केनापि न सर्वविरतिः, नापि देशविरतिः, नापि सम्यक्त्वं

न गृहीतम्, निष्फला देशना जाता। नहि कदापि तीर्थङ्कराणां देशना निष्फला भवति। इयं च प्रथमदेशना निष्फला जाता ॥ अतः इदं चतुर्थं आश्चर्यम् ॥ ४ ॥

अथ-"कण्हस्स अमरकंकागमणं" त्ति पंचमं व्याख्यायते-एकदा हस्तिनागपुरे पञ्चपाण्डवद्रौपदी-कुन्ती-प्रमुखपरिवारपरिवृतः पण्डुराजः सिंहासने उपविष्टोऽस्ति। तस्मिन्नवसरे सभायां कच्छुल्लनामा नवमो नारदः समागतः, परं कीदृशोऽस्ति नारदः, दर्शनेन अतिभद्रकः पुनर्विनीतः पुनः अन्तर्दुष्टचित्तः, पुनः आश्रितानां सौम्यप्रियदर्शनः, पुनः अमलिनं अखण्डं वल्कलचीरं येन परिधानीकृतं अस्ति। पुनः येन कृष्णमृगचर्मणां हृदये उत्तरासङ्गः कृतोऽस्ति। पुनः यस्य जटाजूटेन शिरो दीप्तं वर्तते। पुनः यज्ञोपवीतरुद्राक्षकृतकलाचिका-भरणमुञ्जमेखलावल्कलचीरप्रमुखतापसोपकरणानि धरन्, हस्तकृतकच्छ[च्छु]पिकः गीतप्रियः, पुनः आकाश-गामिनी-पातालगामिनी-स्तम्भिनी-मोहनी-प्रज्ञप्ती-गौरी-इत्यादि विद्याधरसंबन्धिविद्याभिः विख्याता कीर्तिः यस्य सः। पुनः श्रीरामकेशवयोः अभीष्टः। पुनः शाम्बप्रद्युम्नानिरुद्धनिषधसारणगजसुकुमालसुमुखादियाद-वसार्धत्रयकुमारकोटीनां हृदयवल्लभः। पुनः कलहयुद्ध-कोलाहलप्रियः। पुनः भण्डनस्य अभिलाषी। पुनः बहुसङ्ग्रामाणां दर्शने उत्सुकः। पुनः लोकानां असमाधिकरः, एतादृशः सन्, गगनतलमुल्लङ्घयन् कलहकन्दलं अनुगवेषयन्-आगतः। ततः पण्डुराजप्रमुखैः सन्मानितः ततः उत्थाय अन्तःपुरमध्ये गतः, तत्र द्रौपद्या अभ्युत्थानादिना न सत्कारितो न संमानितः, यतः अयं असंयती=अविरतः अप्रख्यातपापकर्मा। ततो

नारदेन रुष्टेन विचारितम्–"इयं द्रौपदी रूपलावण्यादिना गर्विता, पञ्चभर्तृवल्लभा च, ततः एनां सपत्नीशत-संकटे पातयामि ।" इति विचार्य नारदो धातकीखण्डे दक्षिणार्धभरते अमरकङ्कानगर्यां स्त्रीलोलुपस्य पद्मनाभस्य राज्ञः सभायां गतः। ततः पद्मनाभेन स्वकीयसप्तशतसुन्दरीसौन्दर्यतो जातगर्वेण प्रश्नः कृतः–'भो नारद ! मम अन्तःपुरसदृशं कस्यापि अन्तःपुरं दृष्टं न वा?' ततो नारदेन कूपमण्डूकदृष्टान्तदानेन मानमुत्तार्य द्रौपदीरूपवर्णनं कृतम् । ततः कन्दर्पदर्पोन्मादेन पद्मनाभेन पौषधशालायां गत्वा उपवासत्रयं कृत्वा,

---

१. कूपमण्डूकदृष्टान्तश्च इत्थं वरीवर्ति–एकदा कश्चित् समुद्रदर्दुरः यत्र कुत्र भ्रमन् कूपदर्दुरं मिलितः । तं दृष्ट्वा परस्परयोः अपरिचिततत्वेन कूपदर्दुरः अपृच्छत्–'अयि सजातीय ! त्वं क्व निवससि ?, कुतश्च समागतः ? ।' समुद्रदर्दुरश्च तं प्रत्युवाच–'भोः ! समुद्रे अहं निवसामि, समुद्राच्च समागतोऽहम् अत्र ।' ततश्च सकुतूहलः कूपदर्दुरः तं पप्रच्छ–'भो समुद्रदर्दुर ! स समुद्रः कियान् बृहत् ? । पृष्ट्वा चेत्थं स्वचरणौ परितः प्रसारयन् तं च प्रदर्शयन् सन् पुनः अप्राक्षीत्–'सोऽयं समुद्रः एतावत्प्रमाणः किम् ? ।' सोऽप्यवादीत्–'नहि नहि, इतोऽपि बृहत्तमः ।' ततः कूपदर्दुरः तत्कूपस्य एककोणात् उत्प्लुत्य अन्यस्मिन् कोणे च प्राप्तः पृष्टवान्–'अपि नाम इयत्प्रमाणः किम् ? । समुद्रदर्दुरश्चावदत्–'ततश्चापि महाप्रमाणः ।' तदा कूपदर्दुरः कूपस्यान्तः गत्वा परितो भ्रमणं च कृत्वा पप्रच्छ–'अथ किं इयत्प्रमाणः स समुद्रः ? ।' ततश्च हसन् समुद्रदर्दुरः प्रोवाच–'रे कूपमण्डूक ! समुद्रस्तु ततोऽपि महत्प्रमाणः ।' अनेन प्रत्युत्तरेण क्रोधातिरेकसंयुक्तः अवादीत्–'रे असत्यवादिन् ! स एतावान् बृहत् समुद्रः कुत्राप्येव नास्ति, नाभूत्, नापि भविष्यति च, यतोऽयं न मया श्रुतः दृष्टो वा, योऽयं एतस्मादपि बृहत्तम इत्येवं त्वं ब्रूषे । दूरे याहि ।' इत्यूचिवान् इति ॥

पूर्वसङ्गतिको देव आराधितः। तस्मै प्रोक्तम्—'भो! द्रौपदीं शीघ्रं आनय।' ततः स देवः तत्र गत्वा, अवस्वापिनीं निद्रां दत्त्वा, युधिष्ठिरस्य पार्श्वे सुप्तां द्रौपदीं उत्पाट्य, पद्मनाभस्य अशोकवाटिकायां आनीय मुमोच। ततः पद्मनाभेन दृष्टा सती प्रार्थिता। तदा द्रौपद्या प्रोक्तम्—'मम प्रियमातुः भ्रातृव्यः कृष्णवासुदेवोऽस्ति, स यदि षण्मासमध्ये मम शुद्धिं न करोति, तदा तवाग्रे अस्मि।' ततः पद्मनाभेन विचारितम्—'बलात् न प्रीतिः' इति हेतोः मौनमाधाय अन्तःपुरमध्ये मुक्ता, द्रौपदी च षष्ठषष्ठपारणे आचाम्लं कुर्वती तस्थौ। अथ—द्रौपदीसंहरणानन्तरं पृष्टो [पश्चात्] किं जातं? तदाह—मुहूर्तात् युधिष्ठिरः प्रबुद्धो द्रौपदीं पार्श्वे न पश्यति सर्वत्र विलोकिता, परं न कुत्रापि श्रुतिमात्रमपि प्राप्तम्। ततः पण्डुनृपाय स्वरूपं [निरूपितं] निवेदितम्। ततः पण्डुराजेनाऽपि कौटुम्बिकद्वारा सर्वत्र पुरमध्ये उद्घोषणा दापिता, परं न शुद्धिर्जाता। ततो ज्ञातम्—"केनापि देवेन दानवेन वा गन्धर्वेण वा किन्नरेण वा किम्पुरुषेण वा अपहृता ज्ञायते।" पुनः राज्ञा प्रोक्तम्—"यो द्रौपदीशुद्धिं वक्ति तस्मै स्वेप्सितां सम्पत्तिं ददामि।" परं न कोऽपि जानाति। ततः पाण्डुराजेन निजभार्या कुन्ती कृष्णपार्श्वे शुद्धिकारापणाय मुक्ता। कुन्त्यपि द्वारिकाया उद्याने गत्वा, स्वयं स्थित्वा कौटुम्बिकेन निजागमनं ज्ञापयामास। कृष्णोऽपि हस्तिस्कन्धारूढः सपरिकरः सन्मुखमागत्य, हस्तित उत्तीर्य पादयोः निपत्य महाविच्छित्त्या निजपितृष्वसारं [सां] निजमन्दिरे आनीतवान्। आगमनप्रयोजनं च पृष्टम्, कुन्त्याऽपि द्रौपदीसंहरणं ज्ञापितम्। ततः कृष्णेन प्रोक्तम्—"यस्या एको भर्ता भवति सोऽपि स्वकीयां भार्यां रक्षति,

पाण्डवैः पञ्चभिरपि एका भार्या न रक्षिता ? । अहं तु षोडशसहस्रगोपाङ्गनाः कथं रक्षामि ? ।' कुन्त्या कथितम्–"साम्प्रतं हास्यवेला नास्ति ।" ततः कृष्णेन प्रोक्तम्–'अर्धभरतमध्ये पाताले वा यत्र कुत्रापि द्रौपदी भविष्यति, तत्र शुद्धिं कारयित्वा तुभ्यं दास्यामि, न चिन्ता कार्या ।' इति सत्कारसन्मानादिना सन्तोष्य, कुन्ती हस्तिनागपुरे प्रापिता । ततः कृष्णः कौटुम्बिकैः सर्वत्र उद्घोषणां दत्तवान्, परं न कुत्राऽपि शुद्धिः प्राप्ता । ततः तस्मिन् प्रस्तावे किंकर्तव्यतामूढा यादवसभा जाता । ततः नारदः समागतः । कृष्णेन पृष्टम्–"अहो नारद ! भवद्भिः सर्वत्र भ्रमद्भिः कुत्रापि द्रौपदी [सदृशा] दृष्टा श्रुता वा स्यात् ? तदा कथ्यताम् ।" ततो नारदेन प्रोक्तम्–"अन्यदा धातकीखण्डे दक्षिणभरतार्धे अमरकङ्कायां नगर्यां पद्मनाभभवने मया द्रौपदीसदृशा दृष्टा ।" ततः कृष्णेन प्रोक्तम्–"भवतां एव इदं कर्म ! ।" ततः कृष्णेन पण्डुनृपाय दूतो मुक्तः, प्रोक्तं च–"तत्र द्रौपदीशुद्धिः जाताऽस्ति, भवद्भिः पञ्चपाण्डवैश्चतुरङ्गिनीं सेनां लात्वा, पूर्वसमुद्रवेलातटे समागन्तव्यम् ।" ततो दूतो गत्वा तथैव कारितवान् । ततः कृष्णवासुदेवोऽपि प्रयाणभेरीं वादयित्वा, समुद्रविजयादिदशदशार्हादिपरिवारसहितो वासुदेवर्द्धिविच्छित्त्या हस्तिस्कन्धाधिरूढो धृतमस्तकच्छत्रः चामरैः वीज्यमानः पूर्वसमुद्रवेलाकूले सङ्केतस्थाने पाण्डवैः सह संमिलितः । ततः कृष्णेन पौषधशालायां अष्टमं कृत्वा सुस्थितनामा लवणाधिपतिर्देव आराधितः सोऽप्यागतः । कृष्णेन प्रोक्तम्–'भो सुस्थित ! द्रौपद्यानयनार्थं अहं यामि, पञ्चानां पाण्डवानां षष्ठस्य मम एवं षण्णां रथानां मार्गं देहि ।' ततः सुस्थितो देवः प्राह, मा

द्रौपदी आनीय दत्ताऽस्ति न स्वयं, ततो यदि कथयसि तदा
प्रयासं कुरु, पद्मनाभस्यापि पूर्वसंगतिकदेवेन द्रौपदी आनीय दत्ताऽस्ति न स्वयं, ततो यदि कथयसि तदा
द्रौपदीं, ततो लात्वा हस्तिनागपुरे मुञ्चामि, अथवा पद्मनाभं पुरवाहनबलसमेतं समुद्रे क्षिपामि।' ततो
हरिः बलगर्वितः प्राह–'नैवं मम शोभा, त्वं मम मार्गं वितर।' ततो देवेन देवमायया मार्गो दत्तः।
श्रीकृष्णः सर्वसैन्यं समुद्रस्य वेलाकूले मुक्त्वा, पञ्चपाण्डवैः समं समुद्रं रथैः उल्लङ्घ्य, अमरकङ्कायां उद्याने
गतः, स्थित्वा च तत्र दारुकनामा सारथिर्मुक्तः। प्रोक्तं च–'भो दारुक! त्वया तत्र गत्वा पादेन पद्मनाभस्य
पादपीठं आक्रम्य, कुन्ताग्रेण लेखं अग्रे मुक्त्वा त्रिवलिं ललाटे चाटयित्वा, कोपं कृत्वा, इत्थं वाच्यम्–"रे
पद्मनाभाख्य! रे अकाले मरणवाञ्छक! रे दुरन्तप्रान्तलक्षण! रे हीनचतुर्दशीजात! रे श्री–ह्री–धृति–कीर्ति-
वर्जित! अद्य त्वं न भवसि, यतो मम भगिनी द्रौपदी त्वया हृता, अथ शीघ्रं द्रौपदीं देहि, नो चेत् सङ्ग्रामे
सज्जो भव।" ततः पद्मनाभोऽपि कृष्णस्य दूतस्य कुवचनं श्रुत्वा, कोपं कृत्वा, "अवध्यो दूतः" इति हेतोः
दूतं, अहतं, असत्कारितं, अपमानितं, अपद्वारेण निष्कास्य, स्वयं हस्तिस्कन्धं समारुह्य, सर्वसैन्यं लात्वा,
सन्मुखमागत्य स्थितः। ततः कृष्णः पञ्चपाण्डवान् प्राह–'भो पाण्डवाः! यूयं किं युद्धं करिष्यथ? किंवा
द्रक्ष्यथ?।' ततः ते प्रोचुः–'वयं युद्धं करिष्यामः, पश्चात् यदि वयं पद्मनाभात् हारयाम, तदा भवद्भिः युद्धं
करणीयं' इति। अमङ्गलवचनं मुखे निःसृतम्, तथापि पाण्डवाः पद्मनाभेन समं युद्धं कर्तुं लग्नाः। परं
पद्मनाभेन बलवता पञ्चापि पाण्डवा हतप्रहताः कृताः सन्तः कृष्णसमीपे समेताः। ततः कृष्णो युद्धं कर्तुं

लग्नः । प्रथमं पाञ्चजन्यशङ्खनादेन पद्मनाभसैन्यस्य त्रिविभागो नाशितः । ततः शार्ङ्गधनुष्टङ्कारवेण द्वितीयत्रिविभागो हतः । ततः पद्मनाभोऽवशिष्टबलत्रिभागो जीवं लात्वा नष्ट्वा, अमरकङ्कानगरीमध्ये प्रविष्टः । ततः कृष्णो नरसिंहरूपं कृत्वा, वप्रादिकं पातयित्वा नगरमध्ये प्रविष्टः, पद्मनाभो मरणभीत्या–"हे द्रौपदि ! शरणे ! मां रक्ष रक्ष" इति कथयन् स्त्रीरूपं कृत्वा, द्रौपदीशरणे प्रविष्टः । कृष्णेन द्रौपदी पृष्टा–"तव पृष्ठे का एषा स्त्री ? ।" ततः पद्मनाभो हस्ते प्राभृतं कृत्वा कथयति स्म–"अहं पद्मनाभः तव मारणभीत्या द्रौपदीशरणं प्रविष्टोऽस्मि ।" ततः कृष्णेन "शरणागतो न हन्यते" इति कृपया जीवन्मुक्तः । ततः कृष्णो द्रौपदीं अखण्डशीलां लात्वा, पञ्चपाण्डवैः सह प्रत्यागच्छन्, लब्धजयत्वात् हर्षेण शङ्खं पूरितवान् । तस्मिन्नवसरे तत्र क्षेत्रे चम्पायां श्रीमुनिसुव्रतस्वामितीर्थङ्करसमीपे व्याख्यानं शृण्वन् कपिलवासुदेवः शङ्खनादं अशृणोत् । ततः शङ्का जाता–"किं द्वितीयो वासुदेवो जातः ?" तदा भगवता प्रोक्तम्–'भो कपिलवासुदेव ! एकस्मिन् क्षेत्रे तीर्थङ्कराश्चक्रवर्तिनो वासुदेवा बलदेवा वा नोत्पद्यन्ते, परं जम्बूद्वीपसम्बन्धिभरतक्षेत्रस्य वासुदेवः कृष्णनामा त्वत्सदृशो द्रौपदीं पद्मनाभेन अत्र आनीतां तां लात्वा याति । तेन शङ्खः पूरितः । ततः कपिलवासुदेवः शीघ्रं उत्थाय–'मत्सदृशं पुरुषोत्तमं पश्यामि' इति हर्षेण मिलनार्थं समुद्रतटे गतः, तावता कृष्णो दूरे गतः । परं कृष्णादिरथानां पीतश्वेतादिध्वजाचिह्नानि दृष्ट्वा शङ्खं पूरितवान् । तन्मध्ये ज्ञापितम्–"अहो श्रीकृष्णवासुदेव ! कपिलवासुदेवः त्वां प्रणमति ।" कृष्णोऽपि तन्नादं श्रुत्वा, शङ्खनादं कृतवान्–"अहो कपिलवासुदेव ! कृष्णोऽपि त्वां

प्रणमति।" ततो कपिलवासुदेवो हर्षं प्राप्य पश्चात् वलित्वा पद्मनाभं देशात् निष्कासितवान्, तत्सुतं तस्य पट्टे स्थापितवान्। ततः कृष्णोऽपि पाण्डवैः समं समुद्रमुल्लङ्घ्य, पञ्चपाण्डवानामेवं कथयति स्म—'यूयं गङ्गा-महानदीं नावा उत्तरत। पश्चान्नौः वलमाना मम मोच्या। यथा अहं आगच्छामि, साम्प्रतं अहं सुस्थितं देवं सम्भाषयामि। ततः पश्चापि पाण्डवाः गङ्गामुत्तीर्णाः, परं मनसि विचारितम्—'कृष्णो बाहुभ्यां गङ्गां तरितुं समर्थो न वा ?।' ततो वलमाना नौः कृष्णाय न मुक्ता। ततः कृष्णो नावं गवेषयन् क्षणं स्थितः, नौः नागता, एकया बाह्वा तुरङ्गमसारथिसहितं रथं गृहीत्वा, एकया च बाह्वा सार्धद्वाषष्टि ६२॥ योजनवि-स्तीर्णां गङ्गां विलोडयन् पातालमध्ये हस्तं निक्षिपन्, उत्प्रेक्षते—'मा पाण्डवाः ब्रुडित्वा अधस्ताद्गताः भवन्तु, ततो निष्कासयामि' इति उत्तरन् श्रान्तः। ततो गङ्गादेव्या साहाय्यं दत्तम्, ततो गङ्गां उत्तीर्य आगतेन कृष्णेन पश्चापि पाण्डवा उपालम्भिताः—'किमिति नौः न मुक्ता ?।' ततः पाण्डवैः प्रोक्तम्—'युष्मच्छक्ति-परीक्षाविलोकनार्थम्।' ततो हरिः कोपं कृत्वा प्राह—रे रे! यदा मया द्विलक्षयोजनप्रमाणो लवणसमुद्र उल्लङ्घितः, पुनः पद्मनाभं जित्वा द्रौपदी आनीता, तदा मम शक्तिर्न दृष्टा ?।' इति कथयित्वा कोपात् लोहदण्डेन पश्चापि पाण्डवान् चूर्णयामि, पुनः कृपया विचारितम्—'नैतत् युक्तम्।' ततः पश्चापि पाण्डवानां रथान् भङ्क्त्वा चूर्णिताः। पश्चापि पाण्डवांश्च देशात् निर्विषयान् आदिशति स्म, रथभञ्जनस्थाने "रथमर्दननामा" कोट्टो जातः। ततः कृष्णः स्वसैन्यं लात्वा द्वारिकां प्रविष्टः। पाण्डवा अपि द्रौपदीं लात्वा, सैन्यसहिता हस्तिनागपुरं प्राप्ताः।

कुन्ती देशनिष्कासनस्वरूपं श्रुत्वा, पाण्डुराजप्रेरिता पुनः कृष्णसमीपे गत्वा, मृष्टवचनैः कृष्णं सन्तोष्य, नव्यपाण्डुमथुरावासस्य आज्ञां लात्वा समागता। ततः पश्चापि पाण्डवाः सपरिवारा दक्षिणवेलातटे पाण्डुमथुरां नवीनां स्थापयित्वा, अदृष्टसेवकाः सन्तो वसन्ति स्म। ततो गते कियति काले स्थविरसमीपे धर्मं श्रुत्वा, संसारभयात् उद्विग्नाः। पण्डुसेनपुत्रं राज्ये संस्थाप्य, द्रौपद्या सह प्रव्रजिताः। षष्ठाष्टमादितपांसि कृत्वा चतुर्दशपूर्वाणि अधीत्य, स्थविराज्ञया श्रीनेमिनाथवन्दनार्थं गिरिनाराय चलिताः, विहरन्तो हस्तिकल्पनगरे आगत्य युधिष्ठिरं वने मुक्त्वा, चत्वारः पाण्डवा मासक्षपणपारणे नगरमध्ये आहारार्थं गताः। उच्चनीचकुलानि अटन्तो लोकमुखात् श्रीनेमिनिर्वाणं श्रुत्वा युधिष्ठिरस्य कथयित्वा, विमनस्काः सन्तः आहारं परिष्ठाप्य, शत्रुञ्जयोपरि द्विमासिकीं संलेखनां कृत्वा, पश्चापि पाण्डवाः सिद्धाः। द्रौपदी अपि एकादशाङ्गानि पठित्वा, मासिकीं संलेखनां कृत्वा पञ्चमब्रह्मदेवलोके उत्पन्ना। ततः च्युत्वा, महाविदेहे क्षेत्रे सेत्स्यति, अत्र द्रौपदी वालिता इत्येतावता सम्बन्धेन प्रयोजनम्। अग्रेतनसम्बन्धस्तु प्रसङ्गात् लिखितोऽस्ति। वेला स्वेच्छा च भवेत् तदा वाच्या, नो चेत् न हि। अत्र उभयोः वासुदेवयोः [परस्परयोः] शङ्खध्वनिश्रवणं॥ इति पञ्चमं आश्चर्यम्॥ ५॥

अथ–"अवयरणं चंदसूराणंत्ति"। पुनः कोशाम्ब्यां नगर्यां चन्द्रसूर्यौ स्वविमानेन पश्चिमपौरुष्यां श्रीमहावीरवन्दनार्थं आगतौ, अत्र स्वकीयमूलविमानेन आगमनं॥ इति षष्ठं आश्चर्यम्॥ ६॥

अथ–"हरिवंसकुलुप्पत्तित्ति" तत्सम्बन्धलेशो यथा–कौशाम्बीनगरी तत्र सुमुखो नाम राजा, वसन्त-

॥ ४० ॥

समये गजारूढः सन् उद्याने क्रीडार्थं गतः। तत्र एको वीरनामा कुविन्दः तस्य भार्या अतिसुरूपा अतिसुलावण्या वनमालानाम्नी, राज्ञा दृष्टा। द्वयोरपि कामरागः उत्पन्नः। राजा तां पश्यन् स्थितः अग्रे न चलति। मन्त्रिणा प्रोक्तम्–'किमिति विलम्बः क्रियते?।' राज्ञा स्वस्याऽभिप्रायो निवेदितः। मन्त्रिणा प्रोक्तम्–'चिन्ता न कार्या, तां मेलयिष्यामि।' सर्वेऽपि स्वस्थानं गताः। मन्त्रिणा परिव्राजिकाप्रयोगेण सा वनमाला राज्ञो मेलिता, राज्ञा अन्तःपुरे क्षिप्ता, तया सह सुखेन राजा कालं गमयति। अथ कुविन्दो अतिस्नेहात् भार्यावियुक्तो ग्रथिलो जातो, नगरमध्ये त्रिके चतुष्के चत्वरे च हा वनमाले! हा वनमाले! इति विलपन् गवाक्षस्थाभ्यां ताभ्यां दृष्टः, चिन्तितं च–'अहह! अस्माभिः उभयलोकविरुद्धं कृतम्!।' इति पश्चात्तापं कुर्वतोः, तयोरुपरि विद्युत् पतिता, द्वावपि मृत्वा शुभध्यानेन हरिवर्षक्षेत्रे हरिहरिणीनामानौ युगलिनौ जातौ। वीरकुविन्दोऽपि तयोर्मृत्युं ज्ञात्वा दुःखात् अज्ञानकष्टतपः कृत्वा, सौधर्मदेवलोके किल्बिषिको देवो जातः। अवधिज्ञानेन ज्ञातं "मा एतौ मम वैरिणौ युगलित्वात् स्वर्गं यास्यतः" इति विचार्य तौ हरिहरिणीयुगलिनौ 'प्रवचनसारोद्धारवचनात्' देहेन आयुषा च ह्रस्वीकृत्य कल्पवृक्षैः समं उत्पाट्य, चम्पानगर्यां आनीतौ। तस्मिन् प्रस्तावे चम्पानगरीस्वामी इक्ष्वाकुवंशीयश्चन्द्रकीर्तिः राजा अपुत्रो मृतः। नगरलोका अपरं राजानं विलोकयन्ति, परं न तादृशो मिलति। तदाऽऽकाशे देवेन प्रोक्तम्–'भो लोकाः! युष्माकं अयं हरिः राजा, इयं च हरिणी राज्ञी अस्तु, परं एतयोः कल्पवृक्षफलेन मिश्रो मांसाहारो यावज्जीवं देयः।' इति कथ-

यित्वा देवो गतः। लोकैः अपि तथैव कृतम्। अथ हरिनामा राजा पृथिवीं साधयित्वा, महारम्भं कृत्वा, भार्यासहितो नरकं गतः। तस्मात् हरि-हरिणीयुगलात् जातो हरिवंशः। अत्र हरि-हरिणीयुगलं नरके गतम्॥ इदं आश्चर्यं सप्तमम्॥ ७॥

अथ-"चमरुप्पाओत्ति" चमरोत्पातस्वरूपं च इदम्। तत् यथा-बिभेलसंनिवेसे पूरणो नाम गाथापतिः महासमृद्धः रात्रौ सुप्तेन चिन्तितम्-'मया पूर्वभवेषु पुण्यं प्रभूतं कृतम्, तेन इह ऋद्धिः प्राप्ता, तेन पुनरपि अत्र तपः करोमि, तदा आगामिभवेऽपि किञ्चित् सुखं प्राप्नोमि' इति विचिन्त्य, प्रभाते कुटुम्बं आकार्य, स्वपुत्रं स्वपदे स्थापयित्वा, तापसी दीक्षा गृहीता यावज्जीवं षष्ठषष्ठतपः कृतवान्। पारणकदिने काष्ठमयं चतुःपुटं भाजनं कृत्वा, भिक्षायां भ्रमति। तत्र प्रथमपुटे पतितां भिक्षां पान्थेभ्यो ददाति १, द्वितीयपुटे पतितां भिक्षां काकादिभ्यो ददाति २, तृतीयपुटे पतितां भिक्षां जलचरादिभ्यो ददाति ३, चतुर्थपुटे पतितां भिक्षां स्वयं भुङ्क्ते ४। एवं द्वादशवर्षाणि अज्ञाततपः कृत्वा, पूरणः शुभध्यानेन मृत्वा, भवनपति-प्रथमनिकाये चमरेन्द्र एकसागरोपमायुः महर्द्धिको जातः। एकदा चमरेन्द्रः स्वसभायां चतुः[६४०००]षष्टिसहस्रसामान्यदेवसहितः एकस्यां एकस्यां दिशि चतुःषष्टिचतुःषष्टिसहस्रैः आत्मरक्षकैः परिवृतः उपविष्टोऽस्ति। अवधिज्ञानेन सौधर्मदेवलोके शक्रसिंहासने स्थितं सौधर्मेन्द्रं पश्यति स्म। तस्य च पादौ स्वमस्तकोपरि आगतौ, ततः क्रुद्धः सन् वदति स्म-'अरे रे! कोऽयं दुरात्मा मम मस्तके पादौ धत्ते?।' सेवकप्रधानसुरैः प्रोक्तम्-

'स्वामिन्! अयं पूर्वोपार्जितपुण्यैः अत्राऽवतीर्णः, अस्य च इयं एव स्थितिः, न कोपः कर्तव्यः।' एतत् श्रुत्वा विशेषतः क्रुद्धः प्राह-'रे रे! ये सौधर्मेन्द्रपादौ स्वमस्तकोपरि सहन्ति ते चमरका अन्ये, अहं चमरेन्द्रः अन्यः, अहं तत्र गत्वा सौधर्मेन्द्रपादौ गृहीत्वा अधः पातयिष्यामि।' इति कथयित्वा कोपं कृत्वा प्रधानैः वारितोऽपि स्वस्थानत उत्थाय चलितः, अग्रे गत्वा विचारितम्-'अर्हन्तो वा १ अर्हच्चैत्यस्य वा २ अनगारस्य वा भावितात्मनः ३ शरणं विना न गम्यते। तदवसरे छद्मस्थः श्रीमहावीरः सुसमारपुरात् बहिः कायोत्सर्गे स्थितोऽभूत्। तस्य शरणं कृत्वा, लक्षयोजनरूपं कृत्वा पादाभ्यां धरित्रीं आघ्नन्, हस्ताभ्यां तालास्फोटं कुर्वन्, मेघवत् गर्जारवं कुर्वन्, विद्युदिव झात्कारं कुर्वन्, ज्योतिश्चक्रं त्रासयन्, एकं पादं सौधर्मावतंसकविमानवेदिकायां, द्वितीयं पादं सुधर्मसभायां दत्त्वा, प्रतोल्यां प्रहारं दत्त्वा, शक्रं आक्रोशयामास। देवा भयभ्रान्ता जाताः, देवाङ्गना भीत्या देवानां कण्ठे लग्नाः। कोलाहलं श्रुत्वा इन्द्रो विस्मयं प्राप्तः पृष्टवान्-'भो देवाः! कोऽयं उपद्रवः?।" देवैः प्रोक्तम्-'स्वामिन्! कोऽपि लक्षयोजनरूपधारी महाबीभत्सो महाविकरालः समुत्थितः अस्ति।' इन्द्रेण अवधिना ज्ञातम्-'अयं चमरकः असम्पूर्णभृतघटवत् समुच्छलितोऽस्ति। परं अस्य शिक्षां ददामि तदा वरम्।' ततो ज्वलदग्निस्फुलिङ्गसहस्रसमाकुलं वज्रं चमरेन्द्रं प्रति मुमोच। चमरोऽपि वज्रं आगच्छत् दृष्ट्वा भीत्या अधोमुखः ऊर्ध्वपादो महाकायं सङ्कोचयन् कुण्डलहारादीनि आभरणानि पतन्त्यपि अगृह्णन्, कुन्थुकरूपं कृत्वा, 'हे श्रीमहावीर! तव मम शरणम् तव मम शरणम्' इति कथयन् स्वामिपादयोः अन्तरे प्रविष्टः। वज्रं

अपि स्वामिपादाभ्यां चतुरङ्गुलैर्दूरतो भ्रमन् 'मा तीर्थङ्करस्य आशातना भवतु' इति शीघ्रं पश्चादागत्य इन्द्रेण अप्राप्तं सत् गृहीतं, स्वामिनं वन्दयित्वा क्षमयित्वा च चमरं प्रति इन्द्रः प्राह–'रे चमर! मुक्तोऽसि भगवत्प्रसादात्, त्वं निस्सर, साधर्मिकत्वात् न किमपि वक्तव्यम्, परमेवं पुनः न कार्यम्। ततः शक्रः प्रभुं नत्वा स्वस्थानं गतः। ततः चमरेन्द्रोऽपि पादद्वयात् निःसृत्य प्रभुं प्रणम्य स्वस्थानं गतः। अत्र चमरेन्द्रस्य सौधर्मदेवलोके गमनम् ॥ इति आश्चर्यं अष्टमम् ॥ ८ ॥

अथ "अट्ठसयसिद्धात्ति" अष्टापदपर्वते एकसमये उत्कृष्टावगाहनायां (५००)पञ्चशतधनुःप्रमाणायां एकः श्रीऋषभदेवः (१) भरतं विना नवनवतिः (९९) भगवतः पुत्रा अष्टौ (८) च भरतस्य पुत्राः, एवं एकं शतं अष्टौ च (१०८) सिद्धाः। अत्र उत्कृष्टावगाहनायां १०८ सिद्धाः ॥ उक्तं च—

"रिसहो रिसहस्स सुया, भरहेण विवज्जिया नवनवई। अट्ठेव भरहस्स सुया, सिद्धिगया एगसमयम्मि"॥१॥

इति नवमं आश्चर्यम् ॥ ९ ॥

अथ "असंजयाणपूयात्ति" ॥ श्रीसुविधिनिर्वाणात् कियति काले गते साधुधर्मस्य विच्छेदो जातः।

१. वृषभो १ वृषभस्य सुता भरतेन विवर्जिताः ९९ नवनवतिः। अष्टौ ८ भरतस्य सुताः (१०८) शिवं गता एकसमयेन ॥ १ ॥

२. "अस्संजतेसु पूआ" असंयताः–असंयमवन्त आरम्भपरिग्रहप्रसक्ता अब्रह्मचारिणः तेषु पूजा=सत्कारः, सर्वदा हि किल संयता एव पूजार्हाः, अस्यां त्ववसर्पिण्यां विपरीतं जातमित्याश्चर्यं, (श्रीस्थानाङ्गसू० पृ० ५२४)

तदा लोकैः वृद्धश्रावकाः पृष्टाः–'भो ! धर्ममार्गं कथयत ।' तैः निजज्ञानानुसारेण स्वस्वादार्थं च प्रोक्तम्–'भो ! वृद्धश्रावकाणां धनं देयं, वसतिः देया, भव्यं भोजनं देयम्, कन्या देया, तेषां पूजा कर्तव्या ।' ततः तेषां पूजा जाता । अत्र असंयतानां सतां साधुबुद्ध्या पूजा जाता ॥ इदं दशमं आश्चर्यम् ॥ १० ॥

["दस वि अणंतेण कालेण" त्ति अत एवाह—दशापि एतानि (आश्चर्याणि) अनन्तेन कालेन अनन्तकालात् संवृत्तानि अस्यामवसर्पिण्यामिति, ॥] उक्तं च—

"दससु वि वासे(ए)सेवं, दस दस अच्छेरयाइं जायाइं । उस्सप्पिणिए एवं तित्थुग्गाली य भणियाइं" ॥ १ ॥

ननु एतानि दश आश्चर्याणि कस्य तीर्थङ्करस्य वारके जातानि ? इत्याह—

एकं शतं अष्टाधिकं ( १०८ ) सिद्धम् ऋषभदेवतीर्थे ॥ १ ॥ असंयति–पूजा सुविधिनाथतीर्थे ॥ २ ॥ हरिहरिणी-युगलिकनरकगमनं शीतलनाथतीर्थे ॥ ३ ॥ स्त्रीतीर्थङ्करः मल्लिनाथतीर्थे ॥ ४ ॥ शङ्खयोः [परस्परं] शब्दश्रवणं नेमिनाथतीर्थे ॥ ५ ॥ शेषाणि ( उपसर्गः १ गर्भहरणम् २ चंद्रसूर्यस्वविमानावतरणं ३ चमरोत्पातः ४ निष्फल-देशना ५ ) पश्च श्रीमहावीरसम्बन्धीनि ॥ १० ॥ उक्तं च—

"रिसहे अट्ठहिय सय–सिद्धे सीयलजिणम्मि हरिवंसो । नेमिजिणे अमरकंका–गमणं कण्हस्स संपन्नं ॥ १ ॥
इत्थीतित्थं मल्ली, पूआ अस्संजयाण नवमजिणे । अवसेसा अच्छेरा, वीरजिणिंदस्स तित्थम्मि" ॥ २ ॥

→ आश्चर्य दशकमिति ॥ ←

नामगुत्तस्स वा कम्मस्स अक्खीणस्स अवेइअस्स अणिज्जिण्णस्स उदएणं, जं णं अरिहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंतकुलेसु वा पंतकुलेसु वा तुच्छ० किवण० दरिद्द० भिक्खागकुलेसु वा आयाइंसु वा ३, कुच्छिंसि गब्भत्ताए वक्कमिंसु वा वक्कमंति वा वक्कमिस्संति वा। नो चेव णं जोणीजम्मणनिक्खमणेणं निक्खमिंसु वा ३ ॥ २२ ॥ अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते ॥ २३ ॥ तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं सक्काणं देविंदाणं देवराईणं अरहंते भगवंते तहप्पगारेहिंतो अंतकुलेहिंतो पंतकुलेहिंतो तुच्छ० किविण० दरिद्द० वणीमग० जाव माहणकुलेहिंतो तहप्पगारेसु उग्गकुलेसु वा भोगकुलेसु वा राइण्ण० नाय० खत्तिय० इक्खाग० हरिवं० अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु वा साहराविक्तए ॥ २४ ॥ तं गच्छ णं तुमं देवाणुप्पिआ ! समणं भगवं महावीरं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माह-

णस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तिय-कुंडग्गामे नयरे नायाणं खत्तियाणं सिद्धत्थस्स खत्तियस्स कासवगुत्तस्स भारियाए तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहराहि, जेऽविअ णं से तिसलाए खत्ति-याणीए गब्भे तंपिअ णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहराहि, साहरित्ता ममेयमाणत्तिअं खिप्पामेव पच्चप्पिणाहि ॥ २५ ॥

व्याख्या—"नामगुत्तस्स त्ति" नाम गोत्रकर्मणोः अक्षीणस्य=अवेदितस्य उदयेन उत्पद्यते, तत् जीतं यत् अर्हदादयः ४ उत्तमपुरुषाः अन्त-प्रान्तादिकुलेषु आगताः आगच्छन्ति आगमिष्यन्ति परं न च एवं कदापि भवति, यत् योनितो निष्क्रमणं भवति ॥ "अयं च णं त्ति" अयं च श्रमणो भगवान् महावीरो जंबूद्वीपे भरतक्षेत्रे ब्राह्मणकुण्डग्रामे ऋषभदत्तस्य ब्राह्मणस्य भार्यायाः देवानंदायाः कुक्षौ अवतीर्णः ॥ "तं जीअ-मेअं त्ति" तस्मात् अतीतानां वर्तमानानां अनागतानां च इन्द्राणां इदं जीतं-कल्पः आचारो वर्तते यत् अर्हदादीन् [ प्रति ] अन्त-प्रान्तादिकुलेभ्यः उग्रादिकुलेषु संक्रामयितुं । "तं गच्छणं त्ति" तस्मात् त्वं गच्छ देवानुप्रिय ! श्रमणं भगवन्तं महावीरं ब्राह्मणकुण्डग्रामात् ऋषभदत्तभार्यायाः देवानन्दायाः कुक्षितो लात्वा, क्षत्रियकुण्डग्रामे सिद्धार्थस्य राज्ञो भार्यायाः त्रिशलायाः कुक्षौ गर्भत्वेन संहर । अथ च यः त्रिशलागर्भः

पुत्रिकालक्षणः तं देवानंदाकुक्षौ संहर। इमां मम आज्ञां आज्ञप्तिं वा क्षिप्रमेव प्रत्यर्पय, मदाज्ञां कृतार्थीकृत्य शीघ्रं आगत्य निवेदयेत्यर्थः ॥

एवं इन्द्रेण आदेशे दत्ते सति हरिणैगमेषी देवः कीदृशो जातः ?, किं च कृतवान् ? तदाह—

तएणं से हरिणेगमेसी अग्गाणीयाहिवई देवे सक्केणं देविंदेणं देवरन्ना एवं वुत्ते समाणे हट्ठे जाव हयहियए करयल जावत्तिकट्टु, एवं जं देवो आणवेइत्ति आणाए विणएणं वयणं पडिसुणेइ, पडिसुणेत्ता उत्तरपुरच्छिमं दिसीभागं अवक्कमइ, अवक्कमित्ता वेउविअसमुग्घाएणं समोहणइ, वेउविअसमुग्घाएणं समोहणित्ता संखिज्जाइं जोअणाइं दंडं निसिरइ, तं जहा—रयणाणं वइराणं वेरुलिआणं लोहिअक्खाणं मसारगल्लाणं हंसगब्भाणं पुलयाणं सोगंधियाणं जोईरसाणं अंजणाणं अंजणपुलयाणं रयणाणं जायरूवाणं सुभगाणं अंकाणं फलिहाणं रिट्ठाणं अहाबायरे पुग्गले परिसाडेइ, परिसाडित्ता अहासुहुमे पुग्गले परिआदियइ ॥२६॥ परियाइत्ता दुच्चंपि वेउविअसमुग्घाएणं समोहणइ समोहणित्ता उत्तरवेउवियरूवं विउविइ, विउवित्ता ताए उक्किट्ठाए

तुरियाए चवलाए चंडाए जइणाए उद्धुआए सिग्घाए दिव्वाए देवगईए वीईवयमाणे २ तिरिअमसंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जेणेव जंबुद्दीवे दीवे, जेणेव भारहे वासे, जेणेव माहणकुंडग्गामे नयरे, जेणेव उसभदत्तस्स माहणस्स गिहे, जेणेव देवाणंदा माहणी, तेणेव उवागच्छइ, उवागच्छित्ता आलोए समणस्स भगवओ महावीरस्स पणामं करेइ, करित्ता देवाणंदाए माहणीए सपरिजणाए ओसोवणिं दलइ, ओसोवणिं दलित्ता असुभे पुग्गले अवहरइ, अवहरित्ता सुभे पुग्गले पक्खिवइ, पक्खिवित्ता अणुजाणउ मे भयवंति कट्टु, समणं भगवं महावीरं अव्वाबाहं अव्वाबाहेणं दिव्वेणं पहावेणं करयलसंपुडेणं गिण्हइ, समणं भगवं महावीरं० गिण्हित्ता जेणेव खत्तिअकुंडग्गामे नयरे, जेणेव सिद्धत्थस्स खत्तिअस्स गिहे, जेणेव तिसला खत्तियाणी, तेणेव उवागच्छइ, तेणेव उवागच्छित्ता तिसलाए खत्तिआणीए सपरिजणाए ओसोअणिं दलइ, ओसोअणिं दलित्ता असुभे पुग्गले अवहरइ, अवहरित्ता सुभे पुग्गले पक्खिवइ, पक्खिवित्ता समणं भगवं महावीरं अव्वाबाहं अव्वाबाहेणं तिसलाए खत्तिआणीए कुच्छिंसि

गब्भत्ताए साहरइ, जे वि अ णं से तिसलाए खत्तिआणीए गब्भे तंपिअ णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहरइ साहरित्ता ॥

व्याख्या-"तएणं त्ति" ततः सः हरिणैगमेषीदेवः देवेन्द्रेण एवम् उक्तः सन् हृष्टतुष्टो मस्तके अञ्जलिं कृत्वा एवं अवादीत्-"देवः स्वामी आज्ञापयति तत् तथैव "आणाए" आज्ञया विनयेन च "वयणं" आदेशवचनं, "पडिसुणेइ" प्रतिशृणोति-कर्तुं अभ्युपगच्छति, प्रतिश्रुत्य च "उत्तरपुरच्छिमं दिसीभागं" ईशानकूणं अपक्रामति=गच्छति गत्वा च "वेउव्विअसमुग्घाएणं" उत्तरवैक्रियरूपकरणाय प्रयत्नविशेषेण "समोहणइ" "समुग्घत्ति" आत्मप्रदेशान् विक्षिपति, समुद्घातस्वरूपमेव प्राह-"संखिज्जाइं जोअणाइं दंडं निसिरइ" दण्ड इव दण्डः, ऊर्ध्वाधआयतः शरीरबाहुल्यो जीवप्रदेशकर्मपुद्गलसमूहः तं दण्डं संख्यातानि योजनानि यावत्। निःसृजति=निष्कासयति वितनोति तत्र च विविधान् पुद्गलान् आदत्ते इति दर्शयन् आह, तत् यथा-"रयणाणं" इत्यादि। रत्नानां कर्केतनानां एवं वज्र-वैडूर्य-लोहिताक्ष-मसारगल्ल-हंसगर्भ-पुलक-सौगन्धिक-जातिसर-अञ्जन-अञ्जनपुलक-जातरूप-सुभग-अङ्करत्न-स्फटिकरत्नानां दण्डेन यथा बादरान् असारान् दण्डनिसर्गगृहीतान् पुद्गलान् परिसाट्य (=परित्यज्य), यथा सूक्ष्मान् सारान् पर्यादत्ते=प्रत्यादत्ते दण्डनिसर्गगृहीतान् सामस्त्येन आदत्ते इत्यर्थः॥ एवं द्वितीयवारं समुद्घातं करोति वाञ्छितरूपकरणार्थं, येन रूपेण

देवा मनुष्यलोकं समागच्छन्ति, इह च यद्यपि रत्नादिपुद्गला औदारिका वैक्रियसमुद्घाते च वैक्रिया एव ग्राह्या, तथापि इह तेषां रत्नादिपुद्गलानामिव सारताप्रतिपादनाय रत्नानाम् इत्याद्युक्तम्, तच्च रत्नादीनां इव इति व्याख्येयम् ॥ अन्ये आचार्याः एवमाहुः–औदारिका अपि ते गृहीताः सन्तो वैक्रियतया परिणमन्ति। अथ उत्तरवैक्रियरूपं कृत्वा कीदृश्या गत्या हरिणैगमेषिदेवो जम्बूद्वीपे आयाति? तदाह–तया देवजनप्रसिद्धया "ताए उक्किट्ठाए" उत्कृष्टया प्रशस्तविहायोगतिषु उत्कर्षवत्त्वात् "तुरयाए" त्वरितया मानसौत्सुक्यात् "चवलाए" चपलया कायतः "चंडाए" चण्डया संभारवत्त्वात्, "जयणाए" जयिन्या अशेष[कर्म] गतिजेतृत्वात् "उद्धु-याए" उद्धुतया अशेषावयवकम्पनात् "सिग्घाए" शीघ्रया परमोत्कृष्टवेगवत्त्वात् "दिव्वाए" देवजनोचितया "देवगईए" देवगत्या, अथवा गतिचतुष्टयमानं इदम्–यो देव एकया वींखया (=गत्या) योजनानां लक्षद्वयं

१ गतिमानं तु रीत्यन्तरेण सङ्ग्रहणीसूत्रे पठ्यते, तथा हि—

'एयम्मि पुणो गुणिए, तिपंचसगनवहि होइ कममाणं। तिगुणम्मी दो लक्खा, तेसीइसहस्स पंच सया ॥ ८५ ॥
असिईं छ सट्ठिभागा, जोअण चउलक्ख बिसत्तरि सहस्सा। छच्च सया तेत्तीसा, तीस कला पंचगुणिअंमि ॥ ८६ ॥
सत्तगुणे छलक्खा, इगसट्ठिसहस्स छसय छासीआ। चउपन्न कला तह नवगुणम्मि अडलक्ख सड्ढा उ ॥ ८७ ॥
सत्त सया चत्ताला, अट्ठारकला य इअ कमा चउरो। चंडा चवला जयणा, वेगा य तहा गई चउरो ॥ ८८ ॥ इति ॥'

२ "गतौ वीढा विहारेर्या–परिसर्पपरिक्रमाः" ('इखु' गतौ, वीङ्खनं–वीङ्खा) ॥ इति हेमचंद्रः ॥

गब्भत्ताए साहरइ, जे वि अ णं से तिसलाए खत्तिआणीए गब्भे तंपिअ णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिसि गब्भत्ताए साहरइ साहरित्ता ॥

व्याख्या–"तएणं त्ति" ततः सः हरिणैगमेषीदेवः देवेन्द्रेण एवम् उक्तः सन् हृष्टतुष्टो मस्तके अञ्जलिं कृत्वा एवं अवादीत्–'देवः स्वामी आज्ञापयति तत् तथैव "आणाए" आज्ञया विनयेन च "वयणं" आदेश-वचनं, "पडिसुणेइ" प्रतिश्रृणोति–कर्तुं अभ्युपगच्छति, प्रतिश्रुत्य च "उत्तरपुरच्छिमं दिसीभागं" ईशानकूणं अपक्रामति=गच्छति गत्वा च "वेउव्विअसमुग्घाएणं" उत्तरवैक्रियरूपकरणाय प्रयत्नविशेषेण "समोहणइ" "समुग्घत्ति" आत्मप्रदेशान् विक्षिपति, समुद्घातस्वरूपमेव प्राह–"संखिज्जाइं जोअणाइं दंडं निसिरइ" दण्ड इव दण्डः, ऊर्ध्वाधआयतः शरीरबाहुल्यो जीवप्रदेशकर्मपुद्गलसमूहः तं दण्डं संख्यातानि योजनानि यावत्। निःसृजति=निष्कासयति वितनोति तत्र च विविधान् पुद्गलान् आदत्ते इति दर्शयन् आह, तत् यथा–"रयणाणं" इत्यादि। रत्नानां कर्केतनानां एवं वज्र–वैडूर्य–लोहिताक्ष–मसारगल्ल–हंसगर्भ–पुलक–सौगन्धिक–जातिसर–अञ्जन–अञ्जनपुलक–जातरूप–सुभग–अङ्करत्न–स्फटिकरत्नानां दण्डेन यथा वादरान् असारान् दण्डनिसर्गगृहीतान् पुद्गलान् परिसाट्य (=परित्यज्य), यथा सूक्ष्मान् सारान् पर्यादत्ते=प्रत्यादत्ते दण्डनिसर्ग-गृहीतान् सामस्त्येन आदत्ते इत्यर्थः॥ एवं द्वितीयवारं समुद्घातं करोति वाञ्छितरूपकरणार्थं, येन रूपेण

॥ ४५ ॥

देवा मनुष्यलोकं समागच्छन्ति, इह च यद्यपि रत्नादिपुद्गला औदारिका वैक्रियसमुद्घाते च वैक्रिया एव ग्राह्या, तथापि इह तेषां रत्नादिपुद्गलानामिव सारताप्रतिपादनाय रत्नानाम् इत्याद्युक्तम्, तच रत्नादीनां इव इति व्याख्येयम् ॥ अन्ये आचार्याः एवमाहुः—औदारिका अपि ते गृहीताः सन्तो वैक्रियतया परिणमन्ति । अथ उत्तरवैक्रियरूपं कृत्वा कीदृश्या गत्या हरिणैगमेषिदेवो जम्बूद्वीपे आयाति? तदाह—तया देवजनप्रसिद्धया "ताए उक्किट्ठाए" उत्कृष्टया प्रशस्तविहायोगतिषु उत्कर्षवत्त्वात् "तुरयाए" त्वरितया मानसौत्सुक्यात् "चवलाए" चपलया कायतः "चंडाए" चण्डया संभारवत्त्वात्, "जयणाए" जयिन्या अशेष[कर्म] गतिजेतृत्वात् "उद्धु-याए" उद्धुतया अशेषावयवकम्पनात् "सिग्घाए" शीघ्रया परमोत्कृष्टवेगवत्त्वात् "दिव्वाए" देवजनोचितया "देवगईए" देवगत्या, अथवा गतिचतुष्टयमानं इदम्—यो देव एकया वींखया (=गत्या) योजनानां लक्षद्वयं

---

१ गतिमानं तु रीत्यन्तरेण सङ्ग्रहणीसूत्रे पठ्यते, तथा हि—

'एयम्मि पुणो गुणिए, तिपंचसगनवहि होइ कममाणं । तिगुणम्मी दो लक्खा, तेसीइसहस्स पंच सया ॥ ८५ ॥

असिई छ सट्ठिभागा, जोअण चउलक्ख बिसत्तरि सहस्सा । छच सया तेत्तीसा, तीस कला पंचगुणिअंमि ॥ ८६ ॥

सत्तगुणे छलक्खा, इगसट्ठिसहस्स छसय छासीआ । चउपन्न कला तह नवगुणम्मि अडलक्ख सड्ढा उ ॥ ८७ ॥

सत्त सया चत्ताला, अट्ठारकला य इअ कमा चउरो । चंडा चवला जयणा, वेगा य तहा गई चउरो ॥ ८८ ॥ इति ॥'

२ "गतौ वींखा विहारेर्या—परिसर्पपरिक्रमाः" ('इखु' गतौ, वीङ्खनं=वींखा) ॥ इति हेमचंद्रः ॥

अशीतिसहस्राः पञ्चशतानि अशीत्यधिकानि षट् च षष्टिकभागा २८०५८०$\frac{६}{६०}$ गच्छति सा चण्डा गतिः। (१) अथ च यो देव एकया वींखया योजनानां लक्षचतुष्टयं द्विसप्ततिसहस्राः षट्शतानि त्रिंशदधिकानि त्रिंशच्च षष्टिका भागा ४७२६३०$\frac{३०}{६०}$ गच्छति सा चपला गतिः (२) अथ च यो देव एकया वींखया योजनानां षट्लक्षाः एकषष्टिसहस्राः षट्शतानि षडशीत्यधिकानि चतुःपञ्चाशच्च कलाः गच्छति ६६१६८६$\frac{५४}{६०}$ सा जवना गतिः (३) अथ च यो देव एकया वींखया अष्टौ लक्षाः पञ्चाशत्सहस्राः सप्तशतानि चत्वारिंशदधिकानि अष्टादश भागा ८५०७४०$\frac{१८}{६०}$ गच्छति सा वेगवती गतिः (४) तया गत्या "वीईवयमाणे" व्यतिव्रजन् तिर्यगसंख्यातानां द्वीपसमुद्राणां मध्यभागेन यत्र जम्बूद्वीपे भरतक्षेत्रे ब्राह्मणकुण्डग्रामे ऋषभदत्तस्य गृहे यत्र देवानन्दा ब्राह्मणी तत्र आगच्छति, आगत्य च "आलोए" आलोके दर्शनमात्रे श्रमणस्य भगवतो महावीरस्य प्रणामं करोति, कृत्वा च देवानन्दायाः ब्राह्मण्याः सपरिजनायाः अवस्वापिनीं निद्रां ददाति, दत्त्वा च अशुभान् पुद्गलान् अपहरति, शुभान् पुद्गलान् प्रक्षिपति, ततः 'अनुजानातु मां भगवान्' इत्युक्त्वा श्रमणं भगवंतं महावीरं "अव्वाबाहं" भगवतो विशेषेण तत्पीडापरिहारात् "अव्वाबाहेणं" सुखेन संहर्तुरपि पीडाभावात्। यतः तथाविधकरणव्यापारेण संस्पृश्य अथवा "अव्वाबाहेणं" सुखं सुखेनेत्यर्थः। योनिद्वारेण निष्कास्य देवप्रभावेण करतलसंपुटेन गृह्णाति, गृहीत्वा यत्र क्षत्रियकुण्डग्रामे सिद्धार्थराजस्य गृहे यत्र त्रिशला क्षत्रियाणी तत्र आगच्छति, आगत्य च त्रिशलायाः क्षत्रियाण्याः सपरिजनायाः अवस्वापिनीं निद्रां ददाति,

दत्त्वा अशुभान् पुद्गलान् अपहरति, अपहृत्य च शुभान् पुद्गलान् प्रक्षिपति, प्रक्षिप्य च श्रमणं भगवन्तं महावीरं अव्याबाधं अव्याबाधेन त्रिशलायाः क्षत्रियाण्याः कुक्षौ गर्भत्वेन छविच्छेदं अकृत्वैव गर्भाशये "साहरइ" प्रवेशयति, "साहरित्ता" प्रवेशयित्वा, क्वचित् व्याख्यातम्, छविच्छेदकरणेऽपि ईषदपि बाधां नैव उत्पादयति, अन्यथा नखाग्रे वा रोमकूपे वा गर्भं प्रवेशयितुं हरिणैगमेषिदेवस्य शक्तिरस्ति ॥

अथ-गर्भसंहरणानन्तरं हरिणैगमेषिदेवः किं कृतवान् ? तदाह—

जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगए ॥ २७ ॥ उक्किट्ठाए तुरिआए चवलाए चंडाए जवणाए उद्धुआए सिग्घाए दिव्वाए देवगईए, तिरिअमसंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जोअणसाहस्सिएहिं विग्गहेहिं उप्पयमाणे २ जेणामेव सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सिक्कंसि सीहासणंसि सक्के देविंदे देवराया, तेणामेव उवागच्छइ, उवागच्छित्ता सक्कस्स देविंदस्स देवरन्नो एअमाणत्तिअं खिप्पामेव पच्चप्पिणइ ॥ २८ ॥

व्याख्या-अथ हरिणैगमेषिदेवः "जामेव दिसिं पाउब्भूए" यस्यां दिशोऽवधेः प्रादुर्भूतः प्रकटीभूत्, आगत इत्यर्थः, तामेव दिशं प्रति गतः ॥ परं किं कुर्वन् ? तया उत्कृष्टया चण्डादिगत्या तिर्यक् असंख्यातानां

द्वीपसमुद्राणां मध्येन योजनसाहस्रिकाभिः वींखाभिः "उप्पयमाणे" ऊर्ध्वं गच्छन्, यत्र सौधर्मदेवलोके सौधर्मावतंसके विमाने शक्रे सिंहासने शक्रो देवेन्द्रो=देवराजः तत्र आगच्छति, आगत्य च शक्रस्य=देवेन्द्रस्य देवराजस्य इमां आज्ञां क्षिप्रमेव प्रत्यर्पयति ॥

अथ कदा गर्भापहारकं कल्याणकं जातम् ? तदाह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जे से वासाणं तच्चे मासे पंचमे पक्खे आसोअबहुले, तस्स णं आस्सोअबहुलस्स तेरसीपक्खेणं बासीइराइंदिएहिं विइक्कंतेहिं तेसीइमस्स राइंदिअस्स अंतरा वट्टमाणे हिआणुकंपएणं देवेणं हरिणेगमेसिणा सक्कवयणसंदिट्ठेणं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारिआए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तियकुंडग्गामे नयरे नायाणं खत्तिआणं सिद्धत्थस्स खत्तिअस्स कासवगुत्तस्स भारिआए तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए पुव्वरत्तावरत्तकालसमयंसि हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं अवाबाहं अवाबाहेणं कुच्छिंसि गब्भत्ताए साहरिए ॥२९॥

व्याख्या—"तेणं कालेणं" तस्मिन् काले=तस्मिन् समये श्रमणो भगवान् महावीरः वर्षाकाले श्रावणादीनां

मध्ये तृतीये मासे आश्विने पञ्चमे पक्षे कृष्णपक्षे "तेरसीपक्खेणं" त्रयोदशीपक्षे पश्चार्धरात्रौ ञ्यशीतिरात्रिन्दिनेषु व्यतिक्रान्तेषु त्र्यशीतितमस्य रात्रिन्दिनस्य "अंतरा वट्टमाणे" अंतरकाले रात्रौ "हिआणुकंपएणं" हितः शक्रस्य स्वस्य च, अनुकम्पस्तु भक्तो भगवतः, अनुकम्पा च अत्र भक्तिः, एवंविधेन हरिणैगमेषिणा देवेन शक्रवचनसन्दिष्टेन ब्राह्मणकुण्डग्रामात् ऋषभदत्तभार्यायाः देवानन्दायाः कुक्षितः, क्षत्रियकुण्डग्रामे सिद्धार्थभार्यायाः त्रिशलायाः कुक्षौ अर्धरात्रिसमये उत्तरफाल्गुनीनक्षत्रे चन्द्रेण सह वर्तमाने गर्भत्वेन संहृतः ॥ भगवतस्तदा कियत् ज्ञानं आसीत्? तदाह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे तिन्नाणोवगए आवि हुत्था, तं जहा—साहरिजिस्सामित्ति जाणइ, साहरिज्जमाणे न जाणइ, साहरिएमित्ति जाणइ ॥ ३० ॥

व्याख्या—"समणे भगवं महावीरे" श्रमणो भगवान् महावीरः ज्ञानत्रयसहितोऽभवत्, तेन मां संहरिष्यति इति जानाति १ संह्रियमाणो न जानाति २ संहरणस्यापि एकसामयिकत्वात्। यद्यपि च अत्र अन्तर्मुहूर्तकालः संभाव्यते, तथापि छाद्मस्थिकोपयोगादपि संहरणकालः सूक्ष्मतर इत्याम्नायिकाः। केचित्तु "साहरिज्जमाणे वियाणइ" इति पठन्ति, कथम्? श्रीआचाराङ्गे तथैव दर्शनात्। परं न चायं पाठः सार्वत्रिकः। संहृत इति च जानाति ३ ॥

॥ उक्तमिति गर्भापहारकल्याणकम् ॥

अत्राऽऽह कोऽपि शिवशासनी-'अहो! जैनदर्शने एषा डिङ्गरूपा असम्बद्धा वक्तव्यता!। एवमपि गर्भ-परावर्तनं कदापि भवति? तत्रोच्यते-शिवशासनेऽपि श्रीभागवते दशमस्कन्धे द्वितीयाध्ययने बलदेवस्य गर्भ-परावर्तनं श्रूयते। तत्रत्यं श्लोकचतुष्टयम्-"भगवानपि विश्वात्मा, विदित्वा कंसजं भयम्। यदूनां निजनाथानां, योगमायां समादिशत् ॥ १ ॥ गच्छ देवि! व्रजं भद्रे, गोपं गोभिरलङ्कृतम्। रोहिणी वसुदेवस्य, भार्याऽऽस्ते नन्दगोकुले ॥ २ ॥ देवक्या जठरे गर्भं, शेषाख्यं धाम मामकम्। तत्संनिकृष्य रोहिण्या, उदरे संनिवेशयत् ॥ ३ ॥ गर्भसंकर्षणात् तं वै, आहुः संकर्षणं भुवि। रामेति लोकरमणा-द्दलभद्रं बलाश्रयात् ॥ ४ ॥"

पुनरपि पुराणे मान्धाताराजोत्पत्तिकथा यथा-विशाला नाम नगरी, तत्र यवनाश्वो राजा महासाम्राज्यधरः, परं अपुत्रः, तेन पुत्रार्थं १६०० षोडशशतकन्यापाणिग्रहणं कृतम्, परं तथापि पुत्रो न जायते, तेन मनसि अतीव दूनः चिन्तातुरः, यतः-"अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च। तस्मात् पुत्रमुखं दृष्ट्वा, स्वर्गे यान्ति हि मानवाः ॥ १ ॥" पुनः 'गेहंपि तं मसाणं, जत्थ न दीसंति धूलिधूसरमुहाइं। उट्ठंति पडंति रडवडंति दो तिन्नि डिंभाइं ॥' इत्यादि, ततः कस्याप्युपदेशात् ८८००० अष्टाशीतिसहस्रऋषीणां भोजनं दातुं प्रवृत्तः। ३३ त्रयस्त्रिंशत्कोटिदेवताऽऽराधनमपि कृतम्, तथापि पुत्रो न भवति। एकदा ८८ सहस्रऋषिभिः विमृष्टम्-'अयं राजा आत्मनां प्रत्यहं मिष्टान्नपानैः भक्तिं करोति, परं कस्यापि पुत्रकरणे शक्तिः नास्ति, सर्वेऽपि उदरम्भरयः

पारणायै मिलिताः सन्ति ।' तदा तेषां मध्यादेकेन मुनिना प्रोक्तम्–'अहं जानामि उपायम् ।' तदा सुवर्णकचोलके नीरं अभिमन्त्र्य, राज्ञो दत्तम्, प्रोक्तं च–'या तव अभीष्टा राज्ञी भवति तस्याः पाय्यम् पुत्रो भावी ।' राजा नीरं लात्वा स्वावासे गतः । सर्वाभी राज्ञीभिः श्रुतो व्यतिकरः, सर्वाभिः दासीद्वारा कथापितम्–'मम देयम् ।' राज्ञा विचारितम्–'राज्यो बह्वयः, कस्या दीयते ?, एकस्या दत्ते अन्याः सर्वा अपि क्लेशं करिष्यन्ति, मरिष्यन्ति, मां अपि मारयिष्यन्ति ।' पुनः ताभिः प्रोक्तम्–'यस्या दास्यसि पानीयम् तां वयं मारयिष्यामः ।' राज्ञा चिन्तितम्–'प्रतापो १ गौरवं २ पूजा ३, श्रीः ४ ह्रीः ५ यशः ६ सुप्रतिष्ठिता ७। तावत्कालं प्रवर्तन्ते, यावन्नोत्पद्यते कलिः ॥१॥" इति विचिन्त्य न कस्या अपि दत्तम् । नीरभृतं कचोलकं वस्त्रेण आच्छाद्य, पानीयस्थाने घटोपरि मुक्तम् । राजा स्वस्याऽऽवासे सुप्तः । रात्रौ राज्ञः तृषा लग्ना, पानीयं मार्गितम् । राज्यः कथयन्ति–'या तव अभीष्टा भविष्यति सा पानीयं पाययिष्यति ।' तदा अन्यः कोऽपि पार्श्वे नाभूत् । एका शय्यापालिका अभूत्, तया अजानत्या तत् कचोलकनीरं आनीय दत्तम्, राज्ञा च पीतम्, मन्त्रप्रभावात् गर्भो जातः । प्रतिदिनं (दिने दिने) उदरं वर्धते, राजा लज्जया सभायां नायाति, प्रत्युत असमाधानं जातम् । राज्ञा ८८ अष्टाशीतिसहस्रमुनीनां उपालम्भो दत्तः, 'लाभं इच्छतो मम मूलक्षतिः आयाता ।' ततः ३३ कोटिदेवता ८८ सहस्रमुनिमेलापकेन आराधित इन्द्रः समागतः, तेन स्वसेवकदेवपार्श्वात् राज्ञो नाभिं विदार्य संपूर्णो गर्भो निष्कासितः । सर्वैः प्रोक्तम्–'स्तन्यपानं कस्य करिष्यति ? ।' इन्द्रेण प्रोक्तम्–'मां धास्यति ।'

ततः इन्द्रेण स्त्रीरूपं कृत्वा, स्तन्यपानं कारितम्। क्रमेण वर्धमानो मान्धाता नाम राजा जातः इत्यादयो अनेके एवंविधा व्यतिकराः संति, ततो न जैनानां उपहासः कार्यः ॥

॥ इति मान्धाताराजोत्पत्तिकथानकम् ॥

श्रीकल्पसूत्रस्य द्वितीयं व्याख्यानं परं अतिबृहत्तरं तेन सति वेलासद्भावे एतत् सर्वं वाच्यम् । वेलाया अभावे गर्भापहारवक्तव्यता तृतीयव्याख्याने आदौ वाचयित्वा पश्चात् चतुर्दश स्वप्ना व्याख्यातव्याः ॥

व्याख्यानं कल्पसूत्रस्य, द्वितीयं सुगमं स्फुटम् । शिष्यार्थं पाठकाश्चक्रुः, समयादिमसुन्दराः ॥ १ ॥

इति श्रीकल्पसूत्रस्य द्वितीयं व्याख्यानं श्रीसमयसुन्दरोपाध्यायविरचितं सम्पूर्णम् ॥

## अथ तृतीयं व्याख्यानम् ॥

अथ पूर्वं प्रथमवाचनायां पंचपरमेष्ठिनमस्कारं व्याख्यातं श्रीमहावीरदेवस्य संक्षेपवाचनया कृत्वा षट्कल्याणकानि व्याख्यातानि, द्वितीयवाचनायां श्रीमहावीरदेवस्य च्यवनकल्याणकं दश आश्चर्याणि गर्भापहारकल्याणकं च व्याख्यातानि। तथा शैवशास्त्रोक्तानि मांधाताचक्रवर्तिप्रमुखानि संबंधानि व्याख्यातानि ॥

अथ तृतीयवाचनायां यस्यां रात्रौ हरिणैगमेषिदेवेन गर्भापहारः कृतः। तदा किं जातम्? तदाह—

जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिसि गब्भत्ताए साहरिए, तं रयणिं च णं सा देवाणंदा माहणी सयणिज्जंसि सुत्तजागरा ओहीरमाणी २ इमेयारूवे उराले कल्लाणे सिवे धन्ने मंगल्ले सस्सिरीए चउद्दस महासुमिणे तिसलाए खत्तियाणीए हडेत्ति पासित्ताणं पडिबुद्धा, तं जहा—गय० गाहा ॥ ३१ ॥

व्याख्या—"जं रयणिं" यस्यां रजन्यां रात्रौ सः श्रमणो भगवान् महावीरो देवानन्दायाः कुक्षितः त्रिशलायाः कुक्षौ गर्भत्वेन संहृतः, तस्यां रात्रौ सा देवानन्दा ब्राह्मणी शयनीये "सुत्तजागरा ओहीरमाणी" ईषन्निद्रां गच्छन्ती प्रचलानाम्नीं तृतीयनिद्रां प्राप्नुवन्ती, एतान्=एतद्रूपान् अग्रे व्याख्यास्यमानान् शिवादि-विशेषणोपेतान् पूर्वव्याख्यातार्थान् त्रिशला क्षत्रियाणी हृतान् दृष्ट्वा प्रतिबुद्धा=जागरिता। तान् कान्?। गजवृषभादीन् पूर्वं व्याख्यातान्। पुनः तस्यां रात्रौ किं जातम्? तदाह—

जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहरिए, तं रयणिं च णं सा तिसला खत्तिआणी तंसि तारिसगंसि वासघरंसि अब्भितरओ सचित्तकम्मे बाहिरओ दूमिअघट्ठमट्ठे विचित्तउल्लोअचिल्लियतले मणिरयणपणासिअंधयारे बहुसमसुविभत्तभूमिभागे पंचवन्नसरससुरभिमुक्कपुप्फपुंजोवयारकलिए कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धुयाभिरामे सुगंधवरगंधिए गंधवट्टिभूए।

व्याख्या—"जं रयणिं त्ति" पुनः यस्यां रात्रौ स श्रमणो भगवान् महावीरो देवानन्दायाः कुक्षितः त्रिशला-

क्षत्रियाण्याः कुक्षौ गर्भत्वेन संहृतः, तस्यां रात्रौ सा त्रिशला कीदृशे वासगृहे सुप्ता अभूत्? तस्य वासगृहस्य वर्णनं क्रियते "तंसि" तस्मिन् वासगृहे। किंविशिष्टे वासगृहे?। "तारिसे" तादृशके वक्तुं अशक्यस्वरूपे तत्स्वरूपं श्रीभद्रबाहुस्वामी कथयति न कोऽपि वर्णयितुं समर्थो भवति, एतादृशे पुण्यवतां योग्ये इत्यर्थः। पुनः किंविशिष्टे वासगृहे?। "अब्भिंतरओ सचित्तकम्मेत्ति" अभ्यंतरे अभ्यंतरतो भित्तिभागे भित्तेः मध्यभागे सचित्रकर्मणि चित्रकर्मसंयुक्ते। पुनः किंविशिष्टे वासगृहे?। "बाहिरओ दूमिअघट्ठमट्ठे" बाह्यतो भित्तिः बहिर्भागे "दूमिअं" धवलितम्। पुनः किंविशिष्टे वासगृहे?। घृष्टम् कोमलपाषाणादिना अत एव मृष्टं=मसृणं यत् तथा तस्मिन्। पुनः किंविशिष्टे वासगृहे?। "विचित्तउल्लोअचित्तिअतले" विचित्रं=आश्चर्यकृत्, उल्लोचस्य= चन्द्रोदयस्य, चित्रितं=विविधचित्रविच्छित्तिसंयुक्तम् तलं=अधोभागो यस्मिन् एतावता उपरि चन्द्रोदयो बद्धोऽस्ति, तस्य तलं नानाप्रकारचित्रसहितं वर्तते। "विचित्तउल्लोअचिल्लिय" इति पाठे तु अयमर्थः— विचित्रो विविधचित्रयुक्त उल्लोकः=उपरिभागः "चिल्लिअं" दीप्यमानं तलं=अधोभागो यत्र। ततो विशेषणकर्मधारयः। पुनः किंविशिष्टे वासगृहे?। "मणि" मणिरत्नैः प्रणाशितं दूरे गमितान्धकारं यत्र तत् तस्मिन्। पुनः किंविशिष्टे वासगृहे?। "बहुसमसुविभत्तभूमिभागे" बहु=अत्यर्थं, समः न निम्नो=नीचो नापि उन्नतः=उच्चः पञ्चवर्णमणिकुट्टिमकलितः। सुविभक्तकृतस्वस्तिको भूमिभागो यत्र तत्तस्मिन्। पुनः किंविशिष्टे वासगृहे? "पंचवन्नसरससुरभिमुक्कपुप्फपुंजोवयारकलिए" पञ्चवर्णेन पुनः सरसेन, पुनः सुरभिणा,

पुनः मुक्तेन=क्षिप्तेन, एवंविधेन पुष्पपुञ्जलक्षणेन उपचारेण । कोऽर्थः ? । पूजया कलिते=सहिते । पुनः किंविशिष्टे वासगृहे ? । कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झतधूवमघमघंतगंधुद्धुयाभिरामे" कालागुरु च कृष्णागुरु, प्रधानं कन्दुरुष्कं च चीडनामा गन्धद्रव्यविशेषः, तुरुष्कं च सेल्लकं धूपश्च दशांगादिः गंधद्रव्यसंयोगजः, ततो द्वन्द्वसमासे कृते तेषां संबन्धी यो मघमघायमानो अतिशयवान् गन्धः उद्धुतः=उद्भूतः तेनाभिरामे मनोहरे । पुनः किंविशिष्टे वासगृहे ? । "सुगंधवरगंधिए" सुष्ठु गन्धवराणां प्रधानवासानां गन्धो यस्मिन् तत् सुगन्धवरगन्धिकं तस्मिन् । क्वचित् "सुगंधवरगंधगंधिए" इति पाठः । तत्र सुगंधाः=सुरभयो ये वरगन्धाः प्रधानचूर्णाः तेषां गन्धो यत्रास्ति ( तत् सुगंधवरगंधगंधिकम् ) तस्मिन् । पुनः किंविशिष्टे वासगृहे ? । "गंधवट्टिभूए" गन्धवर्तिः गन्धद्रव्यगुटिका कस्तूरिका वा तद्गुटिका गन्धवर्तिः तद्भूते सौरभ्यातिशयात् गन्धद्रव्यगुटिकाकल्पे इत्यर्थः । इत्यनेन वासगृहं वर्णितम् ॥

अथ तस्मिन् वासगृहे यस्मिन् शयनीये त्रिशला सुप्ता अभूत्, तस्य शयनीयस्य वर्णनमाह—

तंसि तारिसगंसि सयणिज्जंसि सालिंगणवट्टिए उभओ बिब्बोअणे उभओ उन्नए मज्झे णयगंभीरे गंगापुलिणवालुअउद्दालसालिसए ओअविअखोमिअदुगुल्लपट्टपडिच्छन्ने सुविरइअरयत्ताणे रत्तंसुयसंवुए सुरम्मे आइणगरूयबूरनवणीअतूलतुल्लफासे सुगंधवरकुसुमचुन्नसयणोवयारक-

लिए, पुव्वरत्तावरत्तकालसमयंसि सुत्तजागरा ओहीरमाणी २ इमेआरूवे उराले जाव चउद्दस महासुमिणे पासित्ताणं पडिबुद्धा, तं जहा–गय[1]–वसह[2]–सीहं[3]–अभिसेयं[4]–दाम[5]–ससि[6]–दिणयरं[7]–झयं[8]–कुंभं[9]। पउमसर[10]–सागर[11]–विमाणभवण[12]–रयणुच्चय[13]–सिहिं[14] च १ ॥ ३२ ॥

व्याख्या–त्रिशला क्षत्रियाणी एतादृशे शयनीये सुप्ता सती चतुर्दश स्वप्नान् पश्यति स्म। किंविशिष्टे शयनीये ?। शय्यायां "तंसि" तस्मिन्। पुनः किंविशिष्टे शयनीये ?। "तारिसगंसि" तादृशे वक्तुं अशक्य-स्वरूपे। पुनः किंविशिष्टे शयनीये ?। "सालिंगणवट्टिए" सहआलिङ्गनवर्त्या शरीरप्रमाणेन गण्डोपधानेन वर्तते यत्र तस्मिन्। पुनः किंविशिष्टे शयनीये?। "उभओ" उभयतः शिरोन्तपादान्तावाश्रित्य "बिब्बोअणे" उपधाने गंडुके यत्र तस्मिन्। पुनः किंविशिष्टे शयनीये?। "उभओ उन्नए" अत एव उभयतः उन्नते। पुनः किंविशिष्टे शयनीये ?। "मज्झे णयगंभीरे" मध्ये नतं च तत् गम्भीरं च महत्त्वात् नत गम्भीरम्, अथवा मध्येन च मध्यभागेन तु गम्भीरे अवनते। क्वचित् "पन्नगविव्वोअणे" इति पाठो दृश्यते, तत्र सुपरिकर्मितगण्डोपधाने इत्यर्थः। पुनः किंविशिष्टे शयनीये ?। "गंगापुलिणवालुअउद्दालसालिसए" गङ्गापुलिनवालुकायां यो अवदालः=पादादि न्यासे अधोगमनम् तेन। "सालिसए" इति सदृशे अतिनम्रत्वात्। पुनः किंविशिष्टे शयनीये?। "ओअविअखोमिअदुगुल्लपट्टपडिच्छन्ने", उवचितं=रचितं परिकर्मितं यत् क्षौमं=अतसीमयं, दुकूलं=

वस्त्रम्, तस्य युगलापेक्षया यः पट्टः एकशाटकः सः प्रतिच्छदः=आच्छादनं यस्य तत् तस्मिन् । "पडिच्छन्ने" इति पाठे प्रतिच्छन्ने=आच्छादिते । पुनः किंविशिष्टे शयनीये ? । "सुविरइअरयत्ताणे" सुष्ठु विरचितं सुविरचितं । रजस्त्राणं=आच्छादनविशेषो अपरिभोगावस्थायां यत्र तत्तस्मिन् । पुनः किंविशिष्टे शयनीये ? । "रत्तं सुअसंबुए" रक्तांशुकेन मशकगृहनाम्ना वस्त्रेण संवृते=आवृते । पुनः किंविशिष्टे शयनीये ? । "सुरम्मे" अतिरमणीये अत्यन्तसुन्दरे अत्र शयनीये वस्त्रत्रयं उपरि जातम् । एकं अतसीमयः एकशाटकपट्टः, १। द्वितीयं अपरिभोगावस्थायां रजस्त्राणम् २। तृतीयं मशकमयं आच्छादनम् ३। पुनः किंविशिष्टे शयनीये ? । "आइणगरूअबूरनवणीयतूलफासे" आजिनकं चर्ममयो वस्त्रविशेषः, स च स्वभावात् अतिकोमलः स्यात् । 'रूतं' च कर्पासपक्ष्म । 'बूरो' वनस्पतिविशेषः । नवनीतं=म्रक्षणम् । एभिः चतुर्भिः तुल्यः=सदृशः स्पर्शो यस्य तत्तस्मिन् । "तूलत्ति" पाठे तु तूलं=अर्कतूलं, एषां इव स्पर्शो यस्य तत् तस्मिन् । पुनः किंविशिष्टे शयनीये ? । "सुगंधवरकुसुमचुन्नसयणोवयारकलिए" सुगन्धाभ्यां वररक्तकुसुमचूर्णाभ्यां प्रधानपुष्पजाति १ वासयोगाभ्यां २ यः शयनीयस्य=शय्यायाः उपचारः=पूजा तेन कलिते । अथ तस्मिन् शयनीये कदा कीदृशी जाता ? । "पुव्वरत्तावरत्तकाले" इति मध्यरात्रौ, एतस्य व्युत्पत्त्यादिकं पूर्वं कृतमस्ति । तस्यां शय्यायां "सुत्तजागरा ओहीरमाणी ओहीरमाणी" ईषन्निद्रां गच्छन्ती इमान् एतद्रूपान् उदारादिविशेषणोपेतान् चतुर्दशमहास्वप्नान् दृष्ट्वा प्रतिबुद्धा=जागरिता, तान् नामत आह–"गयवसहत्ति" प्रथमे स्वप्ने गजं पश्यति १, एवं

द्वितीये वृषभम् २, तृतीये सिंहम् ३, चतुर्थे "अभिसेयत्ति" अभिषिच्यमानां श्रीदेवीं ४, पंचमे "दामत्ति" पुष्पमालाम्। ५, षष्ठे "ससित्ति" चन्द्रम् ६, सप्तमे "दिणयरत्ति" सूर्यम् ७, अष्टमे ध्वजम् ८, नवमे पूर्णकलशम् ९, दशमे पद्मसरोवरम् १०, एकादशे समुद्रम् ११, द्वादशे देवविमानम् १२, त्रयोदशे रत्नपुञ्जम् १३, चतुर्दशे "सिहित्ति" अग्निं पश्यति १४ ॥

अथ चतुर्दशस्वप्नानां वर्णनम्। तत्र प्रथमम् गजवर्णनमाह—

तएणं सा तिसला खत्तिआणी तप्पढमयाए तओअचउद्दंतमूसिअगलियविपुलजलहरहार-
निकरखीरसागरससंककिरणदगरयरययमहासेलपंडुरतरं समागयमहुयरसुगंधदाणवासियकपो-
लमूलं देवरायकुंजरं (व) वरप्पमाणं पिच्छइ सजलघणविपुलजलहरगज्जियगंभीरचारुघोसं
इभं सुभं सव्वलक्खणकयंबिअं वरोरुं १ ॥ ३३ ॥

व्याख्या–ततः सा त्रिशला क्षत्रियाणी तत् प्रथमतया तेषां स्वप्नानां प्रथमतया पूर्वं ईदृशं इभं=गजं स्वप्ने पश्यति। अत्र कल्पसूत्रे प्रथमं इभदर्शनं प्रोक्तम्, तत्सामान्यवृत्तिं आश्रित्य, यतो द्वाविंशतितीर्थंकरमातरः प्रथमं गजमेव पश्यन्ति स्म। अन्यथा ऋषभदेवमाता तु मरुदेवास्वामिनी प्रथमं वृषभं, महावीरदेवमाता त्रिशला च प्रथमं सिंहं अपश्यत्। अतः सामान्यवृत्तिं आश्रित्य प्रथमं गजो व्याख्यायते। कीदृशं इभम्?।

"तओअचउद्दंतं" ततं=विस्तीर्णं ओजो=बलं येषां ते ततौजसः, एवंविधाः चत्वारो दन्ता यस्य सः तं। पुनः किंविशिष्टः ?। "ऊसियगलियत्ति" उच्छ्रितः उदग्रः "गलियत्ति" गलितः निर्जलः स चासौ विपुलजलधरो= विस्तीर्णमेघः। पुनः किंविशिष्टः ?। हारनिकरः पुञ्जीकृतहारः क्षीरसागरः=क्षीरसमुद्रः, "ससंककिरणत्ति" चन्द्रकिरणाः, "दगरयत्ति" उदकरजांसि=जलशीकराः रजतमहाशैलो वैताढ्यपर्वतः, एतेषामिव पाण्डुरतरं=अतिशुभ्रं पाण्डुरागं वा। पुनः किंविशिष्टम् इभम् ?। "समागयमहुरत्ति" समागता मधुकराः=भ्रमराः यत्र तत्, एवंविधं यत् सुगन्धं दानमदः तेन वासितं कपोलमूलं यस्य स तम्। एतावता यस्य कपोलमूले भ्रमराः रणझणायमानाः सन्ति। इयमेव गजस्य शोभा, क्वचित् "महुअरत्ति" पदं न दृश्यते, तत्र समागतं सततं यद् वहमानं यत् सुगन्धं दानं तेन वासितं कपोलमूलं यस्य स तम् इति व्याख्येयम्। पुनः किंविशिष्टम् इभम् ?। "देवरायत्ति" देवराजस्य इन्द्रस्य कुञ्जरो=हस्ती ऐरावणः तद्वत् वरं प्रधानं प्रमाणं यस्य स तम्। शास्त्रोक्तदेहमानमित्यर्थः। पुनः किंविशिष्टम् इभम् ?। "सजलघणविपुलत्ति" सजलो=जलसहितो घनो=निबिडः परस्परं मिलितो विपुलो विस्तीर्णो यो जलधरो मेघः तस्य गर्जितं तद्वत् गम्भीरः चारुः प्रधानो घोषो यस्य हस्तिनः स तम्। पुनः किंविशिष्टं इभम् ?। शुभं प्रशस्तं कल्याणकारिणं वा। पुनः किंविशिष्टं इभम् ?। "सव्वलक्खणत्ति" सर्वलक्षणानां=समस्तहस्तिलक्षणानां कदम्बं=समूहो जातमस्येति सर्वलक्षणकदम्बितः तम्। पुनः किंविशिष्टं इभम् ?। वरोरुम्, वरश्चासौ उरुः विशालश्च वरोरुः तम्। भद्र- ॥ ५२ ॥

हस्तिदर्शनात् यथा परचक्रं महत्तममपि भङ्क्त्वापि याति, तथा इभदर्शनादन्तरङ्गवैरिव्रजो नश्यति इति हेतोः इभदर्शनम् ॥ इति गजस्वप्नविचारः ॥ १ ॥

अथ द्वितीयस्वप्ने वृषभं त्रिशला क्षत्रियाणी पश्यति, तस्य वर्णनं कीदृशम्? तदाह—

तओ पुणो धवलकमलपत्तपयराइरेगरूवप्पभं पहासमुदओवहारेहिं सव्वओ चेव दीवयंतं अइसिरिभरपिल्लणाविसप्पंतकंतसोहंतचारुककुहं तणुसुइसुकुमाललोमनिद्धच्छविं थिरसुबद्ध-मंसलोवचिअलट्ठसुविभत्तसुंदरंगं पिच्छइ घणवट्टलट्ठउक्किट्ठविसिट्ठतुप्पग्गतिक्खसिंगं दंतं सिवं समाणसोहंतसुद्धदंतं वसहं अमिअगुणमंगलमुहं २ ॥ ३४ ॥

व्याख्या—"तओ पुणो" ततः पुनः त्रिशला क्षत्रियाणी वृषभं पश्यति। पुनः किंविशिष्टं वृषभम्? "धवलकमलेत्ति" धवलकमलपत्राणां प्रकारात् समूहात् अतिरेका=अधिका रुक्=प्रभा यस्य स तम्। किं कारयन्तम्?। "पहासमुदयेत्ति" प्रभायाः=कान्त्याः समुदायः=समूहः तस्य उपहाराः=विस्तारणानि तैः सर्वतः सर्वदिशो दीपयन्तम्। पुनः किंविशिष्टं वृषभम्?। "अइसिरिभरपिल्लणेत्ति" अतिश्रियाः=उत्कृष्टशोभाया यो भरः=सम्भारः तेन यत् प्रेरणं तेनैव विसर्पत्=उल्लसत्। अत एव कान्तं=दीप्तं शोभमानं चारु प्रधानं ककुदं=

स्कन्धो यस्य स तम्। इदं ककुदं स्वभावेनैव उल्लसति, परं तत्र उत्प्रेक्षा क्रियते–इदं न स्वभावेन उल्लसति, किंतु सहजशोभासम्भारेण प्रेर्यमाणं उल्लसति। पुनः किंविशिष्टं वृषभम्?। "तणुसुइसुकुमाललोमनिद्दच्छविं" तनोः=शरीरस्य शुचिसुकुमालरोम्णां स्निग्धा छविः यस्य स तम्। पुनः किंविशिष्टं वृषभम्?। "थिरसुबद्धेत्ति" स्थिरं अत एव सुबद्धं, अत एव मांसलं, अत एव उपचितं लष्टं प्रधानं सुविभक्तं यथावत् संनिविष्टाऽवयवं सुन्दरं अङ्गं यस्य स तम्। एतावता यस्य वृषभस्य अङ्गानि अवयवाः स्थिराणि=सुबद्धानि मांसलानि उपचितानि प्रधानानि यथावत् संनिविष्टावयवानि सन्ति। पुनः किंविशिष्टं वृषभम्?। "घणवट्टलट्ठेत्ति" घने=निचिते वृत्ते=वर्तुले वलिते=लष्टात् अपि उत्कृष्टे अतिश्रेष्ठे 'तुप्पग्गे' म्रक्षिताग्रे=तीक्ष्णे शृङ्गे यस्य स तम्। क्वचित् "तुप्पपुप्फग्गतिक्खत्ति" पाठः, तत्र तुप्पे=म्रक्षिते पुष्पाग्रे पुष्पाकारं गोरोचनासत्तासूचकं बिन्दुरूपं पुष्पं तत् अग्रे=उपरिभागे ययोः इति योज्यम्। पुनः किंविशिष्टं वृषभम्?। दन्तम्, न दुर्दान्तम्। पुनः किंविशिष्टं वृषभम्?। "सिवं" शिवं=उपद्रवनिवारकम्। पुनः किंविशिष्टं वृषभम्?। "समाणसोहंतसुद्धदंतं" समानाः=तुल्यप्रमाणाः अत एव शोभनाः शुद्धाः=निर्दोषाः श्वेता वा दन्ता यस्य स तम्। एतावता यस्य वृषभस्य दन्ताः तुल्यप्रमाणाः शोभनाः निर्दोषाः श्वेताश्च वर्तन्ते। पुनः किंविशिष्टं वृषभम्?। "अमिअगुणमंगलमुहं" अमितगुणानां मङ्गलानां मुखं इव मुखं=द्वारम्। "मंगलमुहं" इति पाठे तु "अमिअगुणं" अत एव "मंगलमुहं" कल्याणकरणसमर्थम्।

वृषभदर्शने अयं परमार्थः–यथा वृषभो भारं वहति हेलया, एवं स्वामी संयमभारवहनं करिष्यति ॥
इति द्वितीयवृषभस्वप्नविचारः ॥ २ ॥

अथ त्रिशला क्षत्रियाणी तृतीये स्वप्ने सिंहं ददर्श, स सिंहः कीदृशः ? तद्वर्णनं कथ्यते—

तओ पुणो हारनिकरखीरसागरससंककिरणदगरयरययमहासेलपंडुरंगं(२००)रमणिज्जपिच्छणिज्जं थिरलट्ठपउट्ठवट्टपीवरसुसिलिट्ठविसिट्ठतिक्खदाढाविडंबिअमुहं परिकम्मिअजच्चकमलकोमलपमाणसोहंतलट्ठउट्ठं रत्तुप्पलपत्तमउअसुकुमालतालुनिल्लालियग्गजीहं मूसागयपवरकणगताविअआवत्तायंतवट्टतडियविमलसरिसनयणं विसालपीवरवरोरुं पडिपुन्नविमलखंधं मिउविसयसुहुमलक्खणपसत्थविच्छिन्नकेसराडोवसोहिअं ऊसिअसुनिम्मिअसुजायअप्फोडिअलंगूलं सोमं सोमाकारं लीलायंतं नहयलाओ ओवयमाणं नियगवयणमइवयंतं पिच्छइ सा गाढतिक्खग्गनहं सीहं वयणसिरीपल्लवपत्तचारुजीहं ३ ॥ ३५ ॥

व्याख्या–"तओ पुणो" ततः पुनः द्वितीयवृषभस्वप्नानन्तरं सा त्रिशला क्षत्रियाणी एवंविधं सिंहं नभस्तलात्=आकाशात् अतिपतन्तं=अवतरन्तं निजवदनं=स्वकीयमुखं अभिपतन्तं=प्रविशन्तं सिंहं पश्यति, परं तं

सिंहं किंविशिष्टम्?। हारनिकरेत्यादि–व्याख्या प्राग्वत्। तथापि अयं परमार्थः—यादृशो हारपुञ्जः १ यादृशः क्षीरसमुद्रः २ पुनः यादृशाः चन्द्रकिरणाः ३ यादृशानि पानीयरजांसि=शीकराः ४ यादृशो वैताढ्यः ५ तेषामिव यः सिंहो धवलो वर्तते। पुनः किंविशिष्टं सिंहम्?। "रमणिज्जपिच्छणिज्जं" रमणीयं=अत्यन्तसुन्दरं अत एव प्रेक्षणीयं=द्रष्टुं योग्यम्। पुनः किंविशिष्टं सिंहम्?। "थिरलट्ठेत्ति" स्थिरौ=दृढौ लष्टौ=प्रधानौ प्रकोष्ठौ लषीकान्तौ, अस्य प्रयोगे लषितौ वा कान्तौ प्रकोष्ठौ कलाचिकौ यस्य स तम्। एतावता यस्य सिंहस्य कलाचिके दृढे प्रधाने कान्ते च वर्तेते। पुनः किंविशिष्टं सिंहम्?। तथा वृत्ताः=वर्तुलाः पीवराः=स्थूलाः सुश्लिष्टाः तीक्ष्णाः या दाढाः ताभिः विडम्बितं=अलङ्कृतं शोभितं मुखं यस्य स तम्। ततः कर्मधारयः। "विडंबिअत्ति" विवृतं इत्यन्ये। पुनः किंविशिष्टं सिंहम्?। "परिकम्मिअत्ति" परिकार्मितौ इव परिकार्मितौ जात्या कमलकोमलौ। पुनः किंविशिष्टं?। प्रमाणेन मात्रया शोभमानौ। "माइअसोभनत्ति" पाठे तु "माइअत्ति" मानोपेतौ मायान्वितौ क्रूरत्वात् शोभमानौ लष्टौ=प्रधानौ ओष्ठौ यस्य स तम्। एतावता यस्य सिंहस्य ओष्ठौ कमलवत् कोमलौ प्रमाणसहितौ शोभमानौ च वर्तेते। पुनः किंविशिष्टं सिंहम्?। "रत्तुप्पलेत्ति" रक्तोत्पलपत्रवत् मृदु=सुकुमारं तालु च निर्लालिताग्रा=निष्काशिताग्रा जिह्वा च यस्य स तम्। तालुस्थाने क्वचित् "तलत्ति" दृश्यते, तत्र रक्तोत्पलपत्रवत् मृदु तलं यस्याः, एवंविधा निर्लालिताग्रा=लपलपायमानाग्रा जिह्वा यस्य इति व्याख्या। पुनः किंविशिष्टं सिंहम्?। "मूसागयपवरेत्ति" मूषागतं=मृन्मयभाजनविशेषस्थं यत् प्रवरकनकं तदपि तापितं अग्निना

अत एव आवर्तमानं तद्वत् वृत्ते विमलतडित्सदृशे नयने यस्य तम् । अत्र आर्षत्वात् विशेषणविशेष्ययोः पूर्वापरनिपातनाया अनियमः । एतावता सिंहस्य नयने मूषागतवह्नितापितस्वर्णविद्युत्सदृशे पीते वर्तेते । पुनः किंविशिष्टं सिंहम्? । "विसालपीवरेवत्ति०" विशालौ पीवरौ [करौ] वरौ ऊरू यस्य सः । पुनः परिपूर्णो अन्यूनो विमलः स्कन्धो यस्य सः, ततः पदद्वयस्य कर्मधारयः, तम् । पुनः किंविशिष्टं सिंहम् ? । "मिउविसयेत्ति" मृदूनि=सुकुमाराणि विशदानि=धवलानि सूक्ष्माणि=तनूनि लक्षणैः प्रशस्तानि विस्तीर्णानि केसराणि=स्कन्धरोमाणि तेषां आटोपः तेन उद्धततया शोभितः तम् । एतावता यस्य सिंहस्य स्कन्धे सुकुमारा धवला सूक्ष्मा विस्तीर्णा उद्धता केसरसटा वर्तते। पुनः किंविशिष्टं सिंहम्?। "ऊसिअसुनिम्मिअत्ति" उच्छ्रितं उदग्रं सुनिर्मितं कुण्डलीकृतं सुजातं संपूर्ण आस्फोटितं=आच्छोटितं लाङ्गूलं=पुच्छं येन स तम् । एतावता येन सिंहेन उदग्रं कुण्डलीकृतं संपूर्णं पुच्छं आच्छोटितं वर्तते । पुनः किंविशिष्टं सिंहम् ? । "सोमं" सौम्यम् वा मनसा अक्रूरम् । पुनः सिंहं कीदृशम् ? । "सोमाकारं" मनोहराकृतिम् । पुनः किंविशिष्टं सिंहम् ?। "लीलायंतं" मंथरगतिं नतु धावमानं। पुनः किंविशिष्टं सिंहम् ?। जंभायंतं जंभां कुर्वाणं(?)। पुनः किंविशिष्टं सिंहम् ?। "गाढतिक्खग्गनहं" गाढतीक्ष्णाग्राः नखाः यस्य स तम् । पुनः किंविशिष्टं सिंहम्? । "वयणसिरीपल्लवेत्ति०" वदनस्य=मुखकुहरस्य श्रिये=शोभार्थं पल्लव इव मृदुत्व-रक्ताभ्यां प्रासा=प्रसारिता चार्वी=मनोहरा जिह्वा येन स तम् । नच "निल्लालियग्गजीहं" इत्यनेन पौनरुक्त्यं, विशेषणान्तरोपादानात्। क्वचित् "वयणसिरीपलंबपत्तचारुजीहं"

इति पाठः, तत्र वदनस्य श्रीः=शोभा तादृशी प्रलम्बमाना पत्रवत् चार्वी जिह्वा यस्य तम्। अत्र सिंहस्वप्नदर्शने अयं हेतुः—यथा सिंहात् गजघटा भीत्या पलायते तथा भगवद्दर्शनात् भाववैरिश्रेणिः पलायते ॥ इति तृतीयसिंहस्वप्नविचारः ॥ ३ ॥

अथ त्रिशला क्षत्रियाणी चतुर्थे स्वप्ने श्रीदेवीं पश्यति, परं सा कीदृशी ? तद् वर्णनमाह—

तओ पुणो पुन्नचंदवयणा, उच्चागयठाणलट्ठसंठिअं पसत्थरूवं सुपइट्ठिअकणगकुम्मसरिसोवमाणचलणं अच्चुन्नयपीणरइअमंसलउन्नयतणुतंबनिद्धनहं कमलपलाससुकुमालकरचरणकोमलवरंगुलिं कुरुविंदावत्तवट्टाणुपुव्वजंघं निगूढजाणुं गयवरकरसरिसपीवरोरुं चामीकररइअमेहलाजुत्तकंतविच्छिन्नसोणिचक्कं जच्चंजणभमरजलयपयरउज्जुअसमसंहिअतणुअआइज्जलडहसुकुमालमउअरमणिज्जरोमराइं नाभीमंडलसुंदरविसालपसत्थजघणं करयलमाइअपसत्थतिवलियमज्झं नाणामणिकणगरयणविमलमहातवणिज्जाभरणभूसणविराइयंगोवंगिं हारविरायंतकुंदमालपरिणद्धजलजलिंतथणजुअलविमलकलसं आइयपत्तिअविभूसिएणं सुभगजालुज्जलेणं मुत्ताकलावएणं उरत्थदीणारमालियविरइएण कंठमणिसुत्तएण य कुंडलजुअलुल्लसंतअंसो-

वसत्तसोभंतसप्पभेणं सोभागुणसमुदएणं आणणकुडुंविएणं कमलामलविसालरमणिज्जलो-अणं कमलपज्जलंतकरगहिअमुक्कतोयं लीलावायकयपक्खएणं सुविसदकसिणघणसण्हलंबं-तकेसहत्थं पउपमद्दहकमलवासिणिं सिरिं भगवइं पिच्छइ हिमवंतसेलसिहरे दिसागइंदोरुपी-वरकराभिसिच्चमाणिं ४ ॥ ३६ ॥

व्याख्या–"तओ पुणो" अथ सिंहदर्शनानन्तरं पुनः त्रिशला क्षत्रियाणी पूर्णचन्द्रवदना=चन्द्रमुखी श्रीदेवीं स्वप्ने पश्यति। कविसमयः एवम्–'मानवा मौलितो वर्ण्या, देवाश्चरणतः पुनः।' इति ततः श्रीदेवीवर्णनं चरणतः क्रियते। पुनः किंविशिष्टां श्रीदेवीम्?। "उच्चागयठाणलट्ठसंठिअं" उच्चं आगतं=प्राप्तम्, यद्वा उच्चो यो=अगः पर्वतो हिमवान् तत्र जातः तम् उच्चागजं यत् स्थानं कमलं तत्र लष्टं यथा स्यात् एवं संस्थिताम्। किंविशिष्टां श्रीदेवीम्?। "पसत्थरूवंत्ति" प्रशस्तरूपां अतिसुन्दररूपाम्। पुनः किंविशिष्टां श्रीदेवीम्?। "सुपइट्ठिअकणगेत्ति" सुप्रतिष्ठौ=समतलनिवेशितौ कनकमयकूर्मेण उन्नतत्वात् सदृशं उपमानं ययोः तादृशौ चरणौ यस्याः सा ताम्। एतावता यस्याः श्रीदेव्याः चरणौ सुवर्णकच्छपवत् उन्नतौ वर्तेते। पुनः किंविशिष्टां श्रीदेवीम्?। "अच्चुन्नयपीणेति" अत्युन्नतं पीनं अङ्गुष्ठाद्यङ्गं तत्र रञ्जिता मृगरमणादन्यत्रापि मतेन न लोपो रञ्जिता इव लाक्षारसेन मांसला उन्नता मध्योन्नताः तनवः तलितास्ताम्रा अरुणाः स्निग्धा अरुक्षा नखा यस्याः सा, यद्वा

अत्युन्नतान् अपि=निजरूपदर्पोद्धरान् अपि प्रीणयन्तीति अत्युन्नतप्रीणाः इति नखविशेषणमेव कार्यम् । एतावता यस्याः श्रीदेव्या नखा लाक्षारसरञ्जिता इव मध्योन्नता रक्ताः स्निग्धाश्च वर्तन्ते । पुनः किंविशिष्टां श्रीदेवीम् ? । "कमलपलासत्ति" कमलस्य पलाशानि=पत्राणि कमलपलाशानि तद्वत् सुकुमारं करचरणं यस्याः, सा चासौ कोमलवराङ्गुलिश्च ताम् । एतावता यस्याः श्रीदेव्याः कमलपत्रसदृशौ सुकुमारौ करौ चरणौ कोमलाः प्रधाना अङ्गुलयश्च वर्तन्ते । पुनः किंविशिष्टां श्रीदेवीम् ? । "कुरुविंदावत्तवट्टाणुपुव्वजंघं" कुरुविन्दावर्तो भूषणविशेषः आवर्तो विशेषो वा, तद्वत् वृत्तौ वृत्तानुपूर्वे जङ्घे यस्याः सा ताम् । एतावता यस्या जङ्घयोः कुरुविन्दावर्तमानो [ नामा ] आभरणविशेषो वर्तते आवर्तविशेषो वा चिह्नरूपो वर्तते । पुनः किंविशिष्टां श्रीदेवीम् ? । "निगूढजाणू" निगूढे जानुनी यस्याः सा ताम् । पुनः किंविशिष्टां श्रीदेवीम् ? । "गयवरत्ति" [ गजेंद्र-शुण्डा ] हस्तिवरकरशुण्डा तत् सदृशौ पीवरौ पुष्टौ ऊरू यस्याः सा तां, ऐरावणकरसदृशपीवरोरुं इति स्पष्टम् । पुनः किंविशिष्टां श्रीदेवीम् ? । "चामीकररइअत्ति" चामीकरेण सुवर्णेन रचिता मेखला चामीकररचितमेखला तया युक्तम्=सहितं कान्तं विस्तीर्णं श्रोणिचक्रं यस्याः सा ताम् । एतावता यस्याः कटितटं स्वर्णमेखलया विराजमानं वर्तते । पुनः किंविशिष्टां श्रीदेवीम् ? । "जच्चंजणभमरेत्ति" जात्याञ्जन १ भ्रमर २ जलदप्रकर ३ इव वर्णेन तत्समा ऋज्वी=सरला समा-अविषमा सहिता निरन्तरा तनुका सूक्ष्मा आदेया "सुकुमा-लमउअरमणिज्जरोमराइं" सुकुमारेभ्योऽपि शिरीषपुष्पादिभ्योऽपि मृद्वी रमणीया=मनोज्ञा रोमराजी यस्याः

सा ताम् । एतावता यस्याः श्रीदेव्या रोमराजी जात्याञ्जन १ भ्रमर २ मेघघटावत् ३ श्यामा शिरीषादिपुष्पादिभ्योऽपि सुकुमारा निरन्तरा मनोहरा च वर्तते । पुनः किंविशिष्टां श्रीदेवीम् ?। "नाभीमंडलेति" नाभीमण्डलेन सुन्दरं विशालं प्रशस्तं सुलक्षणत्वात् जघनं यस्याः सा ताम् । एतावता यस्याः श्रीदेव्या नाभीमण्डलेन जघनं अत्यन्तसुन्दरं प्रशस्तलक्षणसहितं च वर्तते । पुनः किंविशिष्टां श्रीदेवीम् ?। "करयलमाइअत्ति" करतलेन (मुष्टिना) मेयं मानं वा, प्रशस्तत्रिवलीकं शोभनवलित्रययुक्तं मध्यं यस्याः सा ताम्। एतावता यस्याः कटिमध्यं करतलेन ग्राह्यं वलित्रयशोभितं च वर्तते । पुनः किंविशिष्टां श्रीदेवीम् ?। "नानामणित्ति" नानाप्रकाराणि यानि भूषणानि=आभरणानि वा इति योज्यम् । मणयः=चन्द्रकान्ताद्याः, रत्नानि =वैडूर्यादीनि, कनकं=पीतवर्णं तपनीयं=रक्तस्वर्णं, तच्च जात्यत्वात् विमल–महच्छब्दाभ्यां विशेषितं तेषां यानि आभरणानि अंगपरिधेयानि, भूषणानि उपाङ्गपरिधेयानि तैः विराजितानि यथाक्रमं अङ्गानि=शिरःप्रभृतीनि, उपाङ्गानि=अङ्गुल्यादीनि यस्याः सा ताम् । आगम आर्षत्वात् । एतावता नानाप्रकारैः चन्द्रकान्तादिमणीनां वैडूर्यादिरत्नानां पीतसुवर्णस्य रक्तसुवर्णस्य च यानि आभरणानि तैः शिरःप्रभृतीनि अङ्गानि, भूषणैश्च अङ्गुल्यादीनि उपाङ्गानि यस्याः, विराजमानानि सन्ति । पुनः किंविशिष्टां श्रीदेवीम्?। "हारविरायंत्ति" हारेण विराजत् कुन्दमालया च परिणद्धं। "जलजलिंतत्ति" जाज्वल्यमानम्, "जलजलितत्ति" पाठे तु जलवत् भृशं दीप्यमानं स्तनयुगलमेव विमलौ कलशौ यस्याः सा ताम्। एतावता यस्याः श्रीदेव्याः स्तनयुगलं हारेण कुन्दजातीय-

पुष्पमालया च विराजितं कलशसदृशं च वर्तते। पुनः किंविशिष्टां श्रीदेवीम्?। एवंविधेन मुक्ताकलापेन मौक्तिकहारेण सहिताम्। किंविशिष्टेन मुक्ताकलापेन?। "आइयपत्ति" आदृतैः=आदरसहितैः प्रत्ययैः तैः आप्तैः वैज्ञानिकैः, विभूषितेन विरचितमण्डलेन। पुनः किंविशिष्टेन मुक्ताकलापेन? "सुभगेत्ति" सुभगैः=दृष्टिहारिभिः जालकैः=गुच्छविशेषैः उज्ज्वलेन। अथवा किंविशिष्टेन मुक्ताकलापेन?। आचितैर्मर्यादास्थानौचित्येन न्यस्ता पत्रिका मरकतपत्राणि ताभिर्विभूषितेन इति योज्यम्। क्वचित् "आतिअपत्तिअत्ति" दृश्यते, तत्र त्रिकं वंशस्य अधोभागः, तत्समीपोपलक्षितोऽग्रभागोऽपि त्रिकम्। ततः आत्रिकात्=त्रिकं यावत्, प्राप्तिः=अवकाशो यस्य तत् आत्रिकप्राप्तिकम्। एवंविधं विभूषितं=विभूषा येन मुक्ताकलापेन तदवधि प्रलम्बमानत्वात् इत्यर्थः। पुनः किंविशिष्टां श्रीदेवीम्?। "उरत्थदीणारमालियेत्ति" उरःस्थया दीनारमालया विरचितेन विराजितेन वा कण्ठमणिसूत्रकेण च उपलक्षिताम्। पुनः किंविशिष्टां श्रीदेवीम्?। आननकौटुम्बिकेन शोभागुणसमुदयेन च उपलक्षिताम्। किंविशिष्टेन आननकौटुम्बिकेन?। "कुंडलेत्ति" आर्षत्वात्, अंसोपसक्तं स्कन्धलग्नं विशेषणमपि परमेव। एवमन्यत्रापि यत् कुंडलयुगं तस्य उल्लसन्ती प्रशस्ता प्रभा यत्र तथाभूतेन। यथा किल राजा कौटुम्बिकैः शोभते एवमाननमपि शोभासमुदायेन इति, शोभा दीप्तिः, स एव गुणः तस्य समुदायः प्राग्भारः तेन उपलक्षिताम्। पुनः किंविशिष्टां श्रीदेवीम्?। "कमलेत्ति" कमलवत् अमले विशाले विस्तीर्णे रमणीये लोचने यस्याः सा ताम्। पुनः किंविशिष्टां श्रीदेवीम्?। "कमलेत्ति" प्रज्वलन्तौ दीप्तौ यौ करौ तद्गृहीताभ्यां

कमलाभ्यां मुक्तं=क्षरत्तोयं मकरन्दरसो यस्याः सा ताम्। अत्रापि कमलशब्दस्य प्राकृतत्वेन पूर्वनिपातः। पुनः किंविशिष्टां श्रीदेवीम्?। "लीलावायेत्ति०" लीलया, न पुनः खेदापनोदार्थम्, तस्याः खेदस्यैव अभावात्। वातार्थं=वातक्षेपार्थं कृतो यः पक्षकः=तालवृन्तं व्यञ्जनमित्यर्थः, तेन उपलक्षिताम्। केचित् लीला=शोभा तदर्थं परैः सह स्पर्धया वादः तत्र कृतो विहितः पक्षः=प्रतिज्ञापरिग्रहो येन स तथा। क-प्रत्ययेनेति शोभागुणसमुदयस्य विशेषणतया व्याचक्षते। तच्च दूरान्तरितत्वेन न प्रतीयते। पुनः किंविशिष्टां श्रीदेवीम्?। "सुविसदेत्ति" सुविशदः स्पष्टः, न पुनर्जटाजूटवत् अविवृत्तः, कृष्णः=श्यामो घनोऽविरलः सूक्ष्मः तलिनो लम्बमानः केशहस्तः केशपाशो यस्याः सा ताम्। एतावता यस्याः श्रीदेव्याः केशपाशः स्पष्टः श्यामो लम्बमानश्च शोभते। पुनः किंविशिष्टां श्रीदेवीम्?। "पउमेत्ति" पद्मद्रहमध्यवर्तिकमलवासिनीम्। पुनः किंविशिष्टां श्रीदेवीम्?। "दिग्गजेत्ति" दिग्गजैः उरुपीवरकरैः गरिष्ठपुष्टशुण्डादण्डैः अभिषिच्यमानां भगवतीं=पूज्यां, हिमवच्छैलशिखरे पूर्वकृतवर्णनां श्रीदेवीं त्रिशला क्षत्रियाणी पश्यति ॥

अथ श्रीदेवीस्वरूपं क्षेत्रस्वरूपं च क्षेत्रसमासादिषु प्रोक्तं लिख्यते ॥

तथाहि-अस्मिन् जम्बूद्वीपे भरतक्षेत्रे हिमवान् पर्वतोऽस्ति। शाश्वतः परं स कीदृक्?। स्वर्णमयः, एकं सहस्रं द्विपञ्चाशत् योजनानि द्वादश कलाश्च १०५२ₖₗ यः पृथुलो वर्तते। पुनः यः शत १०० योजनानि उच्चोऽस्ति। तस्य हिमवत्पर्वतस्य उपरि एकः पद्मद्रहोऽस्ति, स कीदृशः? दश १० योजनानि उंडः, पञ्चशत ५०० योजनानि

पृथुलः=(विस्तृतः)। एकं १००० योजनसहस्रं च लम्बं, निर्मलजलेन संपूर्णः, तस्य पद्मद्रहस्य वज्ररत्नमयं तलं, वज्ररत्नमयं च पार्श्वद्वयं, तस्य पद्मद्रहस्य मध्ये एकं श्रीदेवीवासयोग्यं कमलं वर्तते। परं तत् कीदृशम्?। एकं १ योजनं पृथुलं, एकं १ योजनं लम्बं, दश १० योजनानि पानीयमध्ये, क्रोशद्वयं २ पानीयस्य उपरि, त्रीणि ३ योजनानि सविशेषं तस्य परिधिः, वज्ररत्नमयं तस्य कमलस्य तलं, अरिष्टरत्नमयं तस्य मूलं, रक्तरत्नमयः तस्य कन्दः, वैडूर्यरत्नमयं तस्य नालं, रत्नस्वर्णमयानि(बहूनि) तस्य बाह्यपत्राणि। किंविशिष्टानि?। किञ्चिद् रक्तजाम्बूनदनामसुवर्णमयानि तस्य मध्ये अभ्यन्तरपत्राणि तस्य कमलस्य मध्ये बीजकोशरूपा स्वर्णमयी एका कर्णिका वर्तते। सा कीदृशी?। रत्नस्वर्णमयाः तस्याः केसराः, क्रोशद्वयं सा लम्बा, पृथुला च। एकं क्रोशं यावत्, उच्चा पिण्डरूपेण क्रोशत्रयं सविशेषं तस्याः परिधिः, तस्याः कर्णिकाया मध्यभागे श्रीदेवीयोग्यं एकं गृहं वर्तते। तत् कीदृशम्?। एकं क्रोशं यावत् लम्बं, अर्धक्रोशं यावत् पृथुलम्, किञ्चिन्न्यूनक्रोशं यावत्-उच्चं, तस्य गृहस्य त्रीणि द्वाराणि-एकं द्वारं पूर्वदिशि १, द्वितीयं द्वारं दक्षिणदिशि २, तृतीयं द्वारं उत्तरदिशि ३, तानि द्वाराणि पञ्चधनुःशतानि (५००) उच्चानि, सार्धद्विशतधनूंषि (२५०) पृथुलानि सन्ति, तस्य गृहस्य मध्ये सार्धद्विशतधनुःप्रमाणा (२५०) एका मणिमयी वेदिका वर्तते। तस्या वेदिकाया उपरि एका श्रीदेवतायोग्या शय्या वर्तते। अथ मौलं इदं कमलं यत् कथितं, तत् कमलं अष्टोत्तरशतकमलैः १०८ वलयाकारेण परिवेष्टितं वर्तते। एतानि अष्टोत्तरशतकमलानि मौलमुख्यकमलात् अर्धप्रमाणानि ज्ञेयानि, तेषु अष्टोत्तरशतकमलेषु श्रीदेव्या

आभरणानि सन्ति ॥ इति प्रथमो वलयः ॥ १ ॥ पुनः प्रथमवलयस्य परितो वलयाकारेण कमलानां द्वितीयो वलयो वर्तते । तत्र पूर्वदिशि श्रीदेव्याः चतस्रो महत्तरा देव्यो वर्तन्ते, तासां चत्वारि कमलानि सन्ति (१), पुनः आग्नेयकूणे श्रीदेव्या अभ्यन्तरपर्षदि स्थातारो गुरुस्थानीया अष्टौ सहस्राणि देवा वर्तते । तेषां अष्टौ सहस्राणि कमलानि सन्ति (२), पुनः दक्षिणदिशि श्रीदेव्याः मध्यमपर्षदि स्थातारः दशसहस्रदेवा मित्रस्थानीया वर्तन्ते, तेषां दशसहस्रकमलानि सन्ति (३), पुनः नैर्ऋतिकूणे श्रीदेव्याः द्वादशसहस्रप्रमाणाः किङ्करस्थानीया देवाः सन्ति, तेषां द्वादशसहस्रकमलानि सन्ति (४), पुनः पश्चिमदिशि श्रीदेव्याः [ हस्ति–तुरंगम–रथ–पादाति–महिष–गान्धर्व–नाट्यरूपाः ] सप्त अनीकाधिपतयः सन्ति (५), वायव्यकूणे १ उत्तरदिशि २ ईशानकूणे ३ च एतत्त्रयदिक्षु श्रीदेव्याः चतुःसहस्रप्रमाणाः सामानिका देवाः वर्तन्ते, तेषां चतुःसहस्रकमलानि सन्ति ॥ एवं दिशां अष्टकेन द्वितीयो वलयः ॥ २ ॥ पुनः द्वितीयवलयस्य परितो वलयाकारेण तृतीयो वलयो वर्तते, तस्मिन् वलये श्रीदेव्याः षोडशसहस्रप्रमाणाः अङ्गरक्षका देवा वर्तन्ते, तेषां षोडशसहस्रकमलानि सन्ति ॥ इति तृतीयवलयः ॥ ३ ॥ पुनः तस्मात् तृतीयवलयात् परितो वलयाकारेण चतुर्थो वलयो वर्तते, तस्मिन् आभ्यन्तरवलये श्रीदेव्याः ये द्वात्रिंशल्लक्षा आभ्यन्तरा आभियोगिकदेवाः सन्ति, तेषां द्वात्रिंशल्लक्षकमलानि सन्ति॥ इति चतुर्थो वलयः ॥४॥ पुनः तस्मात् चतुर्थात् आभ्यन्तरवलयात् परितो वलयाकारेण पञ्चमो मध्यमवलयो वर्तते, तस्मिन् वलये ये श्रीदेव्याः चत्वारिंशल्लक्षा मध्यमा आभियोगिकदेवा वर्तन्ते,

तेषां चत्वारिंशल्लक्षानि कमलानि सन्ति ॥ इति पञ्चमो वलयः ॥ ५ ॥ पुनः तस्मात् पञ्चमवलयात् परितो वलयाकारेण षष्ठो बाह्यवलयो वर्तते, तस्मिन् वलये श्रीदेव्या अष्टचत्वारिंशल्लक्षा[४८०००००] ये बाह्या आभियोगिकदेवा वर्तन्ते, तेषां देवानां अष्टचत्वारिंशल्लक्षकमलानि सन्ति ॥ इति षष्ठो वलयः ॥ ६ ॥ अथ कियन्ति सर्वाणि कमलानि जातानि ? तत्राह–एका कोटी विंशतिलक्षाः पञ्चाशत्सहस्राः एकं शतं विंशतिश्च कमलानि[१२०५०१२०] शाश्वतानि पृथिवीमयानि वनस्पतिकायकमलसदृशाकारतया दृश्यमानानि एतत्सर्वकमलवासिनो देवा देव्यश्च श्री(लक्ष्मी)सेवां कुर्वाणाः सन्ति। केचित् श्रीस्थाने लक्ष्मीं कृत्वा वर्णयन्ति, तत् न सङ्गतिं अङ्गति, यतो लक्ष्मीदेवता तु ऐरावतक्षेत्रे शिखरिपर्वतद्रहनिवासिनी, अथवा "लक्ष्मीः पद्मा रमा, या मा ता सा श्रीः कमलेन्दिरा" (कां० २ श्लो० १४०) इति श्रीहेमाचार्यवचनात् लक्ष्मी श्रीपर्यायत्वेन गण्यते, तदा लक्ष्मीनामग्रहणं अपि युक्तम्, नान्यथा ॥ इति चतुर्थश्रीदेवीस्वप्नविचारः ॥ ४ ॥

अथ पञ्चमे स्वप्ने त्रिशला क्षत्रियाणी पुष्पमालां पश्यति, परं सा कीदृशी ? तत्राह—

तओ पुणो सरसकुसुममंदारदामरमणिज्जभूअं चंपगासोगपुन्नागनागपिअंगुसिरीसमुग्गरगमल्लिआजाइजूहिअंकोल्लकोज्जकोरिंटपत्तदमणयनवमालिअबउलतिलयवासंतिअपउमुप्पलपाडलकुंदाइमुत्तसहकारसुरभिगंधिं अणुवममणोहरेणं गंधेणं दस दिसाओ वि वासयंतं सव्वोउ-

असुरभिकुसुममल्लधवलविलसंतकंतबहुवन्नभत्तिचित्तं छप्पयमहुअरिभमरगणगुमगुमायंतनिलिंतगुंजंतदेसभागं दामं पिच्छइ नहंगणतलाओ ओवयंतं ५ ॥ ३७ ॥

व्याख्या–"तओ पुणो" ततः=चतुर्थस्वप्नदर्शनानन्तरं त्रिशला क्षत्रियाणी एवंविधं दाम=पुष्पमालां पश्यति। किंविशिष्टं (दाम=मालां)? "सरसकुसुमेत्ति" सरसकुसुमं यत् मन्दारदाम तेन रमणीयभूतं=रम्यं संजातम्। एतावता पारिजात १ मन्दार २ हरिचन्दन ३ सन्तानकादि ४ कल्पवृक्षभेदपुष्पमालाभिः शोभितम्। पुनः किंविशिष्टं दाम? "चंपकासोगेत्ति" चंपक–अशोक–पुन्नाग–नाग–प्रियङ्गु–शिरीष–मोग्गरक–मल्लिका–जाति–यूथिका–कोल्ल–कोज–कोरकण्ट–पत्र–दमनक–नवमालिका–वासन्तिका–पद्म–उत्पल–पाटल–कुंद–अतिमुक्तक–सहकाराणां सुरभिगन्धो वर्तते यस्मिन् तत्। पुनः किं कुर्वन्?। अनुपमेन गन्धेन दश दिशोऽपि वासयन्। पुनः किंविशिष्टं दाम?। "सव्वओयेत्ति" सर्वर्तुकं यत् सुरभिकुसुममाल्यं तेन धवलं च तत्, विलसत् कान्तम् बहुवर्णभक्तिचित्रं चेति विशेषणकर्मधारयः। अनेन धवलवर्णस्य आधिक्यं लक्ष्यते। पुनः "षट्पदेत्ति" षट्पदमधुकरीभ्रमराः वर्णादिविशिष्टभ्रमरजातयः तेषां गणः समुदायः गुमगुमायमानो मधुरं ध्वनन् निलीयमानः=स्थानान्तरात् आगत्य तत्र लीयमानो, गुञ्जन्=शब्दविशेषं कुर्वन्, देशभागेषु=तस्मिन् देशो यस्य, दाम्नः गमकत्वात् एवमपि समासः। ततः पाश्चात्यविशेषणकर्मधारयेण सह षट्पदादिविशेषणस्य पुनः

तेषां चत्वारिंशल्लक्षानि कमलानि सन्ति ॥ इति पञ्चमो वलयः ॥ ५ ॥ पुनः तस्मात् पञ्चमवलयात् परितो वलयाकारेण षष्ठो बाह्यवलयो वर्तते, तस्मिन् वलये श्रीदेव्या अष्टचत्वारिंशल्लक्षा[4800000] ये बाह्या आभियोगिकदेवा वर्तन्ते, तेषां देवानां अष्टचत्वारिंशल्लक्षकमलानि सन्ति ॥ इति षष्ठो वलयः ॥ ६ ॥ अथ कियन्ति सर्वाणि कमलानि जातानि ? तत्राह–एका कोटी विंशतिलक्षाः[12050120] पञ्चाशत्सहस्राः एकं शतं विंशतिश्च कमलानि शाश्वतानि पृथिवीमयानि वनस्पतिकायकमलसदृशाकारतया दृश्यमानानि एतत्सर्वकमलवासिनो देवा देव्यश्च श्री(लक्ष्मी)सेवां कुर्वाणाः सन्ति। केचित् श्रीस्थाने लक्ष्मीं कृत्वा वर्णयन्ति, तत् न सङ्गतिं अङ्गति, यतो लक्ष्मीदेवता तु ऐरावतक्षेत्रे शिखरिपर्वतद्रहनिवासिनी, अथवा "लक्ष्मीः पद्मा रमा, या मा ता सा श्रीः कमलेन्दिरा" (कां० २ श्लो० १४०) इति श्रीहेमाचार्यवचनात् लक्ष्मी श्रीपर्यायत्वेन गण्यते, तदा लक्ष्मीनामग्रहणं अपि युक्तम्, नान्यथा ॥ इति चतुर्थश्रीदेवीस्वप्नविचारः ॥ ४ ॥

अथ पञ्चमे स्वप्ने त्रिशला क्षत्रियाणी पुष्पमालां पश्यति, परं सा कीदृशी ? तत्राह—

तओ पुणो सरसकुसुममंदारदामरमणिज्जभूअं चंपगासोगपुन्नागनागपिअंगुसिरीसमुग्गरगमल्लिआजाइजूहिअंकोल्लकोज्जकोरिंटपत्तदमणयनवमालिअबउलतिलयवासंतिअपउमुप्पलपाडलकुंदाइमुत्तसहकारसुरभिगंधिं अणुवममणोहरेणं गंधेणं दस दिसाओ वि वासयंतं सव्वोउ-

असुरभिकुसुममल्लधवलविलसंतकंतबहुवन्नभत्तिचित्तं छप्पयमहुअरिभमरगणगुमगुमायंतनि-
लिंतगुंजंतदेसभागं दामं पिच्छइ नहंगणतलाओ ओवयंतं ५ ॥ ३७ ॥

व्याख्या–"तओ पुणो" ततः=चतुर्थस्वप्नदर्शनानन्तरं त्रिशला क्षत्रियाणी एवंविधं दाम=पुष्पमालां पश्यति। किंविशिष्टं (दाम=मालां)? "सरसकुसुमेत्ति" सरसकुसुमं यत् मन्दारदाम तेन रमणीयभूतं=रम्यं संजातम्। एतावता पारिजात १ मन्दार २ हरिचन्दन ३ सन्तानकादि ४ कल्पवृक्षभेदपुष्पमालाभिः शोभितम्। पुनः किंविशिष्टं दाम? "चंपकासोगेत्ति" चंपक–अशोक–पुन्नाग–नाग–प्रियङ्गु–शिरीष–मोग्गरक–मल्लिका–जाति–यूथिका–कोल्ल–कोज–कोरकण्ट–पत्र–दमनक–नवमालिका–वासन्तिका–पद्म–उत्पल–पाटल–कुंद–अतिमुक्तक–सहकाराणां सुरभिगन्धो वर्तते यस्मिन् तत्। पुनः किं कुर्वन्?। अनुपमेन गन्धेन दश दिशोऽपि वासयन्। पुनः किंविशिष्टं दाम?। "सव्वओयेत्ति" सर्वऋतुकं यत् सुरभिकुसुममाल्यं तेन धवलं च तत्, विलसत् कान्तम् बहुवर्णभक्तिचित्रं चेति विशेषणकर्मधारयः। अनेन धवलवर्णस्य आधिक्यं लक्ष्यते। पुनः "पट्पदेत्ति" पट्पदमधुकरीभ्रमराः वर्णादिविशिष्टभ्रमरजातयः तेषां गणः समुदायः गुमगुमायमानो मधुरं ध्वनन् निलीयमानः=स्थानान्तरात् आगत्य तत्र लीयमानो, गुञ्जन्=शब्दविशेषं कुर्वन्, देशभागेषु=तस्मिन् देशे यस्य, दाम्नः गमकत्वात् एवमपि समासः। ततः पाश्चात्यविशेषणकर्मधारयेण सह षट्पदादिविशेषणस्य पुनः

कर्मधारयः । पुनः किंविशिष्टं दाम ?। नभोऽङ्गणतलात् अत्र पतत्=अवतरत् ॥ दाम्नो दर्शनात् यथा पुष्पमाला-परिमलः सर्वदिक्षुः प्रसरति, तथा भगवतोऽपि यशःपुञ्जः प्रसरिष्यति तद्वत् सौरभो भावीति । दामदर्शनात्त्रि-भुवनलोके मस्तके धारयिष्यति ॥ इति पञ्चमदामस्वप्नविचारः ॥ ५ ॥

अथ-षष्ठे स्वप्ने त्रिशला क्षत्रियाणी चन्द्रं पश्यति । परं स चन्द्रः कीदृशः ? तत्राह—

ससिं च गोखीरफेणदगरयरययकलसपंडुरं सुभं हिअयनयणकंतं पडिपुन्नं तिमिरनिकरघणगुहिरवितिमिरकरं पमाणपक्खंतरायलेहं कुमुअवणविबोहगं निसासोहगं सुपरिमट्ठदप्पणतलोवमं हंसपडुवन्नं जोइसमुहमंडगं तमरिपुं मयणसरापूरगं समुद्ददगपूरगं दुम्मणं जणं दइअवज्जिअं पायएहिं सोसयंतं पुणो सोमचारुरूवं पिच्छइ सा गगणमंडलविलाससोमचंकम्ममाणतिलगं रोहिणिमणहिअयवल्लहं देवी पुन्नचंदं समुल्लसंतं ६ ॥ ३८ ॥

व्याख्या-'ससिं च' सा देवी त्रिशला क्षत्रियाणी षष्ठे स्वप्ने शशिनं=चन्द्रं पश्यति । परं किंविशिष्टं शशिनम्?। "गोखीरेत्ति" गोक्षीरं=गोदुग्धम्, फेनः प्रसिद्धः । दकरजांसि=पानीयशीकराः, रजतकलशो रूप्यघटः एतेषामिव पाण्डुरः=शुभ्रः तम्। पुनः किंविशिष्टं शशिनम् ?। शुभं=कल्याणकारकम्। पुनः किंविशिष्टं शशिनम् ?। "हिअयेत्ति" हृदयस्य नयनयोश्च कान्तम् । पुनः किंविशिष्टं शशिनम् ? । प्रतिपूर्णं=संपूर्णम्। पुनः

किंविशिष्टं शशिनम् ?। "तिमिरेत्ति" तिमिरनिकरेण घनगम्भीरं यस्य वननिकुञ्जादेः वितिमिरकरम्, तिमिराणां अभावो वितिमिरं, तत्करणशीलम्। पुनः किंविशिष्टं शशिनम् ?। "पमाणपक्खवत्ति" प्रमाणपक्षयोः=वर्षादि-प्रमाणहेत्वोः शुक्लकृष्णपक्षयोः अन्तर्मध्ये राजन्ती लेखा यस्य स तम्। अथवा चन्द्रमासापेक्षया प्रमाण-पक्षयोः अन्ते=पौर्णमास्यां रागदा=हर्षदायिन्यो लेखाः=कला यस्य स तम्, संपूर्णकलमित्यर्थः। पुनः किंविशिष्टं शशिनम् ?। "कुमुअत्ति" कुमुदवनानां=रात्रिविकासिकमलानां विबोधकं=प्रकाशकम्। पुनः किंविशिष्टं शशिनम् ?। निशायाः=रात्रेः शोभकं=शोभाकारकम्। पुनः किंविशिष्टं शशिनम् ?। "सुपरिमट्ठेत्ति" सुपरिमृष्टेन दर्पणतलेन उपमा यस्य स तम्। पुनः किंविशिष्टं शशिनम् ?। हंसस्येव पटुः=धवलो वर्णो यस्य स तम्। पुनः किंविशिष्टं शशिनम् ?। "जोइसेत्ति" अत्र "जोइसमुहमंडगं" इति पदं सर्वत्र दृश्यते, तच्च अधिकमिव लक्ष्यते, वृत्तौ अव्याख्यानात्। पुनः किंविशिष्टं शशिनम् ?। तमसः=अन्धकारस्य रिपुः-वैरी तस्य ध्वंसनात्। "तमोऽरिपुं" इति पाठे तमसः=अन्धकारस्य न रिपुः प्रस्तावो यस्मिन् स तम्। अत्र अकारस्य प्रश्लेषः कार्यः। पुनः किंविशिष्टं शशिनम् ?। "मयणे त्ति" मदनस्य=कन्दर्पस्य शरापूरमिव=तूणीरमिव, उदिते हि चन्द्रे लक्षीकरोति कामः कामिनां स्वशराणाम्। पुनः किंविशिष्टं शशिनम् ?। "समुदेत्ति" समुद्रस्य उदकं=पानीयम् पूरयति चन्द्रिकया तस्य=समुद्रस्य उल्लासनात्। पुनः किं कुर्वन्तम् ?। "दुम्मणंति" जनं=विरहिणी-लोकं, पादैः=किरणैः शोषयन्तम्, तापातिरेककरणात्। "पादकैरिति" प्रशंसायाम् कन्। पुनरिति योजित-

मेव । पुनः किंविशिष्टं जनम्?। दुर्मनस्कं=दुःखिनम्। कुतः?। यतो दयितवर्जितम् भर्तृवर्जितम्। पुनः किंविशिष्टं शशिनम्?। सौम्यचारुरूपम्। पुनः किंविशिष्टं शशिनम्?। "गगनेत्ति" गगनमण्डलस्य=आकाशमण्डलस्य विशालस्य सौम्यं चङ्क्रम्यमाणं जङ्गमं तिलकमिव, विभूषाहेतुत्वात्। "गगणगमणित्ति" पाठे तु–गम्यते अनेन अस्मिन् वा गमनम्=मार्गः। पुनः किंविशिष्टं शशिनम्?। "रोहिणित्ति" रोहिण्याः मनः=चित्तं तस्य हितदः=अनुकूलदायी वल्लभः=प्रियः तम्। एकपाक्षिकप्रेमनिरासार्थं हितद इत्युक्तम्। सर्वनक्षत्राधिपत्वेऽपि यत् अत्र रोहिणीवल्लभः इति विशेषणं तत् लोकरूढ्या। पुनः किंविशिष्टं शशिनम्?। पूर्णो=अविकलः चन्द्रः=आह्लादो यस्मात्। अथवा पूर्णः चन्द्रो=दीप्तिः यस्य, मेघाद्यनावरणात्। अत एव समुल्लसन्तं=प्रतिक्षणं दीप्यमानम्। पुनः यस्य चन्द्रस्य सैन्यं एतावत् वर्तते—अष्टाशीतिमङ्गलादयो ग्रहाः, अष्टाविंशतिः नक्षत्राणि–अश्विन्यादीनि। पुनः ताराणां षट्षष्टिसहस्रकोटिकोट्यश्च नवशतकोटिकोट्यः पंचसप्ततिकोटिकोट्यश्च एते सर्वेऽपि चन्द्रस्य सेवां कुर्वन्ति। चन्द्रस्वप्नदर्शनात् भगवान् चन्द्रसदृशवदनो भवतापसन्तापहारी लोकानां हृदयनयनानां आह्लादकारी च भविष्यति॥ इति षष्ठचन्द्रस्वप्नविचारः॥ ६॥

अथ सप्तमस्वप्ने त्रिशला क्षत्रियाणी सूर्यं पश्यति, परं स कीदृशः? तत्राह—

तओ पुणो तमपडलपरिप्फुडं चेव तेअसा पज्जलंतरूवं, रत्तासोगपगासकिंसुअसुअमुहगुंजद्धराग-

सरिसं कमलवणालंकरणं अंकणं जोइसस्स अंबरतलपईवं हिमपडलगलग्गहं गहगणोरुनायगं रत्तिविणासं उदयत्थमणेसु मुहुत्तसुहदंसणं दुन्निरिक्खरूवं रत्तिसुद्धंतदुप्पयारपमद्दणं सीअवेगमहणं पिच्छइ मेरुगिरि सयय परियट्टयं विसालं सूरं रस्सीसहस्सपयलियदित्तसोहं ७ ॥ ३९ ॥

व्याख्या–"तओ पुणो" ततः सा त्रिशला क्षत्रियाणी सप्तमे स्वप्ने एवंविधं 'सूरं'=सूर्यं पश्यति । परं किंविशिष्टं सूरम् ?। "तमपडलपरिप्फुडं" तमःपटलस्य अभावः अतमःपटलम्, तेन परिस्फुटम् । अथवा तमःपटलं परिस्फोटयतीति तमःपटलपरिस्फुटः । "स्वराणां स्वरा" इति ओत उत् ५। पुनः किंविशिष्टं सूरम् ?। चेवशब्दस्य अवधारणार्थस्य व्यवहितसंबंधात् तेजसैव प्रज्वलद्रूपं । प्रकृत्या हि सूर्यमण्डलवर्तित्वाद् बादरपृथिवीकायिकाः शीतला एव। अथवा "चेवत्ति" समुच्चयार्थः। पुनः किंविशिष्टं सूरम्?। "रत्तासोगत्ति" रक्ताशोकश्च १, प्रकाशकिंशुकश्च पुष्पितपलाशः २, शुकमुखे च ३, गुञ्जार्धश्च ४, इत्येतेषां रागेण सदृशः तम्, आरक्तत्वात् । एतावता रक्तोऽशोकवृक्षः १ पुष्पितकिंशुकवृक्षः २ शुकस्य मुखं च ३ गुञ्जाया अर्धभागो मुखं विना ४ एतानि चत्वारि यथा रक्तानि भवन्ति तद्वत्, सूर्योऽपि रक्तो वर्तते । पुनः किंविशिष्टं सूरम् ?। "कमलेत्ति" कमलवनानि अलङ्करोति विकाशश्रिया विभूषयति इति कमलवनालङ्करणः तम् । पुनः किंविशिष्टं सूरम्?। ज्योतिपस्य ज्योतिषां समूहो ज्यौतिषम्=ज्योतिश्चक्रम् तस्य अङ्कनं=मेषादिराशिसङ्क्रमणादिना लक्षणं=

ज्ञापकम्। पुनः किंविशिष्टं सूरम्?। अम्बरतले=आकाशतले प्रदीप इव प्रदीपः तम्, आकाशस्य दीपकमिवेत्यर्थः। पुनः किंविशिष्टं सूरम्?। "हिमपडलेत्ति" हिमपटलं गले गृह्णातीति हिमपटलगलग्रहः। [अवश्यायः राशेः] अमावस्यायाः रात्रौ गलहस्तयिता तम्। पुनः किंविशिष्टं सूरम्?। "गहगणोरुत्ति" ग्रहगणस्य उरुः=महान् नायकः तम्। पुनः किंविशिष्टं सूरम्?। रात्रिविनाशं इति स्पष्टम्। क्वचित् 'रतिविनासं' इति पाठः, तत्र रात्रिव्यपनाशं इति व्याख्येयम्। पुनः किंविशिष्टं सूरम्?। "उदयत्थेत्ति" उदये अस्तमने च मुहूर्तं यावत् सुखदर्शनम्। अन्यथा दुर्निरीक्ष्यरूपं इति व्यक्तम्। पुनः किंविशिष्टं सूरम्?। "रत्तिसुद्धंतेति" रात्रौ मकारस्य अलाक्षणिकत्वात्। उद्धावतः=उच्छृङ्खलान् दुःप्रचारान्=दुष्टप्रचारान् चौरपारदारिकान् प्रमर्दयति यः स तम्। "रत्तिसुद्धंत"पाठे तु रात्रिरेव शुद्धान्तः अन्तःपुरम्, तत्र दुःखेन योऽसौ प्रचारः तत्प्रमर्दनम्। यथा हि राज्ञां अन्तःपुरे प्रचारो दुष्करः तथा रात्रौ अपि तमोविलुप्तचक्षुषां पथिकानां, सूर्योदये तु सुकरः प्रचारः पथिषु इति। पुनः किंविशिष्टं सूरम्?। शीतवेगमथनं जाड्यातिशयविध्वंसकम्। पुनः किंविशिष्टं सूरम्?। "मेरुगिरित्ति" मेरुगिरिं=मेरुपर्वतम्, सततं=निरन्तरम्, परिवर्तयति=प्रदक्षिणयति इति मेरुगिरिसततपरिवर्तकः तम्। पुनः विशालं=विपुलम्। पुनः किंविशिष्टं सूरम्?। "रस्सीसहस्सेत्ति" रश्मिसहस्रेण हेतुना प्रगलिता प्रदलिता वा दीप्तानामपि चन्द्रादीनां शोभा यस्मात् येन वा स तथा तम्। "पयडिअत्ति" पाठे तु रश्मिसहस्रेण प्रकटिता दीप्ता शोभा यस्येति ज्ञेयम्। अत्र रश्मिसहस्राभिधानं रूढ्या, अन्यथा आधिक्यमपि रवि-रश्मीनां लोकशा-

श्रृणु उच्यते, यथाऋतुभेदात् । पुनः तस्य अतिरिच्यन्ते रश्मयः । तथाहि—चैत्रमासे सूर्यस्य द्वादशशतानि
किरणाः १, वैशाखमासे त्रयोदशशतानि किरणाः २, ज्येष्ठमासे चतुर्दशशतानि किरणाः ३, आषाढमासे
पञ्चदशशतानि किरणाः ४, श्रावणमासेऽपि चतुर्दशशतानि किरणाः ५, भाद्रपदमासेऽपि चतुर्दशशतानि
किरणाः ६, आश्विनमासे षोडशशतानि किरणाः ७, कार्तिकमासे एकादशशतानि किरणाः ८, मार्गशीर्ष-
मासे सार्धानि दशशतानि किरणाः ९, पौषमासे एकं सहस्रं किरणाः १०, माघमासे एकादशशतानि
किरणाः ११ फाल्गुनमासे सार्धानि दशशतानि किरणाः १२, अयं विभागो 'व्याडिना' भिन्नभिन्नार्थः कृतो-
ऽस्ति । पुनरपि अयं सूर्यः अरुणसारथि १ सूर्यकान्तमणि २ चक्रवाक ३ कमल ४ पथिकादीनां ५ प्रीतिकारकः ।
पुनरपि तारा १ चन्द्र २ दीपक ३ औषधि ४ घूक ५ अन्धकार ६ चौर ७ कुमुद ८ कुलटा ९ ऽऽदीनां अनिष्टका-
रको ज्ञेयः । सूर्यदर्शनात् भगवतः तेजः=प्रतापः प्रबलो भविष्यति तमवन्मोहं स रात्रिहन्ता इति सूर्यसदृशः
स भामण्डलढ्नो भविष्यति ॥ इति सप्तमसूर्यस्वप्नविचारः ॥ ७ ॥

अथ अष्टमे स्वप्ने त्रिशला क्षत्रियाणी ध्वजं पश्यति । परं स ध्वजः कीदृक् ? तत्राह—

तओ पुणो जच्चकणगलट्ठिपइट्ठिअं समूहनीलरत्तपीयसुक्किलसुकुमालुल्लसियमोरपिच्छकयमु-
द्धयं धयं अहियसस्सिरीयं फालिअसंखंककुंददगरयरययकलसपंडुरेण मत्थयत्थेण सीहेण

रायमाणेण रायमाणं भित्तुं गगणतलमंडलं चेव ववसिएणं पिच्छइ सिवमउयमारुयलयाहय-
कंपमाणं अइप्पमाणं जणपिच्छणिज्जरूवं ८ ॥ ४० ॥

व्याख्या–"तओ पुणो" ततः पुनः सा त्रिशला क्षत्रियाणी अष्टमे स्वप्ने एवंविधं ध्वजं पश्यति । किंविधं ध्वजम् ?। "जच्चकणगेत्ति" जात्यकनकस्य=अत्यन्तशुद्धस्वर्णस्य या यष्टिः तस्यां प्रतिष्ठितं=स्थापितम् । पुनः किंविशिष्टं ध्वजम् ?। "समूहत्ति" समूहो अस्ति एषां इति समूहाः, अभ्रादित्वात् अप्रत्यये समूहवन्तः प्रचुरा इत्यर्थः, तैः नील १ रक्त २ पीत ३ शुक्लैः ४ कृष्णस्य नीलात् अनतिविप्रकर्षात् पार्श्ववर्तित्वात् इत्यर्थः । पञ्चवर्णैः सुकुमारैः=कोमलैः उल्लसद्भिः=वातेन स्फुरद्भिः मयूरपिच्छैः कृता मूर्धजा इव=केशा इव यस्य स तम् । पुनः किंविशिष्टं ध्वजम्?। अधिकं सश्रीकं अतीवशोभायुक्तम् । पुनः किंविशिष्टं ध्वजम् ?। एवंविधेन सिंहेन भगवल्लाञ्छनभूतसिंहाकारपताकया सिंहविशेषेण वा राजमानम् । किंविशिष्टेन सिंहेन ?। "फालियेत्ति" स्फाटिकं=स्फटिकं शङ्खः=कम्बुः, अथवा स्फाटितो=भिन्नः शङ्खः अङ्को=रत्नविशेषः, कुन्दं=माल्यं दकरजांसि जलकणाः रजतकलशः=रूप्यकुम्भः तद्वत् पाण्डुरेण । एतावता ध्वजायां सिंहरूपं वर्तते, तत् स्फटिक-अङ्करत्नकुन्द–जलकण ४ रूप्यकलश ५ वत् धवलं वर्तते । पुनः किंविशिष्टेन सिंहेन ?। मस्तकस्थेन, पुनरपि राजमानेन=शोभमानेन । पुनः किंविशिष्टेन सिंहेन ?। गगनमण्डलं=आकाशमण्डलं भेत्तुं=भेदनार्थं व्यवसि-

तेन=कृतोद्यमेन इव, अत्युच्चैस्तात् इति उत्प्रेक्षा। पुनरपि किंविशिष्टं ध्वजम् ?। शिवः (निरुपद्रवः)=सौम्यः मृदुः=अखण्डः यो मारुतो=वायुः तस्य लयः=श्लेषः तेन आहतं आंदोलितं अत एव प्रकंपमानं=इतस्ततो नृत्यन्तम्। अथवा शिवं मृदुकः मारुताहतलतावत् प्रकम्पमानं इति व्याख्येयम्। "लयाहयत्ति" आर्षत्वात् आहतस्य परनिपातः। पुनः किंविशिष्टं ध्वजम् ?। अतिप्रमाणं=महाप्रमाणम्। पुनः किंविशिष्टं ध्वजम् ?। जनप्रेक्षणीयरूपं। ध्वजदर्शनात् भगवतो मस्तके छत्रत्रयसहिता ध्वजा देवैः धरिष्यते॥ पुनः वंशे ध्वजाप्रायो भविष्यति धर्मध्वजश्रिया भूषितो भविष्यति॥ इति अष्टमध्वजस्वप्नविचारः॥ ८॥

पुनः सा त्रिशला क्षत्रियाणी नवमे स्वप्ने पूर्णकलशं पश्यति, परं स कलशः कीदृशः ? तत्राह—

तओ पुणो जच्चकंचणुज्जलंतरूवं निम्मलजलपुण्णमुत्तमं दिप्पमाणसोहं कमलकलावपरिराय-माणं पडिपुण्णसव्वमंगलभेयसमागमं पवररयणपरायंतकमलट्ठियं नयणभूसणकरं पभास-माणं सव्वओ चेव दीवयंतं सोमलच्छीनिभेलणं सव्वपावपरिवज्जिअं सुभं भासुरं सिरिवरं सव्वो-उयसुरभिकुसुमआसत्तमल्लकुसुमदामं पिच्छइ सा रययपुण्णकलसं ९॥ ४१॥

व्याख्या–"तओ"सा त्रिशला क्षत्रियाणी नवमे स्वप्ने पूर्णकलशं पश्यति। किंविशिष्टं पूर्णकलशम् ?। जात्य-काञ्चनेन उत्प्राबल्येन ज्वलत् रूपं यस्य स तम्। पुनः किंविशिष्टं पूर्णकलशम् ?। "निम्मलेत्ति" निर्मलजलेन=

पवित्रपानीयेन प्रतिपूर्णं भृतम्। पुनः किंविशिष्टं पूर्णकलशम्?। उत्तमं=प्रधानम्। पुनः किंविशिष्टं पूर्णकलशम्?। दीप्यमानशोभं ज्ञानं दीप्यमाना शोभा यस्य स तम्। पुनः किंविशिष्टं पूर्णकलशम्?। कमलकलापेन=कमलसमूहेन परि=समन्तात् राजमानम् (शोभायमानं)। क्वचिच्च "कालमऊरकलावपरिरायमाणं" पाठः, स तु स्पष्टार्थ एव। पुनः किंविशिष्टं पूर्णकलशम्?।प्रतिपूर्णकानां सर्वमङ्गलभेदानां समागमो=मेलापकस्थानं,। क्वचिच्च "पडिबुज्झंतसव्वमंगलालयसमागमं" इति पाठः, तत्र प्रतिबुद्ध्यमानानि=जागरूकानि यानि सर्वमङ्गलानि तेषां आलयो निवासभूतः समागमः=संमुखागमनं यस्य स तम्। पुनः किंविशिष्टं पूर्णकलशम्?। "पवरेत्ति" प्रवररत्नैः प्रकर्षेण राजति कमले स्थितम्, यद्वा प्रवरा रचना यस्य तथा परागः=पुष्परजः अन्तर्गर्भे यस्य तादृशे कमले स्थितम्। क्वचिच्च "पवररयणपसरंतकमलट्ठिअं त्ति" पाठः, तत्र प्रवराणि रत्नानि यत्र तच्च तत्प्रसरद् विकसत्कमलं च तत्र स्थितम्। पुनः किंविशिष्टं पूर्णकलशम्?। "नयणे त्ति" नयनानां आनन्दकरत्वात् भूषणकरम्। पुनः किंविशिष्टं पूर्णकलशम्?। प्रभासमानं स्वयं रचयंतं प्रभया वा असमानं अत एव सर्वा दिशो दीपयन्तम्। पुनः किंविशिष्टं पूर्णकलशम्?। "सोमेति" सौम्यलक्ष्म्याः प्रशस्तसंपदो निहेलणंति देश्यत्वात् गृहम्। पुनः किंविशिष्टं पूर्णकलशम्?। सर्वैः पापैः=अशिवैः परिवर्जितम्,। अत एव शुभम्। पुनः भासुरं=दीप्तम्। पुनः किंविशिष्टं पूर्णकलशम्?। श्रिया=त्रिवर्गसंपत्त्या वरं श्रेष्ठं, तदागमसूचकत्वात्। पुनः किंविशिष्टं पूर्णकलशम्?। "सव्वोउअ त्ति" सर्वेभ्यः ऋतुभ्यः समुत्पन्नानां सुरभिकुसुमानां आसक्तं कण्ठस्थं माल्यदाम

=माला यस्मिन् स तम् । अत्र 'दाम'शब्दः प्रशंसायाम् । यथा "वनान्तकपोलपाली" इत्यादौ अन्त १ पाली २ शब्दौ । पुनः किंविशिष्टं पूर्णकलशम् ? । "रजते त्ति" रजतशब्दस्य रूप्यवाचकत्वेऽपि अत्र कनकवाचित्वं ज्ञेयम् । पूर्णकुम्भदर्शनात् भगवतो मङ्गलश्रेणिः भविष्यति ॥ इति नवमस्वप्नपूर्णकुम्भविचारः ॥ ९ ॥

अथ दशमे स्वप्ने त्रिशला क्षत्रियाणी पद्मसरः पश्यति, परं तत् सरः कीदृशम् ? तत्राह—

तओ पुणो पुणरवि रविकिरणतरुणबोहियसहस्सपत्तसुरभितरपिंजरजलं जलचरपहकरपरिहत्थ-गमच्छपरिभुज्जमाणजलसंचयं महंतं जलंतमिव कमलकुवलयउप्पलतामरसपुंडरीयउरुसप्प-माणसिरिसमुदएणं रमणिज्जरूवसोहं पमुइयंतभसरगणमत्तमहुयरिगणुक्करोलि(ल्लि)ज्जमाण-कमलं कायंवगवलाहयचक्ककलहंससारसगविअसउणगणमिहुणसेविज्जमाणसलिलं पउमि-णिपत्तोवलग्गजलबिंदुनिचयचित्तं पिच्छइ सा हिययनयणकंतं पउमसरं नाम सरं सररु-हाभिरामं १० ॥ ४२ ॥

व्याख्या–"तओ पुणो पुणरवि किरण" ततः सा त्रिशला क्षत्रियाणी शरत्कालीनरजनीकरवत् सौम्यं वदनं यस्याः सा चन्द्रवदनेत्यर्थः । पुनरपि एवंविधं पद्मसरः=पद्मसरोवरं पश्यति । परं किंविशिष्टं पद्मसरः ? ।

"रविकिरणे त्ति" "तरुण"शब्दस्य इह संबन्धात् । तरुणरविकिरणबोधितानि यानि सहस्रपत्राणि= पद्मानि तैः, सुरभितरं पिञ्जरं च पीतरक्तं जलं यस्मिन् तत् तथा । अथवा "पुणरविं त्ति" पुनरपि रविकिरणः=सूर्यः तेन तरुणेन=अभिनवेन बोधितानि इत्यादि योज्यम् । पुनः किंविशिष्टं पद्मसरः ?। "जलचरे त्ति" जलचरा=यादांसि तेषां "पहकरत्ति" देश्यत्वात् समूहः, तेन "परिहत्थं त्ति" परिपूर्णम् जलचरपहकरपरिहत्थगं च तत् मत्स्यपरिभुज्यमानजलसंचयेति विशेषणकर्मधारयः । पुनः किंविशिष्टं पद्मसरः ? । महत् । पुनः किंविशिष्टं पद्मसरः ? । कमलं=सूर्यविकासि १ कुवलयं=नीलम् २ उत्पलं रक्तम् ३ तामरसं=महाम्भोजम् ४ पुण्डरीकं श्वेतम् ५ एषां उरुभिः=विशालैः सर्पद्भिः=उल्लसद्भिः श्रीसमुदयैः=कान्तिप्राग्भारैः ज्वलदिव=दीप्यमानमिव । पुनः किंविशिष्टं पद्मसरः ?। अत एव रमणीयरूपशोभम् । पुनः किंविशिष्टं पद्मसरः ? । "पमुइयंति" प्रमुदितं अन्तश्चित्तं येषां (प्रमुदितानां) ते च ते भ्रमरगणाश्च मत्ता प्रमदा मधुकरीगणाश्च ते च ते भ्रमरजातिविशेषाः तेषां उत्कराः, समूहानामपि समूहाभिधानं अतिबहुत्वख्यापनार्थम्, तैः अवलिह्यमानानि=खाद्यमानानि कमलानि यत्र तत् । पुनः किंविशिष्टं पद्मसरः ?। "कायंबे त्ति" कादम्बकाः=कलहंसाः १ बलाहकाः=बलाकाः २ चक्राः=चक्रवाकाः ३ कला=मधुरध्वनयः हंसा=राजहंसाः ४ सारसा=दीर्घजानुकाः ५ ते च ते गर्विताः=सुस्थानप्राप्त्या दृप्ताः शकुनिगणाश्च=पक्षिसमूहाश्च ६ तेषां मिथुनैः=द्वन्द्वैः सेव्यमानं सलिलं यस्य तत् तथा । पुनः

किंविशिष्टं पद्मसरः ? "पउमिणिति" पद्मिनीनां पत्रेषु उपलग्ना ये जलबिन्दवः तेषां निचयेन चित्रं मण्डितमिव। क्वचिच्च "जलबिंदुमुत्तचित्तं" इति पाठः, तत्र जलबिन्दव एव मुक्ताः=मौक्तिकानि ताभिः चित्रम्। पुनः किंविशिष्टं पद्मसरः ?। हृदयनयनानां कान्तम्। पुनः किंविशिष्टं पद्मसरः ?। "सररुहाभिरामंति" सरस्सु=सरोवरेषु अर्हं=पूज्यम् अत एव अभिरामं सरोरुहाभिरामं, "उच्चार्हतीति" हकारात् पूर्वं उकारः। सरोवरदर्शनात् सरोवरवत् सुराऽसुरनररूपराजहंसादिसेव्यो भावी॥ इति दशमपद्मसरोवरस्वप्नविचारः॥ १०॥

अथ एकादशे स्वप्ने त्रिशला क्षत्रियाणी समुद्रं पश्यति, परं स कीदृशः ? तत्राह—

तओ पुणो चंदकिरणरासिसरिससिरिवच्छसोहं चउगमणपवड्ढमाणजलसंचयं चवलचंचलुच्चायप्पमाणकल्लोललोलंततोयं पडुपवणाहयचलियचवलपागडतरंगरंगंतभंगखोखुब्भमाणसोभंतनिम्मलुक्कडउम्मीसहसंबंधधावमाणोनियत्तभासुरतराभिरामं महामगरमच्छतिमितिमिंगिलनिरुद्धतिलितिलियाभिघायकप्पूरफेणपसरं महानईतुरियवेगसमागयभमगंगावत्तगुप्पमाणुच्चलंतपच्चोनियत्तभममाणलोलसलिलं पिच्छइ खीरोयसायरं सा रयणिकरसोमवयणा ११ ॥४३॥

व्याख्या–"तओ पुणो चंदकिरणरासि" ततः पुनः सा त्रिशला क्षत्रियाणी क्षीरोदसागरं एकादशे स्वप्ने

पश्यति। किंविशिष्टः क्षीरसागरः ?। "चंदकिरणेत्ति" चन्द्रकिरणराशेः सदृशं श्रीः एव यस्य वक्षः=मध्यभागस्तेन शोभा यस्य स तम् । वक्षःशब्देन अत्र मध्यभागो लक्ष्यते। पुनः किंविशिष्टं क्षीरसागरम् ?। "चउगमणेत्ति" चतुर्गमनेषु=चतुर्दिङ्मार्गेषु प्रवर्धमानः=परिवर्तमानः प्रसरन् जलसंचयो यस्य स तम्। "चउगुणपवड्ढमाणजलसंचयं" इति पाठः सुगम एव। कस्मात् चतुर्गुणत्वं इति अनपेक्ष्यैव अधिकमात्रस्यैव विवक्षितत्वात्। पुनः किंविशिष्टं क्षीरसागरम् ?। "चवलेत्ति" चपलेभ्योऽपि चञ्चलैः उच्चात्मप्रमाणैः=अत्युन्नततरमानैः कल्लोलैः महत्तरंगैः लोलत् तोयं यस्य स तम्। पुनः किंविशिष्टं क्षीरसागरम् ?। "पडुपवणेत्ति" पटुपवनेन आहताः सन्तः चलिताः=प्रवृत्ताः अत एव चपलाः प्रकटाः=स्पष्टाः तरङ्गाः तथा रङ्गन्त इतस्ततः प्रेङ्खन्तो भङ्गाः "भङ्गस्तरङ्गो भेदे वा" इति वचनात् तरङ्गविशेषा एव रङ्गद्भङ्गाः। तथा "खोखुब्भमाणत्ति" अतिक्षुभ्यन्तः शोभमानाः निर्मला उत्कटाः दुःसहा ऊर्मयः, ततः तरङ्गान्त १ भङ्गान्त २ ऊर्म्यन्त ३ पदानां द्वन्द्वः कर्तव्यः। अत्र कल्लोलाः सामान्येन तरङ्गाः, ते एव लघवो भङ्गाः, ते एव विच्छित्तिमन्तः ऊर्मयो=महाकल्लोलाः तैः सह=सार्धं यः सम्बन्धः तेन पूर्वं धावमानः=तीराभिमुखं सर्पन्, पश्चादभिनिवृत्तोऽत एव भासुरतरोऽतिभयङ्करः अभिरामश्च हृद्यः धावमानः सन् भासुरतरोऽपनिवृत्तश्च सन् अभिराम इत्यर्थः। ततो "लोलंततोयान्त" पदेन सह कर्मधारयः। क्वचित् "उक्कडउम्मीसहस्संति" पाठः, स च सुबोधः। ततः परं "पबंधायमाणोनिअत्तभासुरतराभिरामं" इति पाठः, तत्र प्रबन्धेन=नैरन्तर्येण अयमानो=गच्छन्, आयमानो वा=प्रत्यागच्छन्

प्रमन्थायमानः न विद्यते "निअत्तति" पश्यन्=द्रष्टा यस्य तत्। "अनिअत्तं" केनापि अदृश्यमानदूरत्वात्। अत
प्रबन्धायमानः न विद्यते ... ततः प्रबन्धाय पदेन सह
एव भासुरं भयङ्करम् यत् तटं=परपारं तेन अभिरामो=वैपुल्येन मनोहारीत्यर्थः। ततः प्रबन्धाय पदेन सह
कर्मधारयः। एतावता यस्य समुद्रस्य अतिचञ्चलकल्लोलैः लोलत् पानीयं वर्तते, पुनः यस्य वायुना आहताः=
चलिताः चपलाः तरङ्गाः=लघुकल्लोलाः वर्तन्ते,। पुनः यस्य समुद्रस्य भङ्गाः विच्छित्तिमन्तः तरङ्गा एव रङ्गन्तः
प्रेङ्खन्तो वर्तन्ते, पुनरपि यस्य ऊर्मयो=महाकल्लोला अतिक्षुभ्यन्तः खोखुब्भमाणशब्दं कुर्वन्तः शोभमाना
निर्मला उत्कटाश्च सन्ति, पुनः यः समुद्रः कल्लोलैः तरङ्गैः भङ्गैः ऊर्मिभिश्च सार्धं यः सम्बन्धः तेन तीरसम्मुखं
धावमानो निवर्तमानश्च महाभयङ्करो वर्तते। तीर्थंकरमातरः सिंहमपि सौम्याकारमेव स्वप्ने पश्यन्ति, न दूरात्मानं
कथं पुनः क्षीरसमुद्रं अतिभयंकरमिति स्वयमेवालोच्यम्। पुनः किंविशिष्टं क्षीरसागरम्?। "महामगरेत्ति"
महान्तो मकराश्च १, मत्स्याश्च २, तिमयश्च ३, तिमिंगिलाश्च ४, निरुद्धाश्च ५, तिलितिलिकाश्च ६, जलजन्तुभेदाः,
तेषां अभिघातेन=पुच्छाद्याच्छोटनेन कर्पूर इव कर्पूर उज्ज्वलत्वात् फेनप्रसरो यत्र स तम्। पुनः किंविशिष्टं
क्षीरसागरम्?। "महानईत्ति" महानदीनां=गङ्गादीनां त्वरितवेगैः समागतभ्रमः=उत्पन्नभ्रमणो यो गङ्गावर्ताख्य
आवर्तः, तत्र गुप्यत् व्याकुलीभवत् अत एव उच्चलत् प्रत्यवनिवृत्तं च व्यावृत्तं भ्रममाणं भ्रमणशीलं लोलं
स्वभावात् अस्थिरं सलिलं यस्य स तम्। पुनः यस्मिन् समुद्रे चतुर्दशलक्षाः षट्पञ्चाशत्सहस्राश्च (१४५६०००)
नद्यः पतन्ति। कथं? तत्राह—चतुर्दशचतुर्दश—सहस्रनदीपरिवारसहिता गङ्गा सिन्धुश्च भरतक्षेत्रसम्बन्धिनी।

एवं चतुर्दशचतुर्दश-सहस्रनदीपरिवारसहिता रक्ता १ रक्तवती च २ ऐरावतक्षेत्रसम्बन्धिनी (२८), पुनः अष्टाविंशत्यष्टाविंशतिसहस्रनदीपरिवारसहिता रोहिता १ रोहितांशा २ हैमवतक्षेत्रसम्बन्धिनी, (५६), पुनः षट्पञ्चाशत्षट्पञ्चाशत्सहस्रनदीपरिवारसहिता सुवर्णकूला १ रूप्यकूला २ च ऐरण्यवतक्षेत्रसम्बन्धिनी (११२), पुनः षट्पञ्चाशत्षट्पञ्चाशत्सहस्रनदीपरिवारसहिता हरिकान्ता १ हरिसलिला २ च हरिवर्षक्षेत्रसम्बन्धिनी (११२), पुनः षट्पञ्चाशत्षट्पञ्चाशत्सहस्रनदीपरिवारसहिता नरकान्ता १ नारीकान्ता २ च रम्यकक्षेत्रसम्बन्धिनी (११२), पुनः पञ्चलक्षद्वात्रिंशत्सहस्र (५३२०००) नदीपरिवारसहिता सीता १ सीतोदा २ च महाविदेहक्षेत्रसम्बन्धिनी, एवं सर्वा अपि मिलिताः चतुर्दशलक्षाः षट्पञ्चाशत्सहस्राश्च (१४५६०००) भवन्ति ।

समुद्रदर्शनात् भगवान् समुद्रवत् गम्भीरो भावी । अत्र शिष्यः प्राह-ननु-सूत्रमध्ये क्षीरोदधिः प्रोक्तः, तत्र तु नानाविधकल्लोलनदीवेलादीनां कथं सम्भवः, तत्र तेषामभावात्? उच्यते-यद्यपि क्षीरोदसमुद्रः प्रोक्तः, तथापि लवणसमुद्र एव संभाव्यते, परं क्षीरोदसदृश इव, अन्यथा कल्लोलवेलानां असङ्गतिः स्यात् ॥ इति एकादशसमुद्रस्वप्नविचारः ॥ ११ ॥

अथ द्वादशे स्वप्ने त्रिशला क्षत्रियाणी देवविमानं पश्यति, तत्स्वरूपं आह—

तओ पुणो तरुणसूरमंडलसमप्पहं दिप्पमाणसोभं उत्तमकंचणमहामणिसमूहपवरतेयअट्ठ-

सहस्सदिप्पंतनहप्पईवं कणगपयरलंबमाणमुत्तासमुजलं जलंतदिव्वदामं ईहावि(मि)गउसभ-तुरगनरमगरविहगवालगकिन्नररुरुसरभचमरसंसत्तकुंजरवणलयपउमलयभत्तिचित्तं गंधव्वोपव-ज्जमाणसंपुण्णघोसं निच्चं सजलघणविउलजलहरगज्जियसद्दाणुणाइणा देवदुंदुहिमहारवेणं सयलमवि जीवलोयं पूरयंतं, कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूववासंगउत्तममघमघंतगंधु-द्धुयाभिरामं निच्चालोयं सेयं सेयप्पभं सुरवराभिरामं पिच्छइ सा साओवभोगं वरविमाण-पुंडरीयं १२ ॥ ४४ ॥

व्याख्या-"तओ पुणो तरुणसूरमंडलत्ति" ततः=एकादशस्वप्नानन्तरं त्रिशला क्षत्रियाणी द्वादशे स्वप्ने एवं-विधं विमानपुण्डरीकं=प्रधानविमानं पश्यति। किंविशिष्टं विमानम् ?। "तरुणेत्ति" तरुणसूरमण्डलेन=नव-सूर्यबिम्बेन समा प्रभा यस्य तत्। पुनः किंविशिष्टं विमानम् ?। दीप्यमानशोभम्। पुनः किंविशिष्टं विमा-नम् ?। "उत्तमेत्ति" उत्तमकांचनमहामणिसमूहैः प्रवराणां, 'तेअत्ति' तेकन्ते=गच्छन्ति आधारभावं इति तेकाः, "लिहादित्वादचि," यद्वा त्रायन्ते पतत् गृहं इति त्रेयाः यप्रत्यये स्तम्भाः तेषां अष्टोत्तरसहस्रेण (१००८) दीप्यमानं सत् नभः प्रदीपयति=प्रकाशयति यत्। पुनः किंविशिष्टं विमानम् ?। "कणगेत्ति"। कनकप्रतरेषु

स्वर्णपत्रकेषु लम्बमानाभिः मुक्ताभिः समुज्ज्वलं कनकप्र(क)तरैः लम्बमानमुक्ताभिश्च समुज्ज्वलमित्येकं पदम्। इदं पदं अधिकमिव (भाति) क्वापि अव्याख्यानात्। पुनः किंविशिष्टं विमानम् ?। "ईहामिगेत्ति" ईहामृगाः=वृकाः 'नाहर' इति प्रसिद्धाः १, "उसभेत्ति" वृषभाः २, "तुरगत्ति" अश्वाः ३, "मगरत्ति" मकरमत्स्याः ४, विहगाः=पक्षिणः ५, "वालगत्ति" व्यालाः=सर्पाः ६, किंनराः=देवविशेषाः ७, रुरवो=मृगभेदाः ८, शरभाः=अष्टापदजीवाः ९, चमराः=चमरीगावः १०, संसत्तिः श्वापदविशेषाः ११, कुञ्जरा=हस्तिनः १२, वनलता=अशोकलताद्याः १३, पद्मलताः=पद्मिन्यः १४, एतेषां भक्तिभिः विच्छित्तिभिः चित्रं नाना रूपम्। एतावता यस्मिन् विमाने एतानि ईहामृगादीनां रूपाणि सन्ति (भवन्ति)। पुनः किंविशिष्टं विमानम् ?। "गन्धव्वोत्ति" गन्धर्वस्य गीतस्य उपवाद्यमानस्य वादित्रस्य च संपूर्णो घोषो यत्र। "उव्वोपेति" सूत्रेण "उवज्जमाण" इति रूपं, क्वचित् "गंधव्वोपवज्झमाण" इति पाठः, तत्र गन्धर्वाणां=देवगायनानां उपबध्यमानः=परस्परं सम्बन्धी भवन्, अत एव संपूर्णो घोषो यत्रेति योज्यम्। पुनः किंविशिष्टं विमानम् ?। नित्यं=शाश्वतम्। पुनः किं कुर्वाणम् ?। "सजलत्ति" सजलो घनः=अविरलः विपुलः=पृथुः जलधरः=मेघस्तस्य गर्जितशब्दः, तदनुनादिना=प्रतिरवयुक्तेन देवदुन्दुभिमहारवेण सकलं=समस्तमपि जीवलोकं पूरयन्तं आप्याययंतं चतुर्दशरज्ज्वात्मकं वा लोकं व्याप्नुवन्तम्। पुनः किंविशिष्टं विमानम् ?। "कालागुरुत्ति" कृष्णागुरु च १, प्रवरकुंदुरुष्कः चीडाभिधानः सुगन्धिद्रव्यविशेषः २, तुरुष्कश्च सेल्लारसः ३, ते च पुनः दह्यमानो धूपश्च दशाङ्गादिः वासाङ्गानि च गन्धमालिनी-

ग्रन्थोक्तसुरभिकरणोपायभूततत्तद्द्रव्याणि तेषां उत्तमेन मघमघायमानेन गन्धेन उद्धुतेन इतस्ततो विप्रसृतेन अभिरामं यत् तत् तथा। क्वचित् "डज्झंतधूवसारसंग" इति पाठः, तत्र दह्यमानो यो धूपसारः=उत्कृष्ट-धूपः तस्य सङ्गः तेन=हृदयङ्गमेन उत्तमेनेति व्याख्येयम्। पुनः किंविशिष्टं विमानम्?। नित्यालोकं नित्यमुद्द्योतयुक्तं, श्वेतं श्वेतप्रभम्। पुनः किंविशिष्टं विमानम्?। "सुरवरेत्ति" सुरवरान् अभिरमयति इति। अथवा सुराणां वरा अभि=समन्तात् रामाः=स्त्रियो यस्मिन् तत्। पुनः किंविशिष्टं विमानम्?। सातस्य=सातवेदनीयस्य कर्मणः उपभोगो यत्र तत्, पञ्चधाविषयसुखसम्पत्तेस्तत्र सद्भावात्। देवविमानदर्शनात् देवदेवीसेव्यो भगवान् भावी॥ इति द्वादशस्वप्नदेवविमानविचारः॥ १२॥

पुनः देवविमानदर्शनानन्तरं सा त्रिशला त्रयोदशस्वप्ने रत्नराशिं पश्यति। परं स कीदृशः? तत्राह—

तओ पुणो पुलगवेरिंदनीलसासगकक्केयणलोहियक्खमरगयमसारगल्लपवालफलिहसोगंधिय-हंसगब्भअंजणचंदप्पहवररयणेहिं महियलपइट्ठिअं, गगणमंडलंतं पभासयंतं तुंगं मेरुगिरिसंनिकासं पिच्छइ सा रयणनिकररासिं १३॥ ४५॥

व्याख्या—"तओ पुणो" ततः पुनरपि सा त्रिशला क्षत्रियाणी त्रयोदशे स्वप्ने रत्नानां निकरः=समूहो रत्ननिकरः, तस्य राशिः=पुञ्जः, तं पश्यति.। किंविशिष्टं रत्नराशिम्?। "पुलगेत्ति" पुलकरत्नम् १, वज्ररत्नम् २, नीलरत्नम्

३, "सासगत्ति" सस्यकरत्नम् ४, कर्केतनरत्नम् ५, लोहिताक्षरत्नम् ६, मरकतरत्नम् ७, मसारगल्लरत्नम् ८, प्रवालरत्नम् ९, स्फटिकरत्नम् १०, सौगन्धिकरत्नम् ११, हंसगर्भरत्नम् १२, अञ्जनरत्नम् १३, "चंदप्पहत्ति" चन्द्रकान्तरत्नम् १४, एतैः रत्नैः कृत्वा गगनमण्डलांतं यावत् प्रकाशयन्तम्। पुनः किंविशिष्टं रत्नसमूहम्?। महीतले प्रतिष्ठितम्। पुनः किंविशिष्टं रत्नसमूहम्?। तुङ्गं=उच्चम्। तुङ्गत्वं अनियतमित्याह–मेरुगिरेः संनिकाशं=तुल्यम्। रत्नराशिदर्शनात् भगवान् ज्ञानादिगुणरत्नराशिवान् भावी॥ इति त्रयोदशस्वप्नरत्नराशिविचारः॥ १३॥

अथ चतुर्दशस्वप्ने त्रिशला क्षत्रियाणी निर्धूमं अग्निं पश्यति। परं स कीदृशोऽग्निः? तत्राह—

सिहिं च–सा विउलुज्जलपिंगलमहुघयपरिसिच्चमाणनिद्धूमधगधगाइयजलंतजालुज्जलाभिरामं तरतमजोगजुत्तेहिं जालपयरेहिं अण्णुण्णमिव अणुप्पइण्णं पिच्छइ जालुज्जलणगं अंबरं व कत्थइ पयंतं अइवेगचंचलं सिहिं॥ १४॥ ४६॥

व्याख्या–"सिहिं च" सिखिं च–सा त्रिशला क्षत्रियाणी चतुर्दशस्वप्ने शिखिनं=अग्निं पश्यति। अत्र 'गयवसह' गाथाया अंते। 'सिहिं च' इति यत् पदं तस्येदं ग्रहणकवाक्यं। अत एव 'ततः' इति नोक्तम्, विशेष्यपदं तु स्वप्नवर्णकान्ते "सिहिं" इति। किंविशिष्टं शिखिनम्?। "विउलुज्जलेत्ति" विपुलेन उज्ज्वलेन पिङ्गलेन च मधुघृतेन परिषिच्यमाना निर्धूमा धगधगायमाना=धग्धगिति कुर्वन्त्यः प्रज्वलन्त्यः दीप्यमाना ज्वालाः=अर्चिषः

नाभिः उज्ज्वलं, अत एव अभिरामम् । किंविशिष्टं शिखिनम् ? । ज्वालानां प्रकरैः=कलापैः समूहैरित्यर्थः । अन्योन्यं अनुप्रकीर्णमिव मिश्रितमिव स्पर्धया तस्य वह्नेः ज्वालाः अन्योन्यं अनुप्रविशन्तीत्यर्थः । किंविशिष्टैः ज्वालाप्रकरैः ?। "तरतमेत्ति" तरतमयोगो येषु ते तरतमयोगाः, अभ्रादित्वात् अप्रत्ययः । कथम् ?। एका ज्वाला उच्चा, अन्या उच्चतरा, अपरा उच्चतमा इति तरतमयोगयुक्तैः । पुनः किंविशिष्टं शिखिनम् ? । "जालुज्जि" ज्वालानां उत्=ऊर्ध्वं ज्वलनं=ज्वालोज्ज्वलकं, आर्षत्वात् विभक्तिलोपः । पुनः किं कुर्वन्तम् ?। "कत्थईत्ति" क्वचित्प्रदेशे, अम्बरं=आकाशं पचन्तमिव । क्वचित् अभ्रंलिहाभिः=ज्वालाभिः आकाशमिव पक्तुं उद्यतमिति भावः । पुनः किंविशिष्टं शिखिनम् ? । अतिवेगेन चञ्चलम् । निर्धूमाग्निदर्शनेन भगवतो वह्निवत् तपस्तेजो भविष्यति । निर्धूमाग्निवत् भगवान् मङ्गलरूपो भावी ॥ इति चतुर्दशस्वप्ननिर्धूमाग्निविचारः ॥ १४ ॥

एते च स्वप्नवर्णकाः बहुषु आदर्शेषु न दृश्यन्ते, एवं येष्वपि सन्ति तेषु बहवो वाचनाभेदाः, अत एव बहुभिः पर्युषणाकल्पोपनिबन्धकारैः व्याख्याताः । मया तु यथाऽऽम्नायं यथाऽवबोधं च किंचिद्व्याख्याताः इति ॥

अथ एतान् चतुर्दशस्वप्नान् दृष्ट्वा त्रिशला क्षत्रियाणी कीदृशी जाता ? तत्राह—

इमे एयारिसे सुभे सोमे पियदंसणे सुरूवे सुविणे दट्ठूण सयणमज्झे पडिबुद्धा अरविंद-लोयणा हरिसपुलइअंगी ॥ एए चउदस सुमिणे, सव्वा पासेइ तित्थयरमाया । जं रयणिं वक्कमई, कुच्छिंसि महायसो अरहा ॥ ४७ ॥

व्याख्या-"इमे एयारिसे त्ति" इमान् एतादृशान् पूर्वव्यावर्णितस्वरूपान् शुभान्=कल्याणहेतून् सौम्यान् उत्तमा कीर्तिः येभ्यः तत्सहितान्। प्रियं दर्शनं स्वप्नेऽवभासो येषां ते तथा। तान् सुरूपान्=शोभनस्वरूपान् (शोभनस्वभावान्) स्वप्नान् गजादीन् शयनमध्ये निद्रान्तरे दृष्ट्वा प्रतिबुद्धा=जागरिता। किंविशिष्टा त्रिशला ?। अरविन्दवत्=कमलवत् लोचने यस्याः सा। पुनः हर्षेण पुलकिताङ्गी। एतान् चतुर्दश स्वप्नान् तीर्थङ्करमाता पश्यति। यदा यस्यां रात्रौ मातुः कुक्षौ अर्हन्=तीर्थङ्करो व्युत्क्रामति=अवतारं लभते तदा। इत्यनेन त्रिशलाक्षत्रियाण्या ये चतुर्दश स्वप्ना दृष्टाः ते व्याख्याताः।

अथ अग्रे चतुर्थवाचनायां त्रिशला क्षत्रियाणी सिद्धार्थराजसमीपे गत्वा स्वप्नफलपृच्छां करिष्यति। तत्र वर्तमानयोगः। अस्मिन् महापर्वणि समागते एके महानुभावा दानं ददति। एके शीलं पालयंति, एके तपः तपन्ते, एके भावनां भावयन्ति, तत् सर्वं शासनाधीश्वरमहावीरदेवप्रसादात्। अग्रे स्वगुरुपरंपरा वाच्या॥

व्याख्यानं कल्पसूत्रस्य, तृतीयं सुगमं स्फुटम्। शिष्यार्थं पाठकाश्चक्रुः समयादिमसुन्दराः॥ १॥

इति श्रीकल्पसूत्रस्य तृतीयं व्याख्यानं श्रीसमयसुन्दरोपाध्यायविरचितं सम्पूर्णम्॥

# अथ चतुर्थं व्याख्यानम् ॥

अथ चतुर्दशस्वप्नदर्शनानन्तरं त्रिशला क्षत्रियाणी किं करोति ? तत्राह—

तएणं सा तिसला खत्तियाणी इमे एयारूवे उराले चउद्दस महासुविणे पासित्ता णं पडिबुद्धा समाणी हट्ठतुट्ठ—जावहियया धाराहयकयंबपुप्फगं पिव समूस्ससिअरोमकूवा सुविणुग्गहं करेइ, करित्ता सयणिज्जाओ अब्भुट्ठेइ, अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता अतुरिअमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव सयणिज्जे जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छइ, उवागच्छित्ता सिद्धत्थं खत्तिअं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणोरमाहिं उरालाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं सस्सिरीयाहिं हिययगमणिज्जाहिं हिययपल्हायणिज्जाहिं मियमहुरमंजुलाहिं गिराहिं संलवमाणी २ पडिबोहेइ ॥४८॥

व्याख्या–"तएणं" इत्यादीनां "जेणेव सयणिज्जे" इतिपर्यन्तानां पदानां पूर्वं अर्थो व्याख्यातोऽस्ति, तथापि सम्बन्धलापनिकामात्रं प्रोच्यते। ततः सा त्रिशला क्षत्रियाणी इमान् एतादृशान् पूर्वं व्याख्यातान् चतुर्दश-स्वप्नान् दृष्ट्वा, हृष्टतुष्टा सती स्वप्नावग्रहं कृत्वा शयनीयात् समुत्थाय पादपीठादपि समुत्तीर्य, अत्वरितया=अचपलया असम्भ्रान्तया अविलम्बितया राजहंससदृशया गत्या यत्रैव शयनीयं यत्रापि सिद्धार्थनामा क्षत्रियो राजा तत्रैव आगच्छति, आगत्य च सिद्धार्थं क्षत्रियं प्रति एतादृशाभिः गीर्भिः=वाणीभिः एवं प्रतिबोधयति=जागरयति। किंविशिष्टाभिः गीर्भिः?। "ताहिंति" या विशिष्टगुणोपेताः ताभिः। पुनः किंविशिष्टाभिः गीर्भिः?। इष्टाभिः=तस्य सिद्धार्थस्य वल्लभाभिः। "स्त्रीणां वचनं वल्लभं भवति प्रायेण प्राकृतजनानामपि"। पुनः किंविशिष्टाभिः गीर्भिः?। कान्ताभिः अभिलषिताभिः सदैव तेन। पुनः किंविशिष्टाभिः गीर्भिः?। प्रियाभिः=अद्वेष्याभिः सर्वेषामपि। पुनः किंविशिष्टाभिः गीर्भिः?। मनोज्ञाभिः=मनोरमाभिः कथयाऽपि। पुनः किंविशिष्टाभिः गीर्भिः?। मनोरमाभिः मनःप्रियाभिः चिन्तयाऽपि। पुनः किंविशिष्टाभिः गीर्भिः?। उदाराभिः उदारनादवर्णोच्चारादियुक्ताभिः। पुनः किंविशिष्टाभिः गीर्भिः?। कल्याणाभिः=समृद्धिकारिकाभिः। पुनः किंविशिष्टाभिः गीर्भिः?। शिवाभिः=गीर्दोषानुपद्रुताभिः। पुनः किंविशिष्टाभिः गीर्भिः?। धन्याभिः=धनलम्भिकाभिः। पुनः किंविशिष्टाभिः गीर्भिः?। माङ्गल्याभिः=मङ्गले साध्वीभिः। पुनः किंविशिष्टाभिः गीर्भिः?। सश्रीकाभिः=अलङ्कारादिशोभावतीभिः। पुन किंविशिष्टाभिः गीर्भिः?। "हिययगमणिज्जाहिंत्ति" क्वचित् दृश्यते। तत्र

हृदये या गच्छन्ति कोमलत्वात् सुबोधत्वाच्च ताः तथा ताभिः। पुनः किंविशिष्टाभिः गीर्भिः?। 'हियगपल्हायणिज्जाहिंति' हृदयप्रह्लादनीयाभिः। पुनः किंविशिष्टाभिः गीर्भिः?। "मिअमहुरेत्ति" मिता वर्णपदवाक्यापेक्षयापरिमिताः, मधुराः-स्वरतः, मञ्जुलाः=मनोरमाः शब्दतो याः ताः, ततः पदत्रयस्य कर्मधारयः।

ततः सा त्रिशला क्षत्रियाणी किं कृतवती? तत्राह—

तए णं सा तिसला खत्तियाणी सिद्धत्थेणं रण्णा अब्भणुण्णाया समाणी नाणामणिकणगरयणभत्तिचित्तंसि भद्दासणंसि निसीयइ, निसीइत्ता आसत्था वीसत्था सुहासणवरगया सिद्धत्थं खत्तिअं ताहिं इट्ठाहिं जाव संलवमाणी २ एवं वयासी॥ ४९॥

व्याख्या-"तए णं" इति ततः=अनन्तरं, "णं" वाक्यालङ्कारे। सा त्रिशला क्षत्रियाणी सिद्धार्थेन राज्ञा अभ्यनुज्ञाता सती एवंविधे भद्रासने-सिंहासने निषीदति=उपविशति। किंविशिष्टे भद्रासने?। "नाणेत्ति" नानाप्रकाराणां स्वर्णरत्नानां भक्तिभिः=विच्छित्तिभिः चित्रे=विचित्रे। किंविशिष्टा त्रिशला?। आश्वस्ता, गतिजनितश्रमाभावात्। पुनः किंविशिष्टा त्रिशला?। विश्वस्ता, सङ्क्षोभाऽभावात् अनुत्सुका। पुनः किंविशिष्टा त्रिशला?। सुखेन सुखं वा शुभं वा आसनवरं गता, सिद्धार्थं क्षत्रियं प्रति ताभिः इष्टादिभिः पूर्वं व्याख्याताभिः गीर्भिः संलपन्ती, संलपन्ती एवं अवादीत्। किं अवादीत्? तत्राह—

एवं खलु अहं सामी ! अज्ज तंसि तारिसगंसि सयणिज्जंसि वण्णओ जाव पडिबुद्धा, तं जहा—गयउसभ० गाहा। तं एएसिं सामी ! उरालाणं चउदसण्हं महासुमिणाणं के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सइ ? ॥ ५० ॥

व्याख्या—एवं 'खलु' निश्चयेन अहं हे स्वामिन् ! अद्य तस्मिन् तादृशे शयनीये सुप्ता सती, एतान् गजादीन् चतुर्दश महास्वप्नान् दृष्ट्वा प्रतिबुद्धा=जागरिता, तेषां वर्णकः प्रागुक्तो ज्ञेयः। तेषां स्वप्नानां कः कल्याणकारी फलवृत्तिविशेषो भविष्यति।

ततः सिद्धार्थः किं क्षत्रियः कृतवान् ? तत्राह—

तएणं से सिद्धत्थे राया तिसलाए खत्तिआणीए अंतिए एयमट्ठं सुच्चा निसम्म हट्ठतुट्ठचित्ते आणंदिए पीइमणे परमसोमणस्सिए हरिसवसविसप्पमाणहियए धाराहयनीवसुरभिकुसुम-चंचुमालइयरोमकूवे ते सुमिणे ओगिण्हेइ, ते सुमिणे ओगिण्हित्ता ईहं अणुपविसइ, ईहं अणुपविसित्ता अप्पणो साहाविएणं मइपुव्वएणं बुद्धिविण्णाणेणं तेसिं सुमिणाणं अत्थुग्गहं

**करेइ, करित्ता तिसलं खत्तिआणिं ताहिं इट्ठाहिं जाव मंगल्लाहिं मियमहुरसस्सिरीयाहिं वग्गूहिं संलवमाणे २ एवं वयासी ॥ ५१ ॥**

व्याख्या–"तएणं से" ततश्च सः सिद्धार्थः क्षत्रियो राजा, त्रिशलायाः क्षत्रियाण्याः अन्तिके=समीपे, एतं पूर्वोक्तं अर्थं श्रुत्वा हृष्टतुष्टः सन्, 'पीइमणे' त्यादिपदानि पूर्वं व्याख्यातानि सन्ति, तादृशः सन्। "ते सुमिणे ओगिण्हेइ" तान् स्वप्नान् अवगृह्णाति अर्थाऽवग्रहतः अवगृह्य च, ईहां=सदर्थपर्यालोचनलक्षणां अनुप्रविशति। ततः "अप्पणो" आत्मनः स्वाभाविकेन मतिपूर्वकेन बुद्धिविज्ञानेन तेषां स्वप्नानां अर्थाऽवग्रहं करोति। "अप्पणो" इत्यादिपदानां अर्थः पूर्ववत् ज्ञेयः। अर्थाऽवग्रहं कृत्वा त्रिशलां क्षत्रियाणीं ताभिः वाग्भिः एवं अवादीत्–"ताहिं" इत्यादीनि पदानि पुनः विस्तरेण व्याख्यायन्ते–किंविशिष्टाभिः वाग्भिः ?। ताभिः=विवक्षिताभिः, पुनः इष्टाभिः=वाञ्छिताभिः, पुनः कान्ताभिः=कमनीयशब्दाभिः, पुनः प्रियार्थाभिः। पुनः मनसा ज्ञायन्ते सुन्दरतया, भावतः सुन्दरतरा इत्यर्थः, ताभिः। पुनः मनसा रम्यन्ते=गम्यन्ते, पुनः पुनर्याः सुन्दरत्वात् ताभिः। पुनः मनसा अभिविधिना अति=बहुकालं यावत् रमयन्तीति। पुनः उदाराभिः शब्दतोऽर्थतश्च। पुनः कल्याणाभिः शुभार्थप्राप्तिसूचिकाभिः। पुनः शिवाभिः=उपद्रवरहिताभिः शब्दार्थदूषणरहिताभिरित्यर्थः। पुनः धन्याभिः=धनलम्भिकाभिः। पुनः माङ्गल्याभिः=मङ्गले

अनर्थप्रतिघाते साध्वीभिः । पुनः सश्रीकाभिः=शोभायुक्ताभिः । पुनः हृदयगमनीयाभिः=हृद्गतशोकाद्युच्छेदिकाभिः । पुनः हृदयप्राह्लादिकाभिः । पुनः मिताः अल्पाक्षराः, मधुराः कोमलाः, सश्रीकाः=श्रिया सहिताः (मञ्जुलाः शब्दतः) ततः पदत्रयस्य कर्मधारयः । ताभिः वाग्भिः इष्टादीनि एकार्थिकानि वा प्रायः, एवंविधाभिः वाणीभिः संलपन्, सिद्धार्थो राजा एवं वदति स्म–किं अवादीत्? । तत्राह—

उराला णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, कल्लाणा णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, एवं सिवा, धन्ना, मंगल्ला, सस्सिरीया, आरुग्ग–तुट्ठि–दीहाउ–कल्लाण–(३००) मंगल्लकारगा णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, तं जहा–अत्थलाभो देवाणुप्पिए ! भोगलाभो० पुत्तलाभो० सुक्खलाभो० रज्जलाभो०–एवं खलु तुमे देवाणुप्पिए ! नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइंदियाणं विइक्कंताणं अम्हं कुलकेउं, अम्हं कुलदीवं, कुलपव्वयं, कुलवडिंसयं, कुलतिलयं, कुलकित्तिकरं, कुलवित्तिकरं, कुलदिणयरं, कुलाधारं, कुलनंदिकरं, कुलजसकरं, कुलपायवं, कुलविवद्धणकरं, सुकुमालपाणिपायं अहीणसंपुण्णपंचिंदिय-

सरीरं लक्खणवंजणगुणोववेयं माणुम्माणप्पमाणपडिपुण्णसुजायसव्वंगसुंदरंगं, ससिसोमाकारं, कंतं, पियदंसणं, सुरूवं दारयं पयाहिसि ॥ ५२ ॥

व्याख्या–'उराला णं तु मे देवाणुप्पिए !' हे देवानुप्रिये! हे सरलस्वभावे ! त्वया उदाराः कल्याणाः शिवाः धन्याः मङ्गल्याः सश्रीकाः आरोग्य–तुष्टि–दीर्घायुः–कल्याण–मङ्गल्यकारकाः स्वप्नाः दृष्टाः । व्याख्यानं एतेषां पूर्ववत् । पुनः स्वप्नप्रभावात् तव अर्थलाभो "भविष्यति" इति क्रिया सर्वत्र योज्या। अर्थो हिरण्यादिः तस्य लाभः, भोगाः=शब्दादयः तेषां लाभः, पुत्रः=सुतः तस्य लाभः, सौख्यं=निर्वृतिः तस्य लाभः, राज्यं=ससाङ्गस्वरूपं तस्य लाभः तव भविष्यति। पुनः त्वं हे देवानुप्रिये ! नवसु मासेषु बहुप्रतिपूर्णेषु सार्ध-सप्तदिवसेषु व्यतिक्रान्तेषु सत्सु, एवंविधं दारकं=पुत्रं जनयिष्यसि । किंविशिष्टं दारकम्? । अस्माकं कुले केतुः=चिह्नं ध्वजं केतुरिव केतुः, अद्भुतत्वात् तम्। "कुलहेतुः" इति पाठान्तरे कुलस्य हेतुं कारणम्। पुनः कुले दीपं=दीप इव दीपः, प्रकाशकत्वात् मङ्गलत्वाच्च तम्। पुनः कुले पर्वतं अनभिभवनीयस्थिरा-श्रयसाधर्म्यात् । पुनः कुले अवतंसं=शेखरं, उत्तमत्वात् । पुनः कुले तिलकं, भूषकत्वात् । पुनः कुले कीर्तिः=ख्यातिः तस्याः करम्। क्वचित् "कुलवित्तिकरं" (इति) पाठः । तत्र वृत्तिः=निर्वाहः तस्याः करम्। पुनः कुले दिनकरं=सूर्यं, अतिप्रकाशकत्वात्। पुनः कुले आधारं, पृथ्वीवत्। पुनः कुले नन्दिकरं=वृद्धिकरम्। पुनः कुले यशः सर्वदिग्गामि तस्य करम्। पुनः कुले पादपं=वृक्षम्, आश्रयणीयच्छायत्वात् । पुनः कुले

विवर्धनं=विविधैः प्रकारैः वृद्धिकरम् । पुनः सुकुमालपाणिपादं, अहीनसम्पूर्णपञ्चेन्द्रियशरीरं, लक्षणव्यञ्जन-गुणोपपेतं, मानोन्मानप्रमाणप्रतिपूर्णसुजातसर्वाङ्गसुन्दराङ्गं, शशिसौम्याकारं, कान्तम्, प्रियदर्शनम् । सुकुमालादीनां पदानां व्याख्या पूर्ववत्। पुनः स दारकः कीदृशो भविष्यति ? तत्राह—

सेऽविअ णं दारए उम्मुक्कबालभावे विन्नायपरिणयमित्ते जुव्वणगमणुपत्ते सूरे वीरे विक्कंते विच्छिन्नविउलबलवाहणे रज्जवई राया भविस्सइ ॥ ५२ ॥ तं उराला णं तुमे देवाणुप्पिया ! जाव दुच्चंपि तच्चंपि अणुवूहइ ॥

व्याख्या-'सेऽविअ णं दारए'-सोऽपि दारकः उन्मुक्तबालभावः विज्ञातपरिणतमात्रः यौवनकं अनुप्राप्तः सन्, शूरो दानतः, अभ्युपगतनिर्वाहणतो वा, वीरः सङ्ग्रामतः, विक्रान्तः=भूमण्डलाऽऽक्रमतः, विस्तीर्णादपि विपुले=अतिविस्तीर्णे बलवाहने=सैन्यगवादिके यस्य सः, राज्यपतिः राजा, स्वतन्त्र इत्यर्थः। तस्मात् त्वया उदाराः स्वप्नाः दृष्टा, एवं द्विर्वारं त्रिर्वारं तान् स्वप्नान् अनुबृंहति=प्रशंसति।

ततः सा त्रिशला क्षत्रियाणी किं कृतवती ? तत्राह—

तएणं सा तिसला खत्तियाणी सिद्धत्थस्स रण्णो अंतिए एयमट्ठं सुच्चा निसम्म हट्ठतुट्ठा जाव-हियया करयलपरिग्गहिअं(यं) दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी

॥ ५४ ॥ एवमेयं सामी ! तहमेयं सामी ! अवितहमेयं सामी ! असंदिद्धमेयं सामी ! इच्छिअमेअं सामी ! पडिच्छिअमेयं सामी ! इच्छिअपडिच्छिअमेयं सामी ! सच्चे णं एसमट्ठे—से जहेयं तुब्भे वयहत्तिकट्टु ते सुमिणे सम्मं पडिच्छइ, पडिच्छित्ता सिद्धत्थेणं रण्णा अब्भणुण्णाया समाणी नाणामणिरयणभत्तिचित्ताओ भद्दासणाओ अब्भुट्ठेइ, अब्भुट्ठेत्ता अतुरियमचवलमसंभंताए अविलंबिआए रायहंससरिसीए गईए जेणेव सए सयणिज्जे तेणेव उवागच्छइ, उवागच्छित्ता एवं वयासी ॥ ५५ ॥

व्याख्या—"तएणं सा त्ति" अयं आलापकः पूर्वं व्याख्यातोऽस्ति, परं सम्बन्धयोजनामात्रं तु इत्थम् । ततः सा त्रिशला क्षत्रियाणी सिद्धार्थस्य राज्ञः समीपे एतं अर्थं पुत्रप्राप्तिलक्षणं श्रुत्वा हृष्टतुष्टा सती अञ्जलिं मस्तके कृत्वा, एवं अवादीत्–एवं एतत् "स्वामिन् ! मम अवितथं असन्दिग्धं ईप्सितं सत्यमेतत् यत् यूयं वदथ" इति कृत्वा तान् स्वप्नान् सम्यक् प्रतीप्सति । ततः सिद्धार्थेन राज्ञा अभ्यनुज्ञाता सती, भद्रासनात् अभ्युत्तिष्ठति । ततः अत्वरितं यया गत्या आगता तयैव राजहंससदृशया गत्या यत्र स्वकीयं शयनीयं तत्र आगच्छति, आगत्य च शयनीयं अध्यारोहति । ततः एवं अवादीत् । किं अवादीत् ? तत्राह—

मा मेते उत्तमा पहाणा मंगल्ला सुमिणा दिट्ठा अन्नेहिं पावसुमिणेहिं पडिहम्मिस्संतित्ति-कट्टु देवगुरुजणसंबद्धाहिं पसत्थाहिं मंगल्लाहिं धम्मियाहिं लट्ठाहिं कहाहिं सुमिणजागरिअं जागरमाणी पडिजागरमाणी विहरइ ॥ ५६ ॥

स्वप्न-संरक्षणार्थ जागरिका

व्याख्या—"मा मेते उत्तमात्ति" मा मम उत्तमाः=स्वरूपतः प्रधानाः फलतः, मङ्गल्याः, मङ्गले=अनर्थ-प्रतिघाते साधवः स्वप्नाः, अन्यैः पापस्वप्नैः प्रतिहनिष्यन्ते, इति कृत्वा=इति हेतोः, देवगुरुजनसंबद्धाभिः प्रशस्ताभिः मङ्गल्याभिः धर्मिकाभिः लष्टाभिः कथाभिः । "सुमिणजागरिअंति" स्वप्नसंरक्षणार्थं जागरिकां जाग्रती=विदधती, प्रतिजाग्रती=तान् स्वप्नान् संरक्षणेन उपचरन्ती विहरति=आस्ते इति ॥

अथ प्रभाते सिद्धार्थो राजा किं कृतवान् ? तत्राह—

तए णं सिद्धत्थे राया खत्तिए पच्चूसकालसमयंसि कोडुंबिअपुरिसे सद्दावेइ, सद्दावित्ता एवं वयासी ॥ ५७ ॥—खिप्पामेव भो देवाणुप्पिआ ! अज्ज सविसेसं बाहिरिअं उवट्ठाणसालं गंधोदयसित्तं सुइअसंमज्जिओवलित्तं सुगंधवरपंचवण्णपुप्फोवयारकलिअं कालागुरुपवरकुंदुरुक्क-

तुरुक्कडज्झंतधूवमघमघंतगंधुद्धुयाभिरामं सुगंधवरगंधियं गंधवट्टिभूअं करेह कारवेह, करित्ता कारवित्ता य सीहासणं रयावेह, रयावित्ता ममेयमाणत्तियं खिप्पामेव पच्चप्पिणह ॥ ५८ ॥

व्याख्या—"तए णं"त्ति ततः सिद्धार्थो राजा क्षत्रियः प्रत्यूषकाललक्षणो यः समयः=अवसरः तस्मिन्, प्रभातकालसमये इत्यर्थः। कौटुम्बिकपुरुषान् आदेशकारिणः, "सद्दावेत्ति" आह्वयति, आहूय च एवं अवादीत्—'क्षिप्रमेव=शीघ्रमेव भो देवानुप्रियाः! अद्य सविशेषं बाह्यां आस्थानशालां=आस्थानमण्डपं एवंविधां स्वयं कुरुत अन्यैः कारयत, कृत्वा सिंहासनं च रचयित्वा इमां मम आज्ञां कृत्वा प्रत्यर्पयत। किंविशिष्टां आस्थानशालाम्?। गन्धोदकेन सिक्ताम्। पुनः किंविशिष्टां आस्थानशालाम्?। शुचिका=पवित्रा, संमार्जिता कचवराऽपनयनेन, उपलिप्ता छगणादिना, या सा तथा ताम्। इदं च विशेषणं गन्धोदकसिक्तसंमार्जितोपलिप्तशुचिकां इत्येवं दृश्यम्, सिक्ताद्यनन्तरभावित्वात् शुचिकत्वस्य। शेषं पूर्ववत्।

ततः ते कौटुम्बिकपुरुषाः किं कृतवन्तः? तत्राह—

तए णं ते कोडुंबिअपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठतुट्ठ जाव हियया करयल जाव कट्टु एवं सामित्ति आणाए विणएणं वयणं पडिसुणंति, पडिसुणित्ता सिद्धत्थस्स खत्तिअस्स अंतिआओ पडिनिक्खमंति, पडिनिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला

तेणेव उवागच्छंति, तेणेव उवागच्छित्ता खिप्पामेव सविसेसं बाहिरियं उवट्ठाणसालं गंधोदगसित्तं जाव-सीहासणं रयाविंति, रयावित्ता जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छंति, उवागच्छित्ता करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु सिद्धत्थस्स खत्तिअस्स तमाणत्तिअं पच्चप्पिणंति ॥ ५९ ॥

व्याख्या-'तएणं ते कोडुंबिअ'त्ति ततश्च ते कौटुम्बिकपुरुषाः सिद्धार्थेन राज्ञा एवं उक्ताः सन्तः, हृष्टाः तुष्टा एवं इति यथादेशम्, 'स्वामिन्' इति आमन्त्रणे, इतिः उपप्रदर्शने। विनयेन वचनं प्रतिशृण्वंति, प्रतिश्रुत्य च सिद्धार्थस्य क्षत्रियस्य अन्तिकात्=समीपात् प्रतिनिष्क्रामन्ति, प्रतिनिष्क्रम्य च यत्रैव बाह्या उपस्थानशाला तत्रैव आगच्छन्ति, आगत्य च क्षिप्रं=शीघ्रमेव बाह्यां उपस्थानशालां गन्धोदकसिक्तां संमार्जितां उपलिप्तां शुचिकां कृत्वा, सिंहासनं च रचयित्वा, यत्रैव सिद्धार्थो राजा क्षत्रियः तत्रैव आगच्छन्ति, आगत्य च दशनखं मस्तके अञ्जलिं कृत्वा, सिद्धार्थस्य क्षत्रियस्य तां आज्ञां प्रत्यर्पयन्ति-"यदुत भवतां आदिष्टा आज्ञा आस्थानमण्डपादिरचनारूपा कृता" इत्यादिरूपाम् ॥

ततः सिद्धार्थः क्षत्रियः किं अकरोत्? तत्राह—

तए णं सिद्धत्थे खत्तिए कल्लं पाउप्पभायाए रयणीए फुल्लुप्पलकमलकोमलुम्मीलियंमि अहा-

पंडुरे पभाए रत्तासोगप्पगासकिंसुअसुअमुहगुंजद्धरागबंधुजीवगपारावयचलणनयणपरहुअसुरत्तलोअणजासुअणकुसुमरासिहिंगुलनिअरातिरेअरेहंतसरिसे कमलायरसंडबोहए उट्ठिअंमि सूरे सहस्सरस्सिमि दिणयरे तेअसा जलंते, तस्स य करपहरापरद्धंमि अंधयारे बालायवकुंकुमेणं खचिअव जीवलोए, सयणिज्जाओ अब्भुट्ठेइ ॥ ६० ॥ अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता जेणेव अट्टणसाला तेणेव उवागच्छइ, उवागच्छित्ता अट्टणसालं अणुपविसइ, अणुपविसित्ता ॥

व्याख्या-"तए णं सिद्धत्थे त्ति" ततः सिद्धार्थः क्षत्रियः "कल्लं" इति श्वः, "प्रादुः" प्रकाशे, ततः प्रकाशप्रभातायां प्रकटाऽहर्मुखायां रजन्याम्। पुनः प्रभाते च जाते सति। किंविशिष्टे प्रभाते?। "फुल्लुप्पलेत्ति" फुल्लं=विकसितं तत् च तत् उत्पलं च=पद्मं, कमलश्च हरिणविशेषः, कृष्णसारङ्गः=मृगः, तयोः कोमलं=अकठोरं उन्मीलितं दलानां नयनयोश्च उन्मीलनं उन्निद्रता यस्मिन् तत् तस्मिन्। पुनः किंविशिष्टे प्रभाते?। अथ=रजनीविभातानन्तरं, दीर्घत्वं च आर्षत्वात्,। पाण्डुरे=शुक्ले, पुनरेवंविधे सूर्ये उद्गते सति। किंविशिष्टे सूर्ये?। "रत्तासोगेत्ति" रक्ताशोकस्य तरोः प्रकाशः=प्रभा च १, किंशुकं च २, पलाशपुष्पं च ३, शुकमुखं

च ४, गुञ्जाया अर्धश्चेति ५ द्वन्द्वः, तेषां यो रागः तेन सदृशे। कचित्तु "गुंजद्धरागबंधुजीवगपारावयचलणनयणपरहुअसुरत्तलोअणजासुअणकुसुमरासिहिंगलुयनियराइरेयसोहंतसरिसे" इति पाठः। तत्र च बन्धुजीवकं=पुष्पविशेषः, पारापतस्य चलनौ नयने च, परभृतस्य कोकिलस्य सुरक्तस्य जात्यत्वात् लोचने परभृतस्य वा सुरक्ते, सुशब्देन कोपाविष्टत्वलक्षणात् कोपारक्ते लोचने "जासुअणकुसुमरासित्ति" जपापुष्पप्रकरः हिङ्गुलकनिकरः, सुवर्तितकुरुविन्दगुलिका एतेभ्यः अतिरेकेण=आधिक्येन शोभमानः=राजमानः सन् सदृशः, तस्मिन्, अरुणत्वमात्रेण सदृशे, विशिष्टदीप्त्या तु अतिरिक्त इति भावः। पुनः किंविशिष्टे सूर्ये?। कमलाकराः पद्मोत्पत्तिस्थानभूता ह्रदादयः तेषु यानि खण्डानि=नलिनवनानि तेषां बोधके=विकासके। पुनः किंविशिष्टे सूर्ये?। उद्गते। पुनः किंविशिष्टे सूर्ये?। सहस्रं रश्मयो यस्य स तस्मिन्। पुनः किंविशिष्टे सूर्ये?। दिनकरे=दिनकरणशीले। पुनः किंविशिष्टे सूर्ये?। तेजसा ज्वलति सति। पुनः क सति?। तस्य च कराः=किरणाः तेषां तैः वा प्रहारः=अभिघातः, तेन अपराद्धे=विनाशिते अन्धकारे सति। "पहरत्ति" प्राकृतलक्षणेन ह्रस्वः। पुनः क सति?। जीवलोके=मध्यजगति, बालातपः कुंकुममिव तेन खचिते इव=पिञ्जरिते इव, एवंविधे प्रभाते जाते सति सिद्धार्थो राजा शयनीयात् अभ्युत्तिष्ठति, अभ्युत्थाय च पादपीठात् उत्तरति, उत्तीर्य च अट्टनशालां=व्यायामशालां अनुप्रविशति, अनुप्रविश्य च किं कृतवान्? तत्राह—

अणेगवायामजोगवग्गणवामद्दणमल्लजुद्धकरणेहिं संते परिसंते सयपागसहस्सपागेहिं सुगं-

शीघ्रकारिभिः । "पत्तट्ठेहिं त्ति" प्राप्तार्थैः=अधिगतकर्मणि निष्ठां गतैः । कुशलैः=आलोचितकारिभिः, मेधाविभिः=सकृत्श्रुतदृष्टकर्मज्ञैः, निपुणैः=उपायारम्भिभिः, निपुणशिल्पोपगतैः=श्लक्ष्णशिल्पसमन्वितैः । कया ? चतुर्विधया सुखकर्मणया, सुखासुखकारिणी परिकर्मणा=अङ्गशुश्रूषा तया । किंविशिष्टया सुखकर्मणया ? । अस्थां सुखहेतुत्वात् अस्थिसुखया, एवं मांससुखया, त्वक्सुखया, रोमसुखया संबाधनया=संवाहनया वा विश्रामणया संवाहितः सन् राजा अपगतपरिश्रमो जातः । क्वचित् "अवगयखेअपरिस्समे त्ति" पाठः । तत्र खेदो=दैन्यं, श्रमो=व्यायामजं शरीरस्य अस्वास्थ्यं, ततो अपगतौ खेदपरिश्रमौ यस्मात् यस्य वा सः अपगतखेदपरिश्रमः, एवंविधः सन् राजा अट्टनशालातः प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य च यत्रैव मज्जनगृहं तत्रैव आगच्छति, आगत्य च मज्जनगृहं अनुप्रविशति, अनुप्रविश्य च किं अकरोत् ? तत्र आह—

अणुपविसित्ता समुत्तजालाकुलाभिरामे विचित्तमणिरयणकुट्टिमतले रमणिज्जे ण्हाणमंडवंसि नाणामणिरयणभत्तिचित्तंसि ण्हाणपीढंसि सुहनिसण्णे पुप्फोदएहि अ गंधोदएहि अ उण्होदएहि अ सुहोदएहि अ सुद्धोदएहि अ कल्लाणकरणपवरमज्जणविहीए मज्जिए, तत्थ कोउअसएहिं बहुविहेहिं कल्लाणगपवरमज्जणावसाणे पम्हलसुकुमालगंधकासाइअलूहिअंगे अहयसुमहग्घदूसरयणसुसंवुडे सरससुरभिगोसीसचंदणाणुलित्तगत्ते सुइमालावण्णगविलेवणे

रुधिरादिधातुसमताकारिभिः, । पुनः किंविशिष्टैः अभ्यङ्गैः ? । दीपनीयैः दीप्तिजनकैः=अग्निजननैः । पुनः किंविशिष्टैः अभ्यङ्गैः ? । मदनीयैः=कामवर्धनैः । पुनः किंविशिष्टैः अभ्यङ्गैः ? । बृंहणीयैः=मांसोपचयकारिभिः । पुनः किंविशिष्टैः अभ्यङ्गैः ? । दर्पणीयैः=बलकरैः । पुनः किंविशिष्टैः अभ्यङ्गैः ? । सर्वेन्द्रियाणि सर्वगात्राणि च प्रह्लादयंतीति कर्तरि अनीयप्रत्ययः, तैः अभ्यङ्गैः=स्नेहैः अभ्यङ्गः क्रियते स्म यस्य सः, अभ्यङ्गितः सन्, ततः तैलचर्मणि तैलाभ्यक्तस्य संबाधनाकरणाय यत् चर्मतूलिकोपरि कडत्रं (तैलचर्म) तत्र एवंविधैः पुरुषैः "संबाहिए समाणे त्ति" योगः । किंविशिष्टैः पुरुषैः ? । "पडिपुण्णेत्ति" प्रतिपूर्णानां पाणिपादानां सुकुमाल-कोमलानि=अतिकोमलानि तलानि अधोभागाऽपेक्षया येषां ते तैः । पुनः किंविशिष्टैः पुरुषैः ? । "अब्भंगणे त्ति" अभ्यङ्गपरिमर्दनोद्वलनानां प्रतीतार्थानां करणे ये गुणविशेषाः तेषु निर्मातारः सदभ्यस्ताः ये ते तैः । पुनः किंविशिष्टैः पुरुषैः ? । छेकैः=अवसरज्ञैः, द्विसप्ततिकलापण्डितैः इति वृद्धाः । पुनः किंविशिष्टैः पुरुषैः ? । दक्षैः=कार्याणां अविलम्बितकारिभिः । पुनः किंविशिष्टैः पुरुषैः ? । प्रष्ठैः, वाग्मिभिरिति वृद्धाः । अथवा प्रष्ठैः अग्रगामिभिः । पुनः किंविशिष्टैः पुरुषैः ? । कुशलैः साधुभिः संबाधाकर्मणि । पुनः किंविशिष्टैः पुरुषैः ? । मेधादिभिः अपूर्वविज्ञानग्रहणशक्तिनिष्ठैः । "निउणेहिं निपुणसिप्पोवगएहिं त्ति" क्वचित् पाठः । तत्र निपुणैः=उपायकुशलैः, निपुणानि=सूक्ष्माणि यानि शिल्पानि अङ्गमर्दनादीनि तानि उपगतानि अधिगतानि यैः ते तैः । पुनः किंविशिष्टैः पुरुषैः ? । जितपरिश्रमैः । व्याख्यान्तरे-छेकैः=प्रयोजनज्ञैः, दक्षैः=

पुनः शुभोदकैः=पवित्रस्थानाहृतैः तीर्थोदकैः सुखोदकैः वा नात्युष्णैः। पुनः शुद्धोदकैश्च स्वाभाविकैः, तत्र कथं मज्जितः ? इत्याह–"तत्थ कोउ०" तत्र स्नानावसरे कौतुकादीनां=रक्षादीनां शतैः बहुविधैः। तत्रापि राजा कदा कीदृशश्च जातः ? तत्राह–'कल्लाणगपवरमज्जणावसाणे' इति। अथ सिद्धार्थो राजा कल्याणकप्रवरमज्जनावसाने कीदृशो विभूषितो जातः ? तत्र कल्याणानि कायति=आकारयति कल्याणकं एवंविधं यत् प्रवरमज्जनं तस्य अवसाने=प्रान्ते। एतावता कल्याणकारि प्रधानमज्जनकरणानन्तरं इत्यर्थः। कीदृशो नरेन्द्रः ?। पक्ष्मला पक्ष्मवती सुकुमारा गन्धप्रधाना कापायिका–कपायरक्ता शाटिका तया लूषितं अङ्गं यस्य असौ। पुनः किंविशिष्टो नरेन्द्रः ?। क्वापि–"नासानीसासवायवज्झचक्खुहरवण्णफरिसजुत्तहयलालापेलवाइरेगधवलकणगखचिअंति" पाठः। तत्र नासानिःश्वासवातेन वाह्यं श्लक्ष्णत्वात् चक्षुः हरति विशिष्टरूपत्वात् चक्षुर्हरं चक्षुर्धरं वा, चक्षूरोधकं घनत्वात् वर्णस्पर्शयुक्तं हयलालायाः सकाशात्, पेलवं–मृदु अतिरेकेण–अतिशयेन धवलं यत्तत् तथा, कनकेन खचितं=मण्डितं अन्तयोः। पुनः किंविशिष्टो नरेन्द्रः ?। अहतं मलादिना अनुपहतं सुमहार्घ=बहुमूल्यं यत् दूष्यरत्नं=प्रधानवस्त्रं तेन सुसंवृतः=परिगतः, यद्वा सुष्ठु संवृतं=परिहितं येन सः। पुनः किंविशिष्टः नरेन्द्रः ?। सरससुरभिगोशीर्षचन्दनानुलिप्तगात्रः। सुगमम्। पुनः किंविशिष्टः नरेन्द्रः ?। शुचिनी=पवित्रे माला च पुष्पमालावर्णकं विलेपनं च मण्डनकारि कुङ्कुमादिविलेपनं यस्य सः। यद्यपि वर्णकशब्देन चन्दनमुच्यते, परं "गोसीसचंदणाणुलित्ते"इत्यत्र तस्य चंदनस्य उक्तत्वात्। पुनः किंविशिष्टः नरेन्द्रः?। आवि-

आविद्धमणिसुवण्णे कप्पियहारद्धहारतिसरयपालंबपलंबमाणकडिसुत्तसुकयसोभे पिणद्धगेविज्जे अंगुलिज्जगललियकयाभरणे वरकडगतुडिअथंभिअभुए अहिअरूवसस्सिरीए कुंडलउज्जोइआणणे मउडदित्तसिरए हारोत्थयसुकयरइअवच्छे मुद्दिआपिंगलंगुलीए पालंबपलंबमाणसुकयपडउत्तरिज्जे नाणामणिकणगरयणविमलमहरिहनिउणोवचिअमिसिमिसिंतविरइअसुसिलिट्ठविसिट्ठलट्ठआविद्धवीरवलए, किं बहुणा ? कप्परुक्खए विव अलंकिअविभूसिए नरिंदे ।

व्याख्या–"समुत्तत्ति" ततो राजा एवंविधे स्नानमण्डपे–स्नानपीठे सुखेन निषण्णः सन्=उपविष्टः सन् एवंविधैः पानीयैः स्नापितः । किंविशिष्टे स्नानमण्डपे ? । समुक्तेन=मुक्ताफलयुतेन जालेन=गवाक्षेण आकुलो=व्यासोऽभिरामश्च यः सः तस्मिन् । 'समन्तजालाकुलाभिरामे' इति पाठे तु समन्तात् जालैः=जालकैः विच्छित्तिच्छिद्रवत् गृहावयवविशेषैः आकुलोऽभिरामश्च तस्मिन् । "समत्तजालाभिरामे" इति पाठे तु समस्तैः जालकैः अभिरामे=मनोहरे । पुनः किंविशिष्टे स्नानपीठे ? । विचित्रमणिरत्नाभ्यां कुट्टिमतलं=बद्धभूमिः यत्र स तस्मिन् । पुनः किंविशिष्टे स्नानपीठे ? । नानामणिरत्नानां भक्त्या=विच्छित्त्या विचित्रे । अथ एवंविधैः उदकैः गन्धोदकैः मज्जितः । किंविशिष्टैः उदकैः ? । पुष्परसमिश्रैः=श्रीखंडादिरसमिश्रैः । पुनः उष्णोदकैः=एकतसोदकैः,

पुनः शुभोदकैः=पवित्रस्थानाहृतैः तीर्थोदकैः सुखोदकैः वा नात्युष्णैः। पुनः शुद्धोदकैश्च स्वाभाविकैः, तत्र कथं मज्जितः ? इत्याह—"तत्थ कोउ०" तत्र स्नानावसरे कौतुकादीनां=रक्षादीनां शतैः बहुविधैः। तत्रापि राजा कदा कीदृशश्च जातः ? तत्राह—'कल्लाणगपवरमज्जणावसाणे' इति। अथ सिद्धार्थो राजा कल्याणकप्रवरमज्जनावसाने कीदृशो विभूपितो जातः ? तत्र कल्याणानि कायति=आकारयति कल्याणकं एवंविधं यत् प्रवरमज्जनं तस्य अवसाने=प्रान्ते। एतावता कल्याणकारि प्रधानमज्जनकरणानन्तरं इत्यर्थः। कीदृशो नरेन्द्रः ?। पक्ष्मला पक्ष्मवती सुकुमारा गन्धप्रधाना कापायिका—कपायरक्ता शाटिका तया लूषितं अङ्गं यस्य असौ। पुनः किंविशिष्टो नरेन्द्रः ?। क्वापि—"नासानीसासवायवज्झचक्खुहरवण्णफरिसजुत्तहयलालापेलवाइरेगधवलकणगखचिअंति" पाठः। तत्र नासानिःश्वासवातेन वाह्यं श्लक्ष्णत्वात् चक्षुः हरति विशिष्टरूपत्वात् चक्षुर्हरं चक्षुर्धरं वा, चक्षूरोधकं घनत्वात् वर्णस्पर्शयुक्तं हयलालायाः सकाशात्, पेलवं—मृदु अतिरेकेण—अतिशयेन धवलं यत्तत् तथा, कनकेन खचितं=मण्डितं अन्तयोः। पुनः किंविशिष्टो नरेन्द्रः ?। अहतं मलादिना अनुपहतं सुमहार्घं=बहुमूल्यं यत् दूष्यरत्नं=प्रधानवस्त्रं तेन सुसंवृतः=परिगतः, यद्वा सुष्ठु संवृतं=परिहितं येन सः। पुनः किंविशिष्टः नरेन्द्रः ?। सरससुरभिगोशीर्षचन्दनानुलिप्तगात्रः। सुगमम्। पुनः किंविशिष्टः नरेन्द्रः ?। शुचिनी=पवित्रे माला च पुष्पमालावर्णकं विलेपनं च मण्डनकारि कुङ्कुमादिविलेपनं यस्य सः। यद्यपि वर्णकशब्देन चन्दनमुच्यते, परं "गोसीसचंदणाणुलित्ते"इत्यत्र तस्य चंदनस्य उक्तत्वात्। पुनः किंविशिष्टः नरेन्द्रः?। आवि-

द्धानि मणिसुवर्णानि यस्य सः, न धात्वन्तरभूषणं अस्तीत्यर्थः । पुनः किंविशिष्टः नरेन्द्रः ? । कल्पितो विन्यस्तो हारोऽष्टादशसरिकः, अर्धहारो नवसरिकश्च त्रिसरिकं च प्रतीतं यस्य सः । तथा प्रालम्बो=झुम्बनकं प्रलम्बमानो यस्य सः । कटिसूत्रेण=कट्याभरणेन सुष्ठु कृता शोभा यस्य सः । ततः पदत्रयस्य कर्मधारयः । यद्वा कल्पितहारादिभिः सुकृता शोभा यस्य सः । पुनः किंविशिष्टः नरेन्द्रः ? । पिनद्धानि=परिहितानि ग्रीवायां ग्रैवेयकानि=ग्रीवाभरणानि येन सः । पुनः किंविशिष्टः नरेन्द्रः ? । अङ्गुलीयकानि=अङ्गुल्याभरणानि ऊर्मिकाललितानि शोभावन्ति कचाभरणानि पुष्पादीनि यस्य सः । क्वापि "पिणद्धगेविज्जअंगुलिज्जललिअंगयललिअकयाभरणे त्ति" पाठः, तत्र पिनद्धानि ग्रीवादिषु ग्रैवेयकाङ्गुलीयकानि येन सः, तथा ललिताङ्गे शरीरे अन्यान्यपि ललितानि=सशोभानि, कृतानि=विन्यस्तानि आभरणानि यस्य सः । ततः पदद्वयस्य कर्मधारयः । यद्वा पिनद्धानि ग्रैवेयकाङ्गुलीयकानि ललिताङ्गदे च कचाभरणानि च येन सः । पुनः किंविशिष्टः नरेन्द्रः ? । वरकटकानि=प्रधानहस्ताभरणानि, त्रुटिकानि=बाह्वाभरणानि तैः स्तम्भितौ इव भुजौ यस्य सः । पुनः किंविशिष्टः नरेन्द्रः ? । अधिकरूपेण सश्रीकः । पुनः किंविशिष्टः नरेन्द्रः ? । कुण्डलाभ्यां उद्द्योतितं आननं यस्य सः । पुनः किंविशिष्टः नरेन्द्रः ? । मुकुटेन दीप्तं शिरो यस्य सः । पुनः किंविशिष्टः नरेन्द्रः ? । हारेण अवस्तृतं=आच्छादितं तेनैव सुष्ठुकृतरतिकं च वक्षो यस्य सः । पुनः किंविशिष्टः नरेन्द्रः ? । मुद्रिकाभिः=सरलाङ्गुल्याभरणैः पिङ्गला अङ्गुलयो यस्य सः । पुनः किंविशिष्टः नरेन्द्रः ? । प्रलम्बेन प्रलम्बमानेन च सुकृतं पटेन उत्तरीयं=उत्तरासंगो

येन सः। पुनः किंविशिष्टः नरेन्द्रः?। नानामणिकनकरत्नैः विमलानि महार्घाणि निपुणेन शिल्पिना "उवचिअत्ति"
परिकर्मितानि, "मिसिमिसिंतत्ति" दीप्यमानानि यानि विरचितानि सुश्लिष्टानि=विशिष्टानि लष्टानि=
मनोहराणि आविद्धानि=परिहितानि वीरवलयानि येन, सः 'कोऽपि वीरो मां विजित्य एतानि वलयानि मोचयतु'
इति स्पर्धया यानि वलयानि परिदधाति, तानि वीरवलयानि उच्यन्ते, किं बहुना वर्णितेन इति शेषः।
कल्पवृक्ष इव अलङ्कृतो दलादिभिः, विभूषितश्च फलपुष्पादिभिः, राजा तु अलङ्कृतो=मुकुटादिभिः, विभूषितो
वस्त्रादिभिः। पुनः नरेन्द्रः कीदृशः ? तत्राह—

सकोरिंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं सेअवरचामराहिं उद्धुव्वमाणीहिं मंगलजयसद्दक-
यालोए।

व्याख्या—'सकोरिंट'त्ति एवंविधेन ध्रियमाणेन छत्रेण श्वेतवरचामरैः उद्धूयमानैश्च सहित इति शेषः।
किंविशिष्टेन छत्रेण ?। सकोरिण्टानि कोरिण्टाख्यकुसुमस्तबकवन्ति माल्यदामानि=पुष्पस्रजो यत्र तत् तेन।
कोरिण्टकः=पुष्पवृक्षजातिः, तत्पुष्पाणि मालान्तेषु शोभार्थं दीयन्ते, मालायै हितानि माल्यानि=पुष्पाणि
दामानि माला। वाचनान्तरे सूर्याभदेववत् अलङ्कारवर्णकः स चैवं—"एगावलिपिणद्धे" इत्यादिराजप्रश्नीय-
सूत्रे, तच्च विस्तरार्थिना राजप्रश्नीयसूत्रात् ज्ञेयम्। अत्र चामरस्य क्लीबत्वेऽपि स्त्रीत्वं "गौडमतेन"। पुनः
किंविशिष्टः नरेन्द्रः ?। मङ्गलभूतो जयशब्दः कृतः आलोकेन यस्य स तथा। 'लोककृतमार्गदानः' इत्यन्ये।

पुनः नरेन्द्रः कीदृक् सन् मज्जनगृहान्निष्क्रामति ? तत्राह—

अणेगगणनायगदंडनायगराईसरतलवरमाडंबिअकोडुंबिअमंतिमहामंतिगणगदोवारियअमच्च-चेडपीढमद्दनगरनिगमसिट्ठिसेणावइसत्थवाहदूअसंधिवाल सद्धिं संपरिवुडे धवलमहामेहनिग्गए इव गहगणदिप्पंतरिक्खतारागणाण मज्झे ससिव्व पिअदंसणे नरवई नरिंदे नरवसहे नरसीहे अब्भहिअरायतेअलच्छीए दिप्पमाणे मज्जणघराओ पडिनिक्खमइ ॥ ६२ ॥

व्याख्या–ततः सिद्धार्थो नरपतिः ईदृक् सन् मज्जनगृहात् प्रतिनिष्क्रामति इति उक्तिः। किंविशिष्टः नरपतिः ?। "अणेगेत्ति" अनेके ये गणनायकाः प्रकृतिमहत्तराः १, दण्डनायकाः=तन्त्रपालाः २, राजानो=माण्डलिकाः ३, ईश्वरा=युवराजानः, अणिमाद्यैश्वर्ययुक्ता इत्यन्ये ४, तलवराः=तुष्टनृपदत्तपट्टबन्धविभूषिताः राजस्थानीयाः ५, माडंबिकाः=छिन्नमडंबाधिपाः ६, कौटुंबिकाः=कतिपयकुटुम्बप्रभवोऽवलगकाः ग्राममहत्तरा वा ७, मन्त्रिणः=सचिवाः ८, महामन्त्रिणो=महामात्याः मन्त्रिमण्डलप्रधानाः हस्तिसाधनाध्यक्षा वा ९, गणकाः=ज्योतिषिका भाण्डागारिका वा १०, दौवारिकाः=प्रतीहाराः राजद्वारिका वा ११, अमात्याः=राज्याधिष्ठायकाः १२, चेटाः=पादमूलिका दासाः १३, पीठमर्दाः=आस्थाने आसन्नाः सन्तः सेवका वयस्या इत्यर्थः, वेश्याचार्या वा १४, नागराः=नगरवासिप्रकृतयोऽराजदेयविभागाः १५, निगमाः कारणिका वणिजो वा १६,

श्रेष्ठिनः=श्रीदेवताध्यासितसौवर्णपट्टभूषितोत्तमाङ्गाः १७, सेनापतयो=नृपतिनिरूपिताः चतुरङ्गसेनानायकाः १८, सार्थवाहाः=सार्थनायकाः १९, दूताः=अन्येषां गत्वा राजादेशनिवेदकाः २०, सन्धिपालाः=राज्यसन्धिरक्षकाः २१, एषां द्वन्द्वसमासः, ततः तैः । इह तृतीयाबहुवचनलोपो द्रष्टव्यः । सार्धं न केवलं तत्सहितोऽपि तु तैः समन्तात् परिवृतो नरपतिः तस्मात् मज्जनगृहात् निष्क्रामति । पुनः वार्तिकमपि अत्रार्थे—अनेकगणनायक–दण्डनायक–श्रीगरणा–वयगरणा–देवगरणा–जमगरणा–सामंत–महासामंत–मंडलीक–महामंडलीक–चउरासिया–मुकुटवद्ध–संधिपाल–दूतपाल–संधिविग्रही–पारविग्रही–अमात्य–महाअमात्य–श्रेष्ठि–सार्थवाह–व्यवहारी–अंगरक्षक–पुरोहित–गणनायक–वृत्तिनायक–वहीवाहक–थईयायत–पडुपडीयायत–कपटायत–टाकटमाली–इंद्रजाली–धर्मवादी–धातुर्वादी–मंत्रवादी–तंत्रवादी–यंत्रवादी–ज्योतिर्वादी–तर्कवादी–धनुर्धर–दण्डधर–खड्गधर–वाणहीधर–छत्रधर–चामरधर–पताकाधर–देवीधर–प्रतीहार–वालहार–सेजपाल–तंत्रपाल–अंगमर्दक–आरक्षक–मीठाबोला–साचाबोला–सुहबोला–साहबोला–कथाबोला–गुणबोला–समस्याबोला–साहित्यबंधक–लक्षणबंधक–छंदबंधक–अलंकारबंधक–नाट्यबंधक–गीतबंधक,–इत्यादीनां परिवारेण परिवृतः । पुनः किंविशिष्टः नरपतिः ? । धवलमहामेघनिर्गत इव शशी । 'ससिव्व' ततोऽन्यत्र सम्बन्धः, ततो ग्रहगणदीप्यमानऋक्षतारकगणानां मध्ये इव वर्तमानः । पुनः किंविशिष्टः ? । प्रियदर्शनः नराणां पतिः=रक्षिता । पुनः किंविशिष्टः नरपतिः ? । नरेन्द्रः, नरेषु ऐश्वर्यानुभवनात् । पुनः किंविशिष्टः नरपतिः ? । नरवृषभः,

राज्यधुराधरणात्। पुनः किंविशिष्टः नरपतिः ?। नरसिंहः, शौर्यातिशयात् । पुनः किंविशिष्टः नरपतिः ?। अभ्यधिकराजतेजोलक्ष्म्या दीप्यमानः, एवंविधः सन् राजा मज्जनगृहात्। निष्क्रम्य किं करोति स्म? तत्राह—

मज्झणघराओ पडिनिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छइ, उवागच्छित्ता सीहासणंसि पुरत्थाभिमुहे निसीअइ, निसिइत्ता अप्पणो उत्तरपुरच्छिमे दिसीभाए अट्ठ भद्दासणाइं सेअवत्थपच्चुत्थुयाइं सिद्धत्थयकयमंगलोवयाराइं रयावेइ, रयावित्ता अप्पणो अदूरसामंते नाणामणिरयणमंडिअं अहिअपिच्छणिज्जं महग्घवरपट्टणुग्गयं सण्हपट्टभत्तिसयचित्तताणं ईहामिअउसभतुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं अब्भिंतरिअं जवणिअं अंछावेइ, अंछावेत्ता नाणामणिरयणभत्तिचित्तं अत्थरयमिउमसूरगुत्थयं सेअवत्थपच्चुत्थुअं सुमउअं अंगसुहफरिसं विसिट्ठं तिसलाए खत्तिआणीए भद्दासणं रयावेइ ॥ ६३ ॥

व्याख्या–"मज्झणघराओ" ततो राजा मज्जनगृहात् निष्क्रम्य यत्रैव बाह्या उपस्थानशाला तत्रैव आग-

करोति, आगत्य च सिंहासने पूर्वाभिमुखो निषीदति, निषिद्य च आत्मन ईशानकोणे, अष्टौ भद्रासनानि रचयति, रचयित्वा, । किंविशिष्टानि भद्रासनानि ?। श्वेतवस्त्रेण=धवलवाससा प्रत्यवस्तृतानि=आच्छादितानि । पुनः किंविशिष्टानि भद्रासनानि ?। कृतः सिद्धार्थकप्रधानो मङ्गलाय उपचारः=पूजा येषु तानि, प्राकृतत्वात् कृतशब्दस्य पूर्वनिपातः । ततः आत्मनः सामंतं समीपं उभयोः अभावेन अतिदूरे=नातिसमीपे इत्यर्थः । एवंविधां यवनिकां अंछयतीति=आकर्षयतीति संबंधः । किंविशिष्टां यवनिकाम् ?। नानामणिरत्नैः मण्डिताम् । पुनः किंविशिष्टां यवनिकाम् ?। अधिकं प्रेक्षणीयां=अवलोकनीयाम्। क्वापि "अहिअपिच्छणिज्जरूवं" इति पाठः, (स च) सुबोधः। पुनः किंविशिष्टां यवनिकाम् ?। महार्घां चासौ वरपत्तने=वस्त्रोत्पत्तिस्थाने उद्गतां च व्यूता वरपट्टनात् वा, प्रधानवेष्टनकादुद्गतां=निर्गतां । पुनः किंविशिष्टां यवनिकाम् ?। सूक्ष्मपट्टसूत्रमयो भक्तिशत-चित्रस्तानः स्तानको यस्यां सा ताम् । क्वचित् "भत्तिसयसमुवचिअमाणं" इति पाठः, तत्र भक्तिशतैः समुपचितैः स्फीतो मानो=बहुमानो यस्याः सा ताम् । क्वचिच्च "सण्हबहुभत्तिसयचित्तताणं सययसमुचिअं" इति पाठः, तत्र श्लक्ष्णानि बहुभक्तिशतानि यानि चित्राणि तेषां स्थानं, तत एव सततसमुचितां=सर्वकालयो-ग्याम् । पुनः किंविशिष्टां यवनिकाम् ?। ईहामृगाः=वृकाः=ऋषभतुरगनरमकरविहगाः प्रतीताः, व्यालाः=श्वापदा भुजङ्गा वा, किन्नराः=व्यन्तरविशेषाः, रुरवो=मृगभेदाः, शरभाः=अष्टापदाः, महाकायाः=आटव्यप-शवः, चमराः=आटव्यगावः, कुञ्जराः=हस्तिनः, वनलतापद्मलताः=लताभेदाः, ततः सर्वेषां पदानां द्वन्द्वः

कार्यः। ततः तासां विच्छित्तिभिः चित्राम्, एवंविधां अभ्यन्तरभागवर्तिनीं यवनिकां, "अंछावेइ त्ति" आकर्षयति=आयतां करोतीत्यर्थः। पुनः यवनिका कीदृशी ?। तत्रार्थे वार्तिकमपि, तथाहि—"गजरथतुरंगमसीहवृषभसुरअसुरकिंनरदेवविद्याधरगणगंधर्वविहगसरभसर्पकरभशुकराजसारसहरिणचामरवनलतापद्मलताशंखनंद्यावर्तपूर्णकलशस्वस्तिकभद्रासनआदर्शविमानहंसकोकिलनीलचासलाटस्त्रीविलासरथांगमृदङ्गपडहतालभेरिझुंगललांगूलचतुःपदद्विपदबत्रीसबद्धनाटकराजहंसमोरसभाआतपत्रकेतुभवनवृक्षअचलनदीपुष्करिणीसमुद्ररत्नमणिमाणिक्यवनवाडीप्रमुखलिखितरूपविचित्रां यवनिकाम्।" ततो यवनिकाबन्धनानन्तरं सिद्धार्थो राजा एवंविधं त्रिशलाक्षत्रियाणीनिमित्तं भद्रासनं रचयति। किंविशिष्टं भद्रासनम् ?। नानामणिरत्नभक्तिचित्रम्। पुनः किंविशिष्टं भद्रासनम् ?। आस्तरकेण प्रतीतेन मृदुमसूरकेण च अवस्तृतं=आच्छादितम्, अथवा अस्तरजसा=मृदुमसूरकेण अवस्तृतम्। पुनः किंविशिष्टं भद्रासनम् ?। श्वेतवस्त्रेण प्रत्यवस्तृतं=उपरि आच्छादितम्। पुनः किंविशिष्टं भद्रासनम् ?। सुमृदुकं=कोमलम्, अत एव अङ्गस्य सुखः=सुखकारी स्पर्शो यस्य तत्।

अथ राजा भद्रासनं रचयित्वा किं करोति ?, तत्राह—

रयावित्ता कोडुंबिअपुरिसे सद्दावेइ, सद्दावेत्ता एवं वयासी ॥ ६४ ॥ खिप्पामेव भो देवाणु-

प्पिआ ! अट्ठंगमहानिमित्तसुत्तत्थधारए विविहसत्थकुसले सुविणलक्खणपाढए सद्दावेह ॥ तए णं ते कोडुंबिअपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठतुट्ठ जाव–हियया करयल जाव पडिसुणंति ॥ ६५ ॥ पडिसुणित्ता सिद्धत्थस्स खत्तियस्स अंतिआओ पडिनिक्खमंति, पडिनिक्खमित्ता कुंडपुरं नगरं मज्झंमज्झेणं जेणेव सुविणलक्खणपाठगाणं गेहाइं तेणेव उवागच्छंति, उवागच्छित्ता सुविणलक्खणपाढए सद्दाविंति ॥ ६६ ॥

व्याख्या–अथ भद्रासनरचनानन्तरं सिद्धार्थो राजा कौटुम्बिकपुरुषान् आकारयति, आकार्य च एवं अवादीत्–क्षिप्रमेव भो देवानुप्रियाः ! स्वप्नलक्षणपाठकान् यूयं आह्वयत । किंविशिष्टान् स्वप्नलक्षणपाठकान् ?। 'अट्ठंगे'त्ति । अष्टाङ्ग=अष्टावयवं, दिव्यो १ त्पाता २ ऽन्तरिक्ष ३ भौमा ४ ऽङ्ग ५ स्वर ६ लक्षण ७ व्यञ्जन ८ भेदात्, अङ्गविद्याप्रकीर्णादौ उक्तम्, अथवा "अङ्ग १ स्वप्न २ स्वर ३ भौम ४ व्यञ्जन ५ लक्षणो ६ त्पात ७ अन्तरिक्ष ८ भेदात्" अष्टभेदं यत् महानिमित्तं परोक्षार्थप्रतिपत्तिकारणव्युत्पादकशास्त्रविशेषः, तस्य यौ सूत्रार्थौ तौ धारयन्ति, पठन्ति वा तयोः वा पारगा ये ते तान् । अनेन पाठत्रयं व्याख्यातम्–"धारए १ पाठए २ पारए ३ त्ति" । पुनः कीदृशान् स्वप्नलक्षणपाठकान् ? । विविधशास्त्रकुशलान् । ततः ते कौटुम्बिकाः पुरुषाः सिद्धार्थेन राज्ञा एवं उक्ताः सन्तः हृष्टतुष्टा जाताः, यावत्करणात् "हट्ठतुट्ठचित्तमाणंदिया" इत्यादि

दृश्यम्, पुनः यावत्करणात् "परिग्गहं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं देवो तहत्ति आणाए विणएणं वयणं पडिसुणंति त्ति"। अस्यार्थः-प्रतिशृण्वन्ति=अभ्युपगच्छन्ति वचनं, कीदृशेन विनयेन ?। "एवमिति" यथैव यूयं भणथ तथैव "देवोत्ति" हे देव! "तहत्ति" नान्यथा, आज्ञया भवदादेशेन करिष्यामः, इत्येवं अभ्युपगमसूचकपदचतुष्कभणनरूपेण प्रतिश्रुत्य च सिद्धार्थस्य क्षत्रियस्य अन्तिकात्=समीपात् प्रतिनिष्क्रामन्ति, प्रतिनिष्क्रम्य च कुण्डपुरग्रामस्य मध्ये भूत्वा यत्रैव स्वप्नलक्षणपाठकगृहाणि तत्रैव आगच्छन्ति, आगत्य च स्वप्नलक्षणपाठकान् आह्वयन्ति। ततः ते स्वप्नलक्षणपाठकाः किं कुर्वन्ति ?, तत्राह—

तए णं ते सुविणलक्खणपाढया सिद्धत्थस्स खत्तिअस्स कोडुंबिअपुरिसेहिं सद्दाविआ समाणा हट्ठतुट्ठ जाव हयहियया ण्हाया कयबलिकम्मा कयकोउअमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगल्लाइं वत्थाइं पवराइं परिहिआ अप्पमहग्घाभरणालंकियसरीरा सिद्धत्थयहरिआलिआकयमंगलमुद्धाणा सएहिं २ गेहेहिंतो निग्गच्छंति, निग्गच्छित्ता खत्तियकुंडग्गामं नगरं मज्झंमज्झेणं जेणेव सिद्धत्थस्स रण्णो भवणवरवडिंसगपडिदुवारे तेणेव उवागच्छंति, उवागच्छित्ता भवणवरवडिंसगपडिदुवारे एगयओ मिलंति, मिलित्ता जेणेव बाहिरिआ उवट्ठा-

णसाला जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छंति, उवागच्छित्ता करयलपरिग्गहिअं जाव कट्टु सिद्धत्थं खत्तिअं जएणं विजएणं वद्धाविंति ॥ ६७ ॥

व्याख्या–'तए णं' ततश्च ते स्वप्नलक्षणपाठकाः सिद्धार्थस्य क्षत्रियस्य कौटुम्बिकपुरुषैः आहूताः सन्तः हृष्टतुष्टाः सन्तः स्नाताः=कृतस्नानाः। पुनः स्नानानन्तरं कृतं बलिकर्म स्वदेवतानां यैः ते। पुनः किंविशिष्टाः स्वप्नलक्षणपाठकाः ?। कृतानि कौतुकमङ्गल्यान्येव प्रायश्चित्तानि दुःस्वप्नादिविघातार्थं अवश्यकरणीयत्वात् यैः ते तथा। तत्र कौतुकानि–मपीतिलकादीनि मङ्गलानि च सिद्धार्थकदध्यक्षतदूर्वाङ्कुरादीनि। अन्ये त्वाहुः–"पायच्छुत्ता" इति, पादेन पादे वा छुप्ताः चक्षुर्दोषपरिहारार्थं पादछुप्ताः, कृताः कौतुकमङ्गलाश्च ते पादछुप्ताश्चेति समासः। पुनः किंविशिष्टाः स्वप्नलक्षणपाठकाः ?। शुद्धात्मानः=स्नानेन शुचीकृतदेहाः। पुनः किंविशिष्टाः स्वप्नलक्षणपाठकाः ?। वस्त्राणि परिहिताः। किंविशिष्टानि वस्त्राणि ?। "वेसाइ" वेषे साधूनि वेष्याणि, अथवा शुद्धानि च तानि प्रवेश्यानि च राजसभाप्रवेशोचितानि चेति पदद्वयेनापि वस्त्रविशेषणं कार्यम्। पुनः किंविशिष्टानि वस्त्राणि ?। मङ्गलकरणे साधूनि। पुनः किंविशिष्टानि वस्त्राणि ?। प्रवराणि=प्रधानानि। पुनः किंविशिष्टाः स्वप्नलक्षणपाठकाः ?। "अप्पेत्ति" अल्पानि महार्घाणि=बहुमूल्यानि यानि आभरणानि तैः अलङ्कृतं शरीरं येषां ते। पुनः किंविशिष्टाः स्वप्नलक्षणपाठकाः ?। "सिद्धत्थेत्ति" सिद्धार्थकाश्च सर्षपाः हरितालिका दूर्वाश्च कृता मङ्गलनिमित्तं मूर्धनि=शिरसि यैस्ते, एवंविधाः सन्तः स्वप्नलक्षणपाठकाः स्वकेभ्यः स्वकेभ्यः=आत्मीयेभ्यः आत्मीयेभ्यः

इत्यर्थः, गृहेभ्यो निर्गच्छन्ति, निर्गत्य च क्षत्रियकुण्डग्राममध्ये भूत्वा यत्रैव सिद्धार्थस्य राज्ञः "भवण०" भवनवरेषु=हर्म्येषु अवतंसक इव=शेखर इव भवनवरावतंसकः तस्य प्रतिद्वारे मूलद्वारसमीपद्वारे आगच्छन्ति, आगत्य च एकत्र मिलन्ति, मिलित्वा च यत्रैव बाह्या आस्थानशाला यत्रैव सिद्धार्थो राजा तत्रैव आगच्छन्ति, आगत्य च अञ्जलिं मस्तके कृत्वा, सिद्धार्थं क्षत्रियं जयेन विजयेन च वर्धापयन्ति, "त्वं वर्धस्व" इति आचक्षते इत्यर्थः। तौ च प्राग्व्याख्यातौ। पुनस्ते प्रोचुः—

"दीर्घायुर्भव वृत्तिमान् भव सदा, श्रीमान् यशस्वी भव!। प्रज्ञावान् भव भूरिसत्त्वकरुणा-दानैकशौण्डो भव!। भोगाढ्यो भव भाग्यवान् भव! महा-सौभाग्यशाली भव!। प्रौढश्रीर्भव कीर्तिमान् भव! सदा विश्वोपजीवी भव!॥ १॥

व्याख्या-'हे राजन्! त्वं दीर्घायुः भव, श्रीमान् भव, यशस्वी भव, प्रज्ञावान् भव, भोगवान् भव, दानवान् भव, भाग्यवान् भव, सौभाग्यवान् भव, कीर्तिमान् भव, कोटिंभरो भव!।' पुनः प्रवदन्ति स्म— "दशावतारो वः पायात्, कमनीयाञ्जनद्युतिः। किं प्रदीपः?, न हि, श्रीपः, किंतु वामांगजो जिनः॥ १॥ अस्यापि बालावबोधार्थं अर्थो यथा-'हे राजन्! दशावतारो वो=युष्मान् पायात्=रक्षां करोतु। किंविशिष्टः दशावतारः?। कमनीयं अञ्जनं=कज्जलं, तस्मात् तद्वत् वा द्युतिः यस्य सः। ईदृशः तर्हि किं दीपः=

प्रदीपः ?। नहि; कथं ?। तस्यापि दशातो वर्तितोऽवतारो भवति ?। कमनीयाऽञ्जनद्युतिः भवति। तर्हि किं श्रीपः=श्रीकृष्णः ? । नहि; कथं ?। तस्य दश अवतारा मत्स्यकूर्मादयो वर्तन्ते ? अथ च कमनीयाञ्जनद्युतिरपि कृष्णवर्णत्वात्, किंतु को देवः ? इत्याह–वामाङ्गजः वामाया अङ्गजो वामाङ्गजः श्रीपार्श्वनाथो यतः सः दशावतारो दश अवताराः=भवा यस्य स दशावतारः । पुनः कमनीयाञ्जनद्युतिः श्यामवर्णत्वात्, अयं आशीर्वादो युक्तः । सिद्धार्थस्य श्रीपार्श्वनाथश्रावकत्वेन श्रीआचाराङ्गसूत्रे प्रोक्तत्वात् । ततः ते स्वप्नलक्षणपाठकाः कीदृशाः सन्तः किं कुर्वन्ति स्म ?, तत्राह—

तए णं ते सुविणलक्खणपाढगा सिद्धत्थेणं रण्णा वंदियपूइअसक्कारिअसम्माणिआ समाणा पत्तेअं २ पुव्वन्नत्थेसु भद्दासणेसु निसीयंति ॥ ६८ ॥

व्याख्या–"तए णं ते त्ति" ततश्च ते स्वप्नलक्षणपाठकाः सिद्धार्थेन राज्ञा वन्दिताः सद्गुणोत्कीर्तनेन, पूजिताः पुष्पैः, सत्कारिताः फलवस्त्रादिदानेन, सन्मानिताः अभ्युत्थानादिप्रतिपत्त्या। अन्ये त्वाहुः–पूजिता वस्त्राभरणादिभिः, सत्कारिता अभ्युत्थानादिना, सन्मानिता आसनदानादिना। क्वचित् "अच्चिअवंदिअमाणिअपूइअत्ति" पाठः, तत्र अर्चिताः चन्दनचर्चादिना, मानिता दृष्टिप्रणामतः, पूजिताः पुष्पैः, "समाणत्ति" सन्तः प्रत्येकं प्रत्येकं पूर्वन्यस्तेषु भद्रासनेषु निषीदन्ति। ततो राजा किं करोति ?, तत्राह—

तए णं सिद्धत्थे खत्तिए तिसलं खत्तियाणिं जवणिअंतरियं ठावेइ, ठावित्ता पुप्फफलपडिपुण्णहत्थे परेणं विणएणं ते सुविणलक्खणपाढए एवं वयासी ॥ ६९ ॥

व्याख्या–"तए णं सि०" ततः सिद्धार्थो राजा त्रिशलां क्षत्रियाणीं यवनिकांतरितां स्थापयति, स्थापयित्वा पुष्पफलप्रतिपूर्णहस्तः सन्। एतावता पुष्पफलानि स्वप्नलक्षणपाठकानां अग्रे मुक्त्वा प्रकृष्टेन विनयेन तान् स्वप्नलक्षणपाठकान् प्रति एवं अवादीत्। किं अवादीत्? तत्राह—

एवं खलु देवाणुप्पिया! अज्ज तिसला खत्तियाणी तंसि तारिसगंसि जाव सुत्तजागरा ओहीरमाणी २ इमे एयारूवे उराले चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा ॥ ७० ॥ तं जहा–गयवसह० गाहा, तं एएसिं चउद्दसण्हं महासुमिणाणं देवाणुप्पिया! उरालाणं के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सइ? ॥ ७१ ॥

व्याख्या–"एवं खलु देवाणु०" एवं खलु भो देवानुप्रियाः! अद्य तस्मिन् तादृशे शयनीये सुप्ता सती ईषन्निद्रां गच्छन्ती एतादृशान् पूर्वं व्याख्यातान् चतुर्दशमहास्वप्नान् 'गयवसह'–गाथोक्तान् दृष्ट्वा प्रतिबुद्धा। ततो यूयं कथयत–'एतेषां चतुर्दशमहास्वप्नानां कः फलवृत्तिविशेषो भविष्यति?।' ततः ते स्वप्नलक्षणपाठकाः कीदृशाः सन्तः किं कुर्वन्ति स्म?, तत्राह—

तए णं ते सुमिणलक्खणपाढगा सिद्धत्थस्स खत्तियस्स अंतिए एयमट्ठं सोच्चा निसम्म हट्ठतुट्ठ जाव हयहियया ते सुमिणे ओगिण्हंति, ओगिण्हित्ता ईहं अणुपविसंति, अणुपविसित्ता अन्नमन्नेणं सद्धिं संचालेंति, संचालित्ता तेसिं सुमिणाणं लद्धट्ठा गहिअट्ठा पुच्छिअट्ठा विणिच्छियट्ठा अभिगयट्ठा सिद्धत्थस्स रण्णो पुरओ सुमिणसत्थाइं उच्चारेमाणा २ सिद्धत्थं खत्तियं एवं वयासी ॥ ७२ ॥

व्याख्या—"तए णं ते" ततश्च ते स्वप्नलक्षणपाठकाः सिद्धार्थस्य क्षत्रियस्य अन्तिके=समीपे एतं अर्थं श्रुत्वा, हृष्टतुष्टाः सन्तः तान् स्वप्नान् गृह्णन्ति, गृहीत्वा च विचारणां कुर्वन्ति, विचार्य च अन्योन्येन सह "संचालेंति" संवादयन्ति पर्यालोचयन्तीत्यर्थः। क्वचित् 'संलाविंति त्ति' पाठः, तत्रापि स एवार्थः, ततः ते कीदृशा जाताः ?, तदाह—स्वप्नानां लब्धार्थाः लब्धोऽर्थो यैः ते लब्धार्थाः स्वत एव। पुनः कीदृशाः ?। गृहीतार्थाः पराभिप्रायग्रहणतः। पुनः कीदृशाः ?। पृष्टार्थाः संशये सति परस्परतः। तत एवं विनिश्चितार्था अत एव च अभिगतार्थाः=अवधारितार्थाः, अथवा लब्धार्थाः अर्थश्रवणतः, गृहीतार्थाः अवधारणतः, पृष्टार्थाः संशये सति अधिगतार्था वा अर्थावबोधात्, विनिश्चितार्थाः ऐदंपर्यालोचनात्। सिद्धार्थस्य राज्ञः पुरः=अग्रे स्वप्नशास्त्राणि समुच्चरन्तः सिद्धार्थं राजानं एवं अवादिषुः—किं अवादिषुः ?, तत्राह—

एवं खलु देवाणुप्पिया ! अम्हं सुमिणसत्थे बायालीसं सुमिणा तिसं महासुमिणा बावत्तारिं सव्वसुमिणा दिट्ठा, तत्थ णं देवाणुप्पिया ? अरहंतमायरो वा चक्कवट्टिमायरो वा अरहंतंसि (४००) वा चक्कहरंसि वा गब्भं वक्कममाणंसि एएसिं तीसाए महासुमिणाणं इमे चउद्दस महासुमिणे पासित्ताणं पडिबुज्झंति ॥ ७३ ॥ तं जहा—गयवसह० गाहा, ॥ ७४ ॥ वासुदेवमायरो वा वासुदेवंसि गब्भं वक्कमाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरे सत्त महासुमिणे पासित्ताणं पडिबुज्झंति ॥ ७५ ॥ बलदेवमायरो वा बलदेवंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरे चत्तारि महासुमिणे पासित्ताणं पडिबुज्झंति ॥ ७६ ॥ मंडलियमायरो वा मंडलियंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरं एगं महासुमिणं पासित्ताणं पडिबुज्झंति ॥ ७७ ॥

व्याख्या—स्वप्नलक्षणपाठका एवं प्राहुः—एवं खलु भो देवानुप्रिय ! अस्माकं स्वप्नशास्त्रे द्विचत्वारिंशत् (४२) स्वप्नाः त्रिंशच्च (३०) महास्वप्नाः, सर्वेऽपि द्विसप्ततिः (७२) स्वप्नाः दृष्टाः, तत् देवानुप्रिय ! अर्हन्मातरो वा चक्रवर्तिमातरो वा अर्हति वा चक्रवर्तिनि वा गर्भं व्युत्क्रामति=प्रविशति सतीत्यर्थः, गर्भे वा व्युत्क्रामति=

उत्पद्यमाने एतेषां त्रिंशत्स्वप्नानां मध्यात् इमान् चतुर्दशमहास्वप्नान् दृष्ट्वा प्रतिबुध्यंति गजवृषभादीन्। अथ च वासुदेवमातरो वा वासुदेवे गर्भे व्युत्क्रामति सति चतुर्दशमहास्वप्नमध्यात् अन्यतरान् सप्त महास्वप्नान् दृष्ट्वा प्रतिबुध्यन्ति। अथ च बलदेवमातरो बलदेवे गर्भे व्युत्क्रामति सति चतुर्दशमहास्वप्नमध्यात् चतुरो महास्वप्नान् दृष्ट्वा, प्रतिबुध्यन्ति। मण्डलीकमातरो वा मण्डलीके गर्भे व्युत्क्रामति चतुर्दशमहास्वप्नमध्ये एकं महास्वप्नं पश्यन्ति। "प्रतिविष्णुः महान् जज्ञे, स्वप्नत्रितयसूचितात्" प्रतिविष्णुमाता स्वप्नत्रयं पश्यति।

पुनरपि स्वप्नलक्षणपाठकाः प्राहुः—

इमे यं णं देवाणुप्पिया! तिसलाए खत्तियाणीए चउद्दस [चोद्दस] महासुमिणा दिट्ठा, तं उरालाणं देवाणुप्पिया! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, जाव मंगल्लकारगा णं देवाणुप्पिआ! तिसलाए खत्तिआणीए सुमिणा दिट्ठा, तं जहा—अत्थलाभो देवाणुप्पिया! भोगलाभो०, पुत्तलाभो०, सुक्खलाभो०, देवाणुप्पिया! रज्जलाभो देवाणु० एवं खलु देवाणुप्पिया! तिसला खत्तियाणी नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइंदिआणं वइक्कंताणं तुम्हं कुल-केउं कुलदीवं कुलपव्वयं कुलवडिंसगं कुलतिलयं कुलकित्तिकरं कुलवित्तिकरं कुलदिणयरं कुला-

हारं कुलनंदिकरं कुलजसकरं कुलपायवं कुलतंतुसंताणविवद्धणकरं सुकुमालपाणिपायं अहीणपडिपुण्णपंचिंदियसरीरं लक्खणवंजणगुणोववेअं माणुम्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगं ससिसोमाकारं कंतं पियदंसणं सुरूवं दारयं पयाहिसि ॥ ७८ ॥ सेऽविय णं दारए उम्मुक्कबालभावे विन्नायपरिणयमित्ते जुव्वणगमणुपत्ते सूरे वीरे विक्कंते विच्छिन्नविपुलबलवाहणे चाउरंतचक्कवट्टी रज्जवई राया भविस्सइ, जिणे वा तिलोगनायगे धम्मवरचाउरंतचक्कवट्टी ॥ ७९ ॥ तं उराला णं देवाणुप्पिया! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, जाव आरुग्गतुट्ठिदीहाउकल्लाणमंगल्लकारगा णं देवाणुप्पिआ ! तिसलाए खत्तियाणीए सुमिणा दिट्ठा ॥ ८० ॥

व्याख्या–ततो हे देवानुप्रिय! त्रिशलाक्षत्रियाण्या चतुर्दशमहास्वप्ना दृष्टाः, तत उदाराः स्वप्नाः दृष्टाः। एवं पूर्ववत् स्वप्नवर्णको व्याख्येयः। ततः एतत्स्वप्नदर्शनप्रभावात् अर्थलाभो भविष्यति, यावत्पुत्रलाभो भविष्यति, पुत्रविशेषणानि सूत्रपाठसिद्धानि। सोऽपि च पुत्र उन्मुक्तबालभावो विज्ञातपरिणतमात्रो यौवनं प्राप्तः शूरो वीरो विक्रान्तो विस्तीर्णबलवाहनश्चतुरन्तचक्रवर्ती राज्यपतिः राजा भविष्यति, जिनो वा त्रैलोक्यना-

यको धर्मवरचक्रवर्ती भविष्यति। ततो हे देवानुप्रिय! त्रिशलाक्षत्रियाण्या प्रधानाः शुभाः स्वप्नाः दृष्टाः। पुनः स्वप्नविचारोऽप्येवम्—हे राजेन्द्र! धातुप्रकोपात् वायौ प्रबले सति वृक्षपर्वतशृङ्गं आकाशलङ्घनं स्वप्ने पश्यति १, पित्ताधिके स्वर्णरत्नदिवाकरवह्निप्रमुखाणि स्वप्ने पश्यति २, श्लेष्माधिक्ये सति अश्वचन्द्रनक्षत्र-शुक्लपक्षनदीसरोवरसमुद्रादीनां लङ्घनं पश्यति ३, पुनः गोवृषभहस्तिप्रासादपर्वतशृङ्गवनस्पतीनां आरोहणं विष्ठालेपनं रुदितं मृतिं च यः स्वप्ने पश्यति तस्य श्रेष्ठम्। पुनः यः स्वप्ने राजानं हस्तिनं अश्वं स्वर्णं वृषभं गावं कुटुम्बं च पश्यति, तस्य कुटुम्बपरिवारो वर्धते। पुनः यः प्रासादस्थितो भुङ्क्ते, समुद्रं च स्वप्ने तरति, स दासकुले उत्पन्नोऽपि राजा भवति। पुनः यो दीपं, अन्नं (अभ्रं) फलं पद्मं कन्यां छत्रं ध्वजं च स्वप्ने पश्यति, स जयं लभते। पुनः यः स्वेप्सितं लिङ्गं प्रतिमां च स्वप्ने पश्यति, तस्य आयुःकीर्तियशोधनानां वृद्धिः भवेत्। पुनः यः कर्पासभस्माऽस्थितक्रवर्जितानि शुक्लवस्तूनि पश्यति, तस्य शोभनं भवेत्। पुनः यो गोहस्तिदेवाऽश्वनरेन्द्रवर्जितानि सर्वाणि वस्तूनि कृष्णानि स्वप्ने पश्यति, तस्य न शोभनं भवेत्। पुनः स्वप्न-मध्ये गाने रोदनं भवेत्, नर्तने बन्धनं प्राप्नुयात्, हसने शोचनं लभेत्, पठने कलहं लभते। पुनः स्वप्ने देवसाधुविप्रपितृराजवृषभाः यद्वदन्ति तत् सत्यं भवति। पुनः श्वेतसर्पेण दक्षिणभुजे स्वप्नमध्ये दष्टो भवेत्, तस्य सहस्रलाभो दशमदिने स्यात्। पुनः यो वृक्षं फलितं पुष्पितं क्षीरिणं स्वप्नमध्ये अधिरोहति, तस्य

प्रभूतधनप्राप्तिः भवेत्। पुनः यो गर्दभं उष्ट्रं महिषीं महिषं वा एकाकी स्वप्ने अधिरोहति, तस्य शीघ्रं मृत्युः स्यात्। पुनः यं पुरुषं श्वेतवस्त्रधरा श्वेतगन्धावलेपना नारी आलिङ्गयति, तस्य सर्वतोमुखी लक्ष्मीः भवति। पुनः या रक्तवस्त्रधरा कृष्णगन्धावलेपना नारी आलिङ्गयति तस्य रक्तहानिः जायते। परं या स्त्री गजादीनि चतुर्दशस्वप्नानि पश्यति, तस्याः पुत्रः चक्रवर्ती तीर्थङ्करो वा भवेत्। पुनः स्वप्ननिदानानि नव-श्रुतं १ अनुभूतं २ प्रदर्शनं ३ सजलस्थानं ४ चिन्ता ५ प्रकृतिविकार ६ देव ७ पुण्य ८ पापानि ९। आद्यानि षट् निष्फलानि, अन्त्यं च त्रयं सफलं शुभाशुभं ददात्येव। पुनः रतिहासशोककोपउत्साहजुगुप्साभयक्षुधातृषामूत्रविष्ठापीडोत्पन्नः स्वप्नो निष्फलः। पुनरपि प्रथमे प्रहरे दृष्टः स्वप्नो वर्षेण फलति १, द्वितीये प्रहरे षड्भिः मासैः फलति २, तृतीये प्रहरे दृष्टः त्रिभिः मासैः फलति ३, चतुर्थे प्रहरे एकमासेन फलति ४, रात्रिप्रान्ते घटिकाद्वये दृष्टो दशदिवसैः फलति ५, सूर्योदयवेलायां दृष्टः स्वप्नः शीघ्रमेव फलति, न विलंबो भवेत्।

अथ सिद्धार्थो राजा स्वप्नलक्षणपाठकेभ्यः पुत्रप्राप्तिफलं श्रुत्वा, किं अवादीत्?, तत्र प्राह—

तए णं सिद्धत्थे राया तेसिं सुमिणलक्खणपाढगाणं अंतिए एयमट्ठं सोच्चा निसम्म हट्ठ तुट्ठ चित्तमाणंदिते पीयमणे परमसोमणस्सिए हरिसवसविसप्पमाणहिअए करयल जाव ते सुमिणलक्खणपाडगे एवं वयासी ॥ ८१ ॥—एवमेयं देवाणुप्पिया! तहमेयं देवाणुप्पिया!,

पुत्रप्राप्तिफलश्रवणं तेभ्यः प्रत्युत्तरं च

अवितहमेयं देवाणुप्पिया ! इच्छियमेयं० पडिच्छियमेयं० इच्छियपडिच्छियमेयं देवाणुप्पिया !, सच्चे णं एसमट्ठे से जहेयं तुब्भे वयहत्तिकट्टु ते सुमिणे सम्मं पडिच्छइ, पडिच्छित्ता

व्याख्या—"अवित" ततश्च सिद्धार्थो राजा तेषां स्वप्नलक्षणपाठकानां समीपे एतं अर्थं श्रुत्वा हृष्टतुष्टः मन् तान् स्वप्नलक्षणपाठकान् एवं अवादीत्—एवमेतत्, भो देवानुप्रियाः !, ईप्सितमेतत् देवानुप्रियाः !, सत्यमेतत् देवानुप्रियाः !, यत् यूयं वदथ, यतो यूयं सुसिद्धिकाः, सुसिद्धिकानां सर्वत्र सिद्धिरेव स्यात्। गांगातैलीवत्। तथाहि—

कोऽपि विप्रो युवा विद्यार्थी प्रतिष्ठानपुरे दक्षिणदेशे गत्वा भट्टपार्श्वे सर्वविद्यास्त्रिंशद्वर्षैः पठित्वा, जातगर्वो मस्तके अङ्कुशं धरन्, 'विद्यया उदरं मा स्फुटतु' इति उदरे बद्धपट्टः, यदि वादी नष्ट्वा आकाशे याति तदा निश्रेण्यां आरुह्य अधः पातयामि, इति निश्रेणीं सेवकस्कन्धे वहन्, यदि वादी पाताले प्रविशति तदा कुद्दालैः खानयित्वा, निष्काशयामि, इति कुदालान् अपि सार्थे धरन्, यो ममाग्रे हारयति स तृणान् मुखे गृह्णातु, इति तृणपुलकं सेवककक्षायां धारयन्, वादेन दक्षिणगौर्जरमरुधरदेशवासिनो वादिनो निर्जित्य, सरस्वतीकण्ठाभरणादीन् विरुदान् वादयन्, भोजराजसभां पञ्चशतपण्डितैः विराजमानां श्रुत्वा उज्जयिन्यां (धारां) समेतः, भोजराजेन प्रवेशोत्सवादिना सन्मानदानपूर्वं उत्तारितः समीचीनस्थाने । ततः सभायां

आगतेन भोजराजसमक्षं वादकरणेन कालिदासक्रीडाचन्द्रभवभूतिमाघप्रमुखाः पञ्चशतपण्डिताः अपि जिताः। भोजराजेन विमृष्टम्–"अहो! परदेशिना भट्टाचार्येण मदीया भट्टा जिताः, मम पण्डितसभामाहात्म्यं गतम्" इति चिन्तातुरः क्रीडार्थं वने गच्छन्, एकाक्षं वहत् घाणीमध्यात् हस्तेन तैलं निष्काश्य कुम्भमध्ये तैलं क्षिपन्तं राजानं पश्यन्तं गांगानामकं तैलिकं पश्यति स्म। राज्ञा विचारितम्–'अहो! काणस्य अस्य बुद्धिविज्ञानं, युक्तं चैतत्, यतः—

"षष्टिर्वामनके दोषाः, अशीतिर्मधुपिङ्गले। शतं च टुंटमुंडेषु काणे सङ्ख्या न विद्यते ॥ १ ॥"

ततः तं आकार्य, राज्ञा पृष्टम्–'अहो! त्वं भट्टाचार्येण सह वादं करिष्यसि?।' तेन प्रोक्तम्–"ओं" इति, मम किं यास्यति? का प्रतिष्ठा अस्ति? "अटमटान्यायेन" जयोऽपि भवति कदाचित्।" ततः आदित्यवारे राज्ञा भट्टाचार्यं आकार्य, प्रोक्तम्–'भो श्रीभट्टाचार्य! मम भट्टाः त्वया जिताः, तत् सत्यम्, परं अस्माकं एतेषां भट्टानां पाठको भट्टाचार्योऽस्ति, तेन समं अद्य वादः क्रियताम्।' दक्षिणभट्टाचार्येण प्रोक्तम्–'भव्यम्।' ततो भट्टाचार्यः सिंहासने उपनिवेशितः। अन्येऽपि कालिदासक्रीडाचन्द्रप्रमुखाः पञ्चशतभट्टाः समेताः, तेषामपि आसनानि राज्ञा दत्तानि। ततो गांगातैलीभट्टाचार्यः परिधापितपञ्चाङ्गवेषः स्वर्णाभरणादिना विभूषितः स्थूलवपुः मदोन्मत्तहस्तीव आनीतः। राजा उत्थितः, सर्वा सभाऽपि उत्थिता, बहुमानसन्माना-

१ तदा गांगातैलिना विचारितम्–'यतः राजा तु कर्तुं अकर्तुं अन्यथाकर्तुं वा शक्नोति, अतः यद्यहं वादे पराजितो भूत्वा, राजाव-

दिना राज्ञा सिंहासने निवेशितः। ततो दक्षिणीयभट्टाचार्येण विमृष्टम्–'अहं कृशवपुः, अयं स्थूलवपुः, कथङ्कारं वादेन जयिष्यामि ?। ततः किं वाक्कलहेन ? तत्त्वं पृच्छामि।' ततो दक्षिणीयभट्टाचार्येण एका अङ्गुलिः दर्शिता, भोजराजभट्टेन क्रोधं कृत्वा अङ्गुलिद्वयं दर्शितम्। ततो जातचमत्कारेण दक्षिणीयभट्टाचार्येण प्रलम्यन्तपञ्चाङ्गुलीको हस्त ऊर्ध्वीकृतो दर्शितः। ततो भोजराजभट्टेन दृढा मुष्टिः दर्शिता। ततो दक्षिणीयभट्टो मस्तकात् अङ्कुशं उत्तार्य, उदरात् विद्यापट्टं छोटयित्वा, निश्रेणीं भङ्क्त्वा कुद्दालान् दण्डाद्वियोज्य तृणपूलकं प्रज्वालयित्वा, गर्वं मुक्त्वा सभासमक्षं भोजभट्टस्य पादयोर्लग्नः–'अहो! अहं न केनापि जितः, परं त्वं महापण्डितः, त्वया जितोऽहम्।' भोजराजेन पृष्टम्–'को वादः कृतः? अस्माकं श्राव्यताम्।' दक्षिणीय-

---

कृपापात्रो भवेयं तर्हि राजा मम वस्त्रप्रावरणादि अपहरेत्, उपानच्च क्षुद्रत्वात् नापहरिष्यति च इति विमृश्य, स्वपादत्राणं वस्त्रेण सम्यक् वेष्टयित्वा कक्षायां च धृत्वा राजसभायां प्रविवेश। १ दक्षिणीयभट्टाचार्यश्च तं तथाविधं गांगातैलीभट्टाचार्यं दृष्ट्वा सविस्मयं पप्रच्छ–'भो भट्टाचार्य! किं नामेदं वेष्टनं यत् भवता स्वकक्षायां अलंक्रियते ?।' गांगातैली च प्रत्यवादीत्–'भो दक्षिणीयभट्टाचार्य! इदं खलु "कण्टकचूर्णपुस्तकं" (कण्टकाः चूर्ण्यन्ते अनेनेति=उपानत् इत्यर्थः) यत् मया धार्यते सर्वत्र।' दक्षिणीयभट्टाचार्यः च अनेन प्रत्युत्तरेण (कण्टकाः=प्रतिवादिनः शत्रवो वा चूर्ण्यन्ते=पराभूताः क्रियंते अनेन इति एवंभूतो ग्रन्थः इति ज्ञात्वा) कृते तु वाग्वादे स्वपराजयो भूयात् इति ज्ञात्वा अङ्गुल्यादिसंज्ञाभिरेव एनं पराजयिष्ये इति चिंतितवान्।

भट्टाचार्यः प्राह—"भो भोज! मया एकाङ्गुलिदर्शनेन ज्ञापितम्—'एकः शिवो जगत्कर्ताऽस्ति।' भवदीयभट्टेन विशेषो ज्ञापितोऽङ्गुलिद्वयदर्शनेन—'यत् एकेन शिवेन किं? द्वितीया शक्तिः अप्यस्ति।' पुनः मया प्रलम्बाङ्गुलिहस्तदर्शनेन ज्ञापितम्—'इन्द्रियाणि पञ्च सन्ति।' त्वदीयभट्टाचार्येण मुष्टिदर्शनेन ज्ञापितम्—'पञ्चेन्द्रियाणि बद्धानि दमितानि भव्यानि।' ततो भवदीयो भट्टाचार्यो महापण्डितो महावैराग्यवान् च (तस्य) कियन्माहात्म्यं वर्ण्यते? नेदृशः पण्डितः कुत्रापि।' ततो दक्षिणीयभट्टाचार्यो मानभ्रष्टः त्वरितं स्वदेशाय चलितः। ततो भोजराजेन गांगातैली पृष्टः—'पण्डितवर! को वादः कृतः?।' ततः तेनोक्तम्—भो राजन्! मम तेन भट्टेन एकाङ्गुलिदर्शनेन ज्ञापितम्—'त्वं काणोऽसि।' मया अङ्गुलिद्वयदर्शनेन ज्ञापितम्—'अहं त्वां द्वयोश्चक्षुषोः काणं करिष्यामि।' ततो दक्षिणीयभट्टेन प्रलम्बहस्तदर्शनेन ज्ञापितम्—'अहं त्वां चपेटया मारयिष्यामि।' ततो मया रोषं कृत्वा, मुष्टिदर्शनेन ज्ञापितम्—'अहं त्वां मुष्ट्या घुम्माघुम्मिकरणेन मारयिष्यामि।' तदा राजादिका सर्वाऽपि सभा सहर्षं हसति स्म—'अहो अस्य दिनानि समीचीनानि!, सुसिद्धिकोऽयम्।' स च राज्ञा बहुसन्मानादिना सन्तोषितः स्वस्थानं गतः। सिद्धार्थो राजा वदति स्म—'यूयमपि सुसिद्धिकाः, तेन भवदुक्तं मम सत्यं भवतु' इति॥

अथ सिद्धार्थो राजा स्वप्नलक्षणपाठकानां किं करोति स्म?, तत्राह—

ते सुमिणलक्खणपाढए विउलेणं असणेणं पुप्फवत्थगंधमल्लालंकारेणं सक्कारेइ सम्माणेइ,

सक्कारित्ता सम्माणित्ता विउलं जीवियारिहं पीइदाणं दलयइ, दलइत्ता पडिविसज्जेइ ॥ ८२ ॥ तए णं से सिद्धत्थे खत्तिए सीहासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता जेणेव तिसला खत्तियाणी जवणिअंतरिया तेणेव उवागच्छइ, उवागच्छित्ता तिसलं खत्तियाणिं एवं वयासी ॥ ८३ ॥— एवं खलु देवाणुप्पिया ! सुमिणसत्थंसि बायालीसं सुमिणा तीसं महासुमिणा जाव एगं महासुमिणं पासित्ता णं पडिबुज्झंति ॥ ८४ ॥ इमे अ णं तुमे देवाणुप्पिए ! चउद्दस महासुमिणा दिट्ठा, तं उराला णं तुमे जाव जिणे वा तेलुक्कनायगे धम्मवरचाउरंतचक्कवट्टी ॥ ८५ ॥ तए णं सा तिसला खत्तिआणी एअमट्ठं सुच्चा निसम्म हट्ठतुट्ठ जाव हयहिअया करयल जाव ते सुमिणे सम्मं पडिच्छइ ॥ ८६ ॥ पडिच्छित्ता सिद्धत्थेणं रण्णा अब्भणुन्नाया समाणी नाणामणिरयणभत्तिचित्ताओ भद्दासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता अतुरिअं अचवलं असंभंताए अविलंबिआए रायहंससरिसीए गईए जेणेव सए भवणे तेणेव उवागच्छइ, उवागच्छित्ता सयं भवणं अणुपविट्ठा ॥ ८७ ॥

व्याख्या—"ते सुमिणलक्खण त्ति"—अथ सिद्धार्थो राजा स्वप्नलक्षणपाठकान् विपुलेन अशनेन पुष्पैः=अग्रथितैः, वस्त्रैः गन्धैर्वासैः, माल्यैः=ग्रथितैः पुष्पैः, अलङ्कारैः=मुकुटादिभिः कृतसमाहारद्वन्द्वैः सत्कारयति, प्रवरवस्त्रादिना सन्मानयति । तथाविधवचनादिप्रतिपत्त्या सत्कारयित्वा=सन्मानयित्वा, विपुलं=विस्तीर्णं जीविकोचितं—आजन्मनिर्वाहयोग्यं वा प्रीतिदानं ददाति, दत्त्वा च प्रतिविसर्जयति । तेऽपि स्वप्नलक्षणपाठकाः प्राप्तसुवर्णरत्नमणिमाणिक्यरजतादिबहुधनाः स्वगृहे गताः, स्वभार्याभिरपि नोपलक्षिताः । ततः स्वप्नलक्षणपाठकविसर्जनानन्तरं सिद्धार्थो राजा सिंहासनात् उत्थाय यत्रैव त्रिशला क्षत्रियाणी तत्रागत्य, त्रिशलां क्षत्रियाणीं एवं अवादीत्—'हे देवानुप्रिये ! स्वप्नलक्षणपाठकैः इत्थं प्रोक्तम्—'स्वप्नशास्त्रे द्विचत्वारिंशत् स्वप्नाः, तत्र त्रिंशन्महास्वप्नाः यावत् मण्डलीकमातरो मण्डलीके गर्भे गते एकं स्वप्नं पश्यंति, एतत्पर्यन्तः सर्वोऽपि स्वप्नविचारः कथितः । ततः त्वयापि चतुर्दश स्वप्ना दृष्टाः, ततः तव पुत्रलाभो भविष्यति चक्रवर्ती वा त्रैलोक्यनायको वा । ततः त्रिशला एनमर्थं श्रुत्वा हृष्टा तुष्टा सिद्धार्थेन राज्ञा अभ्यनुज्ञाता सती सिंहासनात् उत्थाय, अत्वरितादिकया राजहंससदृशया गत्या यत्रैव स्वकीयं भवनं तत्रागत्य स्वकीयं भवनं अनुप्रविष्टा ।

अथ यदा भगवान् सिद्धार्थराजभवने अवतीर्णः ततःप्रभृति तिर्यग्जृंभकदेवैः किं कृतम् ?, तत्राह—

**जप्पभिइं च णं समणे भगवं महावीरे तंसि नायकुलंसि साहरिए तप्पभिइं च णं बहवे**

वेसमणकुंडधारिणो तिरियजंभगा देवा सक्कवयणेणं से जाइं इमाइं पुरापोराणाइं महानिहाणाइं भवंति, तं जहा—पहीणसामिआइं पहीणसेउआइं पहीणगुत्तागाराइं, उच्छिन्नसामिआइं उच्छिन्नसेउआइं उच्छिन्नगुत्तागाराइं, गामागरनगरखेडकब्बडमडंबदोणमुहपट्टणासमसंवाहसंनिवेसेसु सिंघाडएसु वा तिएसु वा चउक्केसु वा चच्चरेसु वा चउम्मुहेसु वा महापहेसु वा गामट्ठाणेसु वा नगरट्ठाणेसु वा गामणिद्धमणेसु वा नगरनिद्धमणेसु वा आवणेसु वा देवकुलेसु वा सभासु वा पवासु वा आरामेसु वा उज्जाणेसु वा वणेसु वा वणसंडेसु वा सुसाणसुन्नागारगिरिकंदरसंतिसेलोवट्ठाणभवणगिहेसु वा संनिक्खित्ताइं चिट्ठंति ताइं सिद्धत्थरायभवणंसि साहरंति ॥ ८८ ॥

व्याख्या—'जप्पभिइं' यत्प्रभृति श्रमणो भगवान् महावीरो राजकुलं संहृतः तत्प्रभृति बहवः तिर्यग्जृम्भकाः=तिर्यग्लोकवासिनो जृम्भका देवाः शक्रवचनेन—शक्रेण वैश्रमण आदिष्टः, तेन—धनदेन च ते जृम्भकाः आदिष्टाः इत्यर्थः । किंविशिष्टाः तिर्यग्जृम्भकाः ? । "वेसमणकुंडधारिणो" वैश्रमणस्य कुण्डं—आयत्तां धारयन्ति ये ते एवंविधानि महानिधानानि, एतेषु स्थानेषु यानि तिष्ठन्ति तानि सिद्धार्थराजगृहे संह-

रन्ति=प्रवेशयन्ति, वृष्टिं तेषां कुर्वन्ति इत्यर्थः। "से" इति-अथ-शब्दार्थे। पुनः किंविशिष्टानि महानिधानानि ?। यानि पुरा प्रतिष्ठितत्वेन पुराणानि=चिरन्तनानि पुरापुराणानि। किंविशिष्टानि महानिधानानि ?। "पहीणसामिआइं" प्रहीणाः=स्वल्पीभूताः स्वामिनो भूमिगतसहस्रादिसङ्ख्या द्रव्यसञ्चयका येषां तानि प्रहीणस्वामिकानि। पुनः किंविशिष्टानि महानिधानानि ? । "पहीणसेउआइं" प्रहीणाः=अल्पीभूताः सेक्तारः=सेवकाः धनक्षेसारो येषां तानि प्रहीणसेक्तृकानि प्रहीणसेतुकानि वा, सेतुः=मार्गः। पुनः किंविशिष्टानि महानिधानानि ?। "पहीणगुत्तागाराइं" प्रहीणं=विरलीभूतं मानुषं गोत्रागारं येषां तानि, तत्र गोत्रं धनस्वामिनः अन्वयः, अगारं=गृहम्, एवं उच्छिन्नो निःसत्ताकीभूतः स्वामी येषां तानि। एवं उच्छिन्नगोत्रागाराण्यपि, व्याख्या प्राग्वत्। अथ केषु केषु स्थानेषु तानि ?, तद्दर्शयति-"संघाडएत्ति" इत्यादि तत्र शृङ्गाटकं फलं तदाकारं त्रिकोणं स्थानम् १ त्रिकं=यत्र रथ्यात्रयं मिलति २, चतुष्कं=यत्र रथ्याचतुष्कं मिलति ३, चत्वरं=बहुरथ्यापातस्थानम् ४, चतुर्मुखं=चतुर्द्वारं देवकुलादि, ५ महापथो=राजमार्गः ६, ग्रामस्थानानि=ग्रामपुरातननिवासभूमयः ७, नगरस्थानानि=नगरस्य उद्वसिता भूमयः ८, पुनः ग्रामनिर्धमनानि=ग्रामजलनिर्गमाः 'खालं' इति प्रसिद्धाः ९, एवं नगरस्य निर्द्धमनानि १०, पुनः आपणानि=हट्टाः ११, देवकुलानि=यक्षाद्यायतनानि १२, सभाः=जनोपवेशनस्थानानि। अत्र "एवासु वा" इति पदं बहुषु आदर्शेषु दृश्यते, परं अतिरिक्तं सम्भाव्यते, वृत्त्यादौ अव्याख्यातत्वात्। आरामाः=कदल्यादिप्रच्छन्नानि ये स्त्रीयुतपुंसां क्रीडास्थानानि,।

उद्यानानि=पुष्पफलाद्युपेतवृक्षशोभितानि बहुजनस्य उन्नतमानस्य भोजनार्थं यानं येषु इति उद्यानानि, । वनानि=एकजातीयवृक्षाणि, वनखण्डानि=अनेकजात्युत्तमवृक्षस्थानानि, । श्मशानं १, शून्यागारं २, गिरिकन्दरा च, ३। एते त्रयः प्रसिद्धाः, शान्तिकर्मस्थानानि । क्वचित् "सन्धि" इति पाठः । तत्र सन्धिगृहं=भित्त्योः अन्तराले प्रच्छन्नस्थानम्, शैलगृहं=पर्वतं उत्कीर्य यत् कृतं, उपस्थानगृहं=आस्थानगृहं=आस्थानमण्डपः, ततः श्मशानादीनां द्वन्द्वः, क्वापि "भवणगिहेसु वा" इत्यादि दृश्यते, तत्र भवनगृहाः=कुटुम्बवसनस्थानानि । एतेषु स्थानेषु "संनिक्खित्ताइं" सम्यक् निक्षिप्तानि, क्वापि "संनिक्खित्ताइं संनिहिआइं गुत्ताइं चिट्ठंति" इति पाठः, तत्र संनिहितानि सम्यक् निधानीकृतानि, गुप्तानि–पिधानानि अनेकोपायैः प्रवेशयन्ति=निक्षेपयन्ति । क्वचित् "संघाडएसु वा" इत्यस्मात् पूर्वं "गामागरनगरखेडकब्बडमडंबदोणमुहपट्टणासमसंवाहसंनिवेसेसु वा" इति दृश्यते । तत्र करादिगम्याः ग्रामाः, आकराः=लोहाद्युत्पत्तिभूमयः, न एतेषु करोऽस्तीति नगराणि, खेटानि धूलीप्राकारोपेतानि, कर्वटानि=कुनगराणि, मडम्बानि=सर्वतोऽर्धयोजनात् परतोऽवस्थितग्रामाणि, द्रोणमुखानि=यत्र जलस्थलपथौ स्तः, पत्तनानि=जलस्थलपथयोः अन्यतरेण पर्याहारप्रवेशः, आश्रमाः=तीर्थस्थानानि मुनिस्थानानि वा, संवाहाः=समभूमौ कृषिकर्म कृत्वा येषु दुर्गभूमिषु धान्यानि कृषीवलाः संवहन्ति रक्षार्थं, संनिवेशाः=सार्थकटकाद्याः, ततो द्वन्द्वः तेषु । क्वापि "संनिवेसघोसेसु" इति पाठः, तत्र घोषाः=गोकुलानि ॥

तथा भगवति तत्र अवतीर्णे मातापितरौ कीदृशं मनोरथं अकार्ष्टां?, तत्राह—

जं रयणिं च णं समणे भगवं महावीरे नायकुलंसि साहरिए तं रयणिं च णं नायकुलं हिरण्णेणं वड्ढित्था सुवण्णेणं वड्ढित्था धणेणं धन्नेणं रज्जेणं रट्ठेणं बलेणं वाहणेणं कोसेणं कोट्ठागारेणं पुरेणं अंतेउरेणं जणवएणं जसवाएणं वड्ढित्था, विपुलधणकणगरयणमणिमोत्तियसंखसिलप्पवालरत्तरयणमाइएणं संतसारसावइज्जेणं पीइसक्कारसमुदएणं अईव २ अभिवड्ढित्था, तए णं समणस्स भगवओ महावीरस्स अम्मापिऊणं अयमेयारूवे अब्भत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था ॥ ८९ ॥ जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि गब्भत्ताए वक्कंते तप्पभिइं च णं अम्हे हिरण्णेणं वड्ढामो सुवण्णेणं धणेणं धन्नेणं रज्जेणं रट्ठेणं बलेणं वाहणेणं कोसेणं कुट्ठागारेणं पुरेणं अंतेउरेणं जणवएणं जसवाएणं वड्ढामो, विपुलधणकणगरयणमणिमुत्तियसंखसिलप्पवालरत्तरयणमाइएणं संतसारसावइज्जेणं

पीइसक्कारेणं अईव २ अभिवड्ढामो, तं जया णं अम्हं एस दारए जाए भविस्सइ तया णं अम्हे एयस्स दारगस्स एयाणुरूवं गुण्णं गुणनिप्फन्नं नामधिज्जं करिस्सामो—वद्धमाणुत्ति ॥९०॥

व्याख्या—"जं रयणिं" त्ति ततश्च श्रमणस्य भगवतो महावीरस्य मातापित्रोः अयं एतद्रूपोऽभ्यर्थितः चिन्तितः प्रार्थितो मनोगतः सङ्कल्पः समुदपद्यत, यत्प्रभृति अस्माकं एष दारकः कुक्षौ गर्भत्वेन व्युत्क्रान्तः, तत्प्रभृति=तदादितः आवां हिरण्यादिभिः वर्धयावः, तत्र हिरण्यं=रूप्यं, अघटितस्वर्णं इत्येके, स्वर्णं=घटितं धनं, गणिम-धरिम-मेय-पारिच्छेद्य-भेदात् चतुर्धा-तत्र-"गणिमं जाइफलपुप्फफलाइं, धरिमं तु कुंकुम-गुडाई २। मिज्जं चोप्पडलोणाई ३, परिच्छिज्जं रयणवत्थाइं" ४ ॥ १ ॥ धान्यं चतुर्विंशतिधा, तथाहि— धन्नाइं चउवीसं जव १ गोधूम २ सालि ३ वीहि ४ सट्ठिआ ५ कोद्दव ६। अणुआ ७ कंगू ८, रालय ९ तिल १० मुग्ग ११ मासा य १२ ॥ १ ॥ हरिमंथ १३ अयसि १४ भि[ति]उडा १५ निप्पाव १६ सिलिंद १७ रायमासा य १८। उच्छू १९ मसूर २० तुवरी २१, कुलत्थ २२ तह धन्न य २३ कलाया २४ ॥ २ ॥ इति। राज्यं सप्ताङ्गम्-स्वामी १ अमात्य २ देश ३ दुर्ग ४ संभार ५ सैन्य ६ मित्र ७ सप्ताङ्गरूपम् ॥ राष्ट्रं=देशः, बलं=चतुरङ्गम्, वाहनं=वेसरादि, कोशो=भाण्डागारं, कोष्ठागारं=धान्यगृहं, पुरं=अन्तःपुरं च, प्रतीतं, जनपदो=लोकः। क्वचिच्च "जसवाएणं त्ति" पाठः, तत्र यशोवादः=साधुवादः तेन वृद्धिं गच्छावः। पुनः

विपुलधनं=गवादिकं, कनकं=घटिताऽघटितरूपं द्विधाऽपि, रत्नानि-कर्केतनादीनि, मणयः=चन्द्रकान्ताद्याः, मौक्तिकानि=शुक्तिकाऽऽकाशादिप्रभवानि, शङ्खाः=दक्षिणावर्ताः, शिलाः=राजपट्टादिकाः, प्रवालानि=विद्रुमाः, रत्नानि=पद्मरागाः आदिशब्दात् रत्नकंबलादिपरिग्रहः । ततः, एतेन कोऽर्थः ?। सत्=विद्यमानं सारं स्वापतेयं प्रधानं द्रव्यम् तेन, प्रीतिः=मानसिकी स्वेच्छा, सत्कारः=वस्त्रादिभिः जनकृतः, ततो द्वन्द्वः, एतैः अतीव वर्धयावः=वृद्धिं गच्छावः। ततो यदा आवयोः एष दारकः पुत्रो जातो भविष्यति, तदा आवां एतस्य पुत्रस्य "वर्धमानः" इति नामधेयं=प्रधानं नामैव नामधेयम् करिष्यावः। किंविशिष्टं नामधेयम् ?। गुण्यं, गुणेभ्य आगतं गौणम्, गौणशब्दः अप्रधानेऽप्यस्ति इत्याह-"गुणनिप्फन्नं।"

अथ भगवति मातुर्भक्त्या गर्भे निश्चले सति किं जातं ?, तत्राह—

तए णं समणे भगवं महावीरे माउअणुकंपणट्ठाए निच्चले निप्फंदे निरेयणे अल्लीणपलीण-गुत्ते आवि होत्था ॥ ९१ ॥ तए णं तीसे तिसलाए खत्तियाणीए अयमेयारूवे जाव संकप्पे समुप्पज्जित्था—हडे मे से गब्भे, मडे मे से गब्भे, चुए मे से गब्भे, गलिए मे से गब्भे,

१ आदिशब्दात् वस्त्रकंबलादिपरिग्रहः, ततः तेन । एतेन किमुक्तं भवति ?, इत्याह—सत् विद्यमानं, न पुनः इन्द्रजालादाविव अवास्तवम् इति सन्देहवि० टीकायाम् । (७७ पत्रे)

एस मे गब्भे पुव्विं एयइ, इयाणिं नो एयइत्तिकट्टु ओहयमणसंकप्पा चिंतासोगसागरसंपविट्ठा करयलपल्हत्थमुही अट्टज्झाणोवगया भूमीगयदिट्ठिया झियायइ, तंपि य सिद्धत्थरायवरभवणं उवरयमुइंगतंतीतलतालनाडइज्जजणमणुज्जं दीणविमणं विहरइ ॥ ९२ ॥

व्याख्या—"तएणं" त्ति ततः श्रमणो भगवान् महावीरो मातुरनुकम्पार्थं कृपया मातरि वा भक्तिः, तदर्थं मयि परिस्पन्दमाने 'मा मातुः कष्टं भूयात्' इति मातरि वा भक्तिः अन्येषां विधेयतया दर्शिता भवत्विति । निश्चलः चलनाभावात् । निस्पन्दो जातः किंचिच्चलनस्याप्यभावात् । अत एव निरेजनः=निष्कम्पः, अत एव गुप्तः, परिस्पन्दनाभावात् । ततो विशेषणकर्मधारयः । वाऽपीति समुच्चये । ततः त्रिशलाक्षत्रियाण्या अयं एतद्रूपो मनसि सङ्कल्पः समुदपद्यत । तद्यथा—मे=मम स गर्भो हृतः केनापि देवादिना मृतो वा ? कालधर्मं प्राप्तः ?, च्युतः सजीवपुद्गलपिण्डतालक्षणात् पर्यायात् परिभ्रष्टो ?, गलितो=द्रवतामापद्य क्षरितः ? । चतुर्ष्वपि पदेषु काका विकल्पप्रतीतिः । एष मे गर्भः पूर्वं एजति=कंपते । इदानीं नो एजति, इति कृत्वा त्रिशला चिन्ताशोकसागरं प्रविष्टा । चिन्तया=गर्भहरणादिध्यानेन यः शोकः स एव सागरः तत्र संप्रविष्टा । किंविशिष्टा त्रिशला ? । "ओहयमणसंकप्पा" उपहतः कालुष्यकवलितो मनःसङ्कल्पो यस्याः सा । पुनः किंविशिष्टा त्रिशला ? । "करयलेत्ति" करतले पर्यस्तं=निवेशितं मुखं यया सा । पुनः किंविशिष्टा

त्रिशला ?। आर्तध्यानेन उपगता=व्याप्ता। पुनः किंविशिष्टा त्रिशला ?। भूमौ गता दृष्टिः यस्याः सा। भूमिमुखमेव किंकर्तव्यजडतया वीक्ष्यमाणा ध्यायति। पुनः तदपि सिद्धार्थराजवरभवनं कीदृशं जातम् ?। "उवरयेत्ति" उपरतं=निवृत्तं मृदङ्गतन्त्रीतलतालैः प्राग्व्याख्यातैः, नाटकीयैः=नाटकहितैः जनैः=पात्रैः "मणुज्जंति" भावप्रधानत्वान्निर्देशस्य मनोज्ञत्वं=चारुता यस्मात्। अथवा उपरतं मृदङ्गतन्त्रीतलतालनाटकीयजनं "अणुज्झंति" अनूर्जं अनोजस्कं वा, अत एव दीनं विमनस्कं विहरति=आस्ते। एवंविधे व्यतिकरे जाते सति सा त्रिशला कीदृशं दुःखं करोति स्म ?, तदाह–

'अहो! यदि मम गर्भो गतः, तदा नूनं अहं अभाग्या निःपुण्या!। यद्वा अभाग्यस्य गृहे चिन्तामणिरत्नं कथं तिष्ठति ?,। अथवा दरिद्रस्य गृहे निधानं कथं प्रकटीभवति ?,। अथवा कल्पवृक्षो मरुस्थले कथं चिरं अवतरति ?,। 'नहि कदापि निःपुण्यानां तृषितानां अमृतपानेच्छा पूर्णा भवति।' पुनः प्राह—रे दैव! धिक् त्वाम्, रे निर्घृण!, रे निर्दय!, रे निःकरुण!, रे पापिष्ठ!, रे दुष्ट!, रे निःकृष्ट!, रे अशिष्ट!, रे निष्ठुर!, रे पापकर्मकारक!, रे निरपराधजनमारक!, रे मूर्तिमत्पातक!, रे विश्वस्तजनघातक!, रे अकार्यसज्ज!, रे निर्लज्ज!, किं निष्कारणं मम वैरी जातः ?। तव मया किं अपराद्धम् ?। प्रकटीभूय निवेदय। त्वया मम मनोरथकल्पवृक्षः समूलं उन्मूलितः!। त्वयाऽहं दुःखानां खानिः कृता!। त्वया मम लोचने दत्त्वा गृहीते, त्वया मम निधानं हस्ते दत्त्वा उद्दाल्य गृहीतं!। त्वया अहं मेरोः शिखरं आरोप्य भूमौ पातिता!,। त्वया

मम मुखागतः कवलो गमितः !, । त्वया मम निष्पन्नं शालिक्षेत्रं दुर्वातेन दूषितम् !। त्वया मम क्रयाणकभृतं परद्वीपादागतं प्रवहणं तीरे भग्नम् !। त्वया(मया)निष्पादिता रसकूपी भग्ना !। किंवा वृथा दैवस्य उपालम्भदानेन?। अथवा मया कानिचित्पूर्वभवे महाकठोरपापकर्माणि कृतानि तानि उदये आगतानि!। तद्यथा–
"पसु–पक्खि–माणुसाणं बाले जो वि हु विओअए पावो। सो अणवच्चो जायइ अह जायइ तो विवज्जिज्जा ॥१॥"

किंवा मया पङ्क्ताः त्यक्ताः त्याजिता वा?,। किंवा बालवत्सानां मात्रा सह वियोगः कृतः, कारितो वा?,। किंवा मया बालवत्सानां दुग्धान्तरायः कृतः, कारितो वा ?, । किंवा मया बालसहितानि उन्दुरबिलानि खनितानि ?, धूल्यादिना पूरितानि वा ?,। किंवा मया नकुलकोलादिबालसहितेषु बिलेषु उष्णनीराणि क्षिप्तानि ?, अथवा किं मया कीटिकादिनगराणि पानीयेन प्लावितानि ?,। किंवा मया शुकसारिकामयूरहंसचटकाकुर्कुटादिपक्षिणां बालैः सह वियोगो दापितो दत्तो वा ?,। किंवा मया चटकादीनां माला अंडकशिशुसहिताः पातिताः ?,। किंवा मया कुबुद्ध्या धर्मं ज्ञात्वा काकानां अण्डानि स्फोटितानि ?,। किंवा मया बालहत्या कापि कृता कारिता वा ?,। किंवा मया सपत्नीनां पुत्राद्युपरि दुष्टचिन्तनं कृतम् ?,। किंवा मया गर्भस्य स्तम्भनशातनपातनानि समाचरितानि ?, तन्मन्त्रा वा प्रयुक्ताः ?, किंवा तेषां औषधानि कथितानि ?, किंवा कस्या अपि शिशोर्विषये अङ्गुलीर्भङ्क्त्वा शापः प्रादायि ?,। किंवा मया शिशवः त्यक्ताः त्याजिता वा अन्यदीयाः स्वकीया वा ?,। किंवा केनापि विराधितेन ऋषिणा मम शापो दत्तः ?,। किंवा कस्या अपि मया रत्नानि

चोरितानि ?, । किंवा मया शीलखण्डनादि महापापं कृतम्, कारितं वा?, । अथवा व्रतानि गृहीत्वा चिरकालं पालयित्वा भग्नानि ?, । किंवा कस्यापि ग्रामो ज्वालितः ?, । किंवा कोऽपि महान् वृक्षः छिन्नः, छेदितो वा ?, किंवा महत्तरं सरः शोषितं ?, । किंवा नानाजीवव्याप्ते वने दावानलो दत्तो दापितो वा ?, । किंवा देवद्रव्यं जग्धं ?, प्रासादो वा पातितः ?, । अथवा दानदाने अन्तरायः कृतः कारितो वा ?, । अथवा कस्यापि विषं दत्तं, दापितं वा ?, । अथवा वृक्षफलानि विदारितानि ?, । किंच अपक्कफलानि त्रोटितानि ?, । किंवा अनन्तकायाऽभक्ष्यादीनि भक्षितानि ? । किं बहुकथनेन ?, किंचित् पापं (मया) कृतं, येन मम ईदृशं दुःखं पतितम् । अथ यदीदृशः चतुर्दशस्वप्नसूचितो गर्भो गतः, तदा किं सांसारिकसुखेन ? किं राज्येन ?, किं जीवितेन त्रैलोक्यपूजितेन ?, ईदृशेन पुत्ररत्नेन विना अलं मे विलापकरणेन ! । अथ किं करोमि ?, क्व गच्छामि ?, कस्याग्रे वदामि ? । अथाऽहं निरर्थकं नो जीवामि' एवं विलापान् कुर्वती यूथभ्रष्टामृगीवत् इतस्ततः परिभ्रमति । एतस्मिन्नवसरे ईदृशीं त्रिशलां स्वामिनीं दृष्ट्वा चतुरसखीपरिवारेण पृष्टा–'हे स्वामिनि ! कथं ईदृशं ?, किं दुःखस्य कारणं तव ? ।' ततः त्रिशला अश्रुनिःश्वासान् निक्षिपन्ती प्राह–'हे सख्यः ! किमहं वदामि निर्भाग्या ?, मम जीवितं गतम् ! । ततः सख्यो वदन्ति स्म–'हे स्वामिनि ! शान्तम् अमङ्गलम् । तव गर्भस्य कुशलं वर्तते ! ।' त्रिशला प्राह–हे सख्यः ! यदि गर्भस्य कुशलं स्यात् तदा मम किं दुःखम् ? । हा ! अहं दैवेन सर्वस्वाऽपहरणेन हतास्मि ! ।' इत्युक्त्वा भूमौ मूर्च्छां प्राप्य पतिता । तदा सखीभिः शीतलपानीयच्छोटनेन व्यजनवातेन च सचेतना

गर्भनिश्चलत्वे त्रिशलाशोकः

कृता। पुनः पृष्टा सती गद्गदस्वरेण गर्भस्वरूपं कथयति स्म। पुनः मूर्च्छां प्राप। पुनः सचेतना कृता, समुत्थाय विलपति स्म। ततः सखीजनपरिवारोऽपि समस्तः तथैव दुःखभाग् जातः प्राह च-'रे दैव! त्वया किं कृतम् अस्मदीयस्वामिन्या गर्भोद्दालनेन?, हा हा! हे कुलदेव्यो यूयं कुत्र गताः? यत् उदासीनाः तिष्ठत।' ततो वृद्धस्त्रियः उपयाचितमन्त्रतन्त्रयन्त्रशान्तिकपौष्टिकादीनि कारयन्ति। निमित्तज्ञानं पृच्छन्ति, इष्टदेवादीन् स्मरन्ति। ततो राजापि एतत् स्वरूपं श्रुत्वा दुःखपीडितो नाटकादीनि निषेधयति, वचनान्यपि गाढशब्देन निराकरोति। मन्त्रिणोऽपि किंकर्तव्यतामूढा जाताः। राजभवनमपि समस्तं शून्यमिव शोकस्य राजधानीवत् श्रिया त्यक्तमिव, दुःखस्य भाण्डागारमिव, उद्वेगस्य आकर इव, सर्वदुःखानां सङ्कर इव जातम्। भोजनाच्छादनसम्भाषणशयनादिव्यवहारोऽपि विस्मृतप्रायो जातः। पुनः तत्र निःश्वासैरेव उत्तरदानं जातम्, अश्रुपातैरेव मुखधावनं जातम्, शून्यचित्तैरेव उपवेशनादिका शरीरस्य स्थितिः जाता॥

तए णं से समणे भगवं महावीरे माउए अयमेयारूवं अब्भत्थिअं पत्थिअं मणोगयं संकप्पं समुप्पन्नं वियाणित्ता एगदेसेणं एयइ, तए णं सा तिसला खत्तियाणी हट्ठतुट्ठा जाव हयहियया एवं वयासी ॥ ९३ ॥ नो खलु मे गब्भे हडे जाव नो गलिए, मे गब्भे पुव्विं नो एयइ, इयाणिं एयइत्तिकट्टु हट्ठ जाव एवं विहरइ,

व्याख्या–"तए णं" इति,–एतादृशं दुःखमयं व्यतिकरं ज्ञात्वा, श्रीभगवता अवधिज्ञानेन अवधार्य विचारितम्–'अहो! किं क्रियते ?, अहहा! मोहस्य गतिः ईदृशी! अस्माभिः गुणः कृतः, स दुषेर्धातोः इव दोषनिष्पत्तये जातः। मातुः प्रमोदाय कृतोऽपि गुणः दुःखाय जातः, नालिकेरपानीये न्यस्तकर्पूरवत्। इति विचिन्त्य, भगवता त्रिभुवनस्वामिना किंचित् स्पन्दितम्। ततः त्रिशला गर्भस्य कुशलं ज्ञात्वा हर्षं प्राप्य वदति स्म–'हे सख्यः! मम गर्भस्य कुशलं वर्तते कुशलं वर्तते!। हा धिग्! मया अज्ञानेन विरहविलापादिना दुःखं कृतम्। सन्ति मम भाग्यानि प्रभूतानि, अहं धन्या, अहं कृतपुण्या, अहं त्रिभुवनमान्या, श्लाघ्यं मे जीवितं, कृतार्थं मे जन्म जीवितव्यं, सुप्रसन्ना मे [जिनपादाः] श्रीजैनपादाः! मम श्रीगोत्रदेवीनां प्रसादा जाताः!। मम आजन्माराधितः श्रीजिनधर्मः फलितः!। मम प्राचीनं समीचीनं कर्म प्रकटीभूतं, प्राप्तं मया अद्य मुक्तेरपि राज्यम्!। उल्लसितो मम रोमाञ्चकञ्चुकः,। विकसिते नयने, प्रफुल्लं वदनारविन्दम्, विहसिते कपोलफलके, प्रवृत्ताश्च वृद्धस्त्रीणां "जय जीव" इत्याशिषः!,। प्रवर्तितानि कुलवधूभिः धवलानि, संस्थापितानि सर्वत्र अष्टौ अष्टौ मङ्गलानि, प्रदत्ता भित्त्यादौ कुङ्कुमच्छटाः, उत्तम्भिताः पताकापटाः, संन्यस्ता मौक्तिकस्वस्तिकाः, निर्वर्तिताः प्रवालनन्द्यावर्ताः, विकीर्णः पञ्चवर्णः पुष्पप्रकरः,। वासितः सर्वत्रापि कर्पूरागुरुचन्दनादिपरिमलनिकरः,। निबद्धानि तोरणानि, परिधृतानि आभरणानि, प्रणीतानि गीतानि, नाटितानि दिव्यनाटकानि, सूत्रितानि वादनाय वादित्राणि, प्रगुणितानि सधवस्त्रीभिः अक्षतपात्राणि, पठन्ति बन्दिच्छात्राणि, नृत्यन्ति नानापात्राणि,

पूर्यन्ते प्रमोदेन गात्राणि । राजभवनं च चतुर्भिरपि वर्णैः व्याप्तम्, वर्धापनाय आगताभिः स्वर्णकोटीभिः पूर्णम्। पुनः प्रमोदाकुलचेटीभिः आकीर्णम्, । दिव्यरथैः संनियद्धपथं, तुरङ्गमैः दुर्गमम्, पत्तिनिवेशैः दुष्प्रवेशम्, । मूर्तिमत्प्रमोदमयमिव, संप्राप्तसर्वाभ्युदयमिव, करकलितसकलसिद्धिकमिव, समुद्दीपितचतुर्वृद्धिकमिव, लब्धत्रिभुवनमहाराज्यमिव, सर्वसंप्राप्तिप्राज्यमिव । पुनरपि विधीयन्ते स्म हट्टशोभाः, । प्रकट्यन्ते स्म मञ्चोन्मञ्चेषु नाट्यानि, वाद्यन्ते स्म तूर्यनिर्घोषाः, लोकानां कोलाहलेन कर्णपतितमपि न श्रूयते, पुनरपि प्रयोजिताः श्रीजिनप्रासादेषु पूजाः, बन्दिमोचनानि कृतानि, सर्वत्र नगरमध्ये अमारिपटहो घोषितः, सुसाधूनां पर्युपास्तिः विस्तारिता, प्रारब्धानि साधर्मिकवात्सल्यानि, व्यक्तीकृता श्रीसङ्घभक्तियुक्तिः, सत्रागारेषु महादानानि सूत्रितानि, याचकानां मनोरथदानानि दत्तानि, महादानेन राजपुरुषाः कल्पवृक्षा इव जाताः, । राजा परमैश्वर्येण इन्द्र इव जातः, लोकश्च सर्वोऽपि प्रभूतदिव्याभरणादिविभूत्या सुरलोक इव दृश्यते, गृहे गृहे च महान् महोत्सवः संपन्नः, सर्वेषां च परमानन्दः प्रकटीबभूव ।

अथ भगवान् गर्भगतः कीदृशं अभिग्रहं गृह्णाति?, तत्राह—

तए णं समणे भगवं महावीरे गब्भत्थे चेव इमेयारूवं अभिग्गहं अभिगिण्हइ—नो खलु मे कप्पइ अम्मापिऊहिं जीवंतेहिं मुंडे भविता अगाराओ अणगारिअं पव्वइत्तए ॥ ९४ ॥

व्याख्या—"तए णं समणे" ततश्च श्रमणो भगवान् महावीरः "गब्भत्थे चेव त्ति" पक्षाधिकमासषट्के व्यति-

क्रान्ते इत्यर्थः। इमं एतद्रूपं अभिग्रहं अभिगृह्णाति-"नो" नैव खलु-निश्चितं मम कल्पते। मातापितृषु जीवत्सु सत्सु मुण्डो भूत्वा, अगारात् अनगारतां प्रव्रजितुं" इति।

अथ त्रिशला क्षत्रियाणी केन प्रकारेण कीदृशी सती गर्भं वहति?, तत्राह—

तए णं सा तिसला खत्तियाणी ण्हाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता सव्वालंकारविभूसिया तं गब्भं नाइसीएहिं नाइउण्हेहिं नाइतित्तेहिं नाइकडुएहिं नाइकसाइएहिं नाइअंबिलेहिं नाइमहुरेहिं नाइनिद्धेहिं नाइलुक्खेहिं नाइउल्लेहिं नाइसुक्केहिं सव्वत्तुगभयमाणसुहेहिं भोयणच्छायणगंधमल्लेहिं ववगयरोगसोगमोहभयपरिस्समा जं तस्स गब्भस्स हिअं मियं पत्थं गब्भपोसणं तं देसे अ काले अ आहारमाहारेमाणी विवित्तमउएहिं सयणासणेहिं पइरिक्कसुहाए मणोऽणुकूलाए विहारभूमीए पसत्थदोहला संपुण्णदोहला संमाणियदोहला अविमाणिअदोहला वुच्छिन्नदोहला ववणीअदोहला सुहंसुहेणं आसइ सयइ चिट्ठइ निसीअइ तुयट्टइ विहरइ सुहंसुहेणं तं गब्भं परिवहइ ॥ ९५ ॥

व्याख्या-"तए णं सा" ततश्च सा त्रिशला क्षत्रियाणी स्नाता कृतबलिकर्मा, कृतकौतुकमङ्गलप्रायश्चित्ता

भगवतः अभिग्रहः, सगर्भा-त्रिशला-वर्णनं च

सर्वालङ्कारविभूपिता तं गर्भं सुखेन वहति । कैः ?। एवंविधैः आहारादिभिः । किंविशिष्टैः आहारादिभिः ?। "नाऽसीएर्हि" न अतिशीतैः, यतो अतिशीतं मारुतं प्रकोपयति, शीतादिषु हि कानिचित् वातिकानि, कानिचित् पैत्तिकानि, कानिचित् श्लेष्मकारीणि च स्युः । उक्तं च वाग्भट[कृते अष्टाङ्गहृदय] ग्रन्थे—

"वातलैश्च भवेद्गर्भः, कुब्जान्धजडवामनः । पित्तलैः खलतिः पिङ्गः, श्वित्री पांडुः कफात्मभिः ॥ १॥" ( शारीरस्था. अ. १ श्लो. ४८ ) । पुनर्नात्युष्णैः, यतः–"अत्युष्णं हरति बलम्" पुनर्न अतितिक्तैः, नातिकटुकैः, नातिकषायैः, न अति–अम्लैः, न अतिमधुरैः नातिस्निग्धैः नातिरूक्षैः नात्यार्द्रैः नातिशुष्कैः, यतः एभिः आहारैः सेव्यमानैः गर्भो बन्धनात् मुच्यते । पुनरपि कामसेवा १ यान २ वाहन ३ अध्वगमन ४ प्रस्खलन ५ प्रपतन ६ प्रपीडन ७ प्रधावन ८ अभिघातन ९ विषमशयन १० विपमासन ११ उपवास १२ वेग १३ विघात १४ अतिभोजन १५ अतिराग १६ अतिशोक १७ अतीसार १८ वमन १९ विरेचन २० प्रेङ्खोलन २१ अजीर्णादिभिः गर्भपातो भवेत् । ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी दिवा स्वापांजन–अश्रुपात–स्नान–अनुलेपन–अभ्यङ्ग–नखच्छेदन–प्रधावन–हसन–कथन–अतिशब्दश्रवण–अवलेखन–अनिलायासान् परिहरेत् । यतः एतत् कारणम्–'दिवाशयनेन शयनशीलः, अञ्जनात् अन्धः, रोदनात् विकृतदृष्टिः, स्नानानुलेपनात् दुःखशीलः, तैलाभ्यङ्गात् कुष्ठी, नखापकर्तनात् कुनखी, प्रधावनात् चंचलः, हसनात् (श्यावदन्तौष्ठ) संदर्शितौष्ठतालुजिह्वः, अतिकथनात् प्रलापी, अतिशब्दश्रवणात् बधिरः, अवलेखनात् खलतिः, व्यजन-

क्षेपनादिमारुत-आयाससेवनात्, उन्मत्तो गर्भो भवत्येव, एतानि परिहरेत्' इति सुश्रुते शारीरे (२ अध्याये, २५)। पुनः भोजनाच्छादनगन्धमाल्यैः, तत्र भोजनं आहारग्रहणम्, आच्छादनं=प्रावरणम्, गन्धाः पटवासादयः, माल्यानि=पुष्पमालाः तैः। किंविशिष्टं आहारग्रहणम्?। "सवत्तुगेत्ति" ऋतौ ऋतौ यथायथं भज्यमानाः=सेव्यमानाः, सुखाः=सुखहेतवो ये तैः। किंविशिष्टा त्रिशला?। "ववगयेति" व्यपगताः रोगाः-ज्वरादयः, शोकः इष्टवियोगादिजनितः, मोहः मूर्च्छा, भयं भीतिमात्रम्, परित्रासः अकस्माद्भयं, परित्रासस्थाने परिश्रमो वा व्यायामः, ततः कृतद्वन्द्वा यस्याः सा व्यपगतरोगशोकभयमोहपरिश्रमा, एवंविधा सती यत् तस्य गर्भस्य हितं गर्भस्यैव मेधायुरादिवृद्धिकारणं मितं=न अधिकं ऊनं वा, पथ्यं अरोगकारणत्वात्। कोऽर्थः?। गर्भपोषणं देशे=उचितप्रदेशे, तथाकाले=तथाविधाऽवसरे आहारं अभ्यवहरन्तीति, विविक्तानि=दोषवियुक्तानि लोकान्तरासंकीर्णानि वा, मृदुकानि च कोमलानि यानि तैः शयनाऽऽसनैः। पुनः विहारभूम्या=चङ्क्रमणासनादिभूम्या। किंविशिष्टया विहारभूम्या?। "पइरिक्क त्ति" प्रतिरिक्तया तथाविधजनापेक्षया विजनया, अत एव सुखया शुभया वा। पुनः किंविशिष्टया विहारभूम्या?। मनोऽनुकूलया। पुनः किंविशिष्टा त्रिशला?। प्रशस्ता=अनिन्द्या दोहदाः=मनोरथा यस्याः सा। पुनः किंविशिष्टा त्रिशला?। संपूर्णदोहदा अभिलाषपूरणात्। पुनः किंविशिष्टा त्रिशला?। संमानितदोहदा प्राप्ताभिलषितस्य भोगात्। पुनः किंविशिष्टा त्रिशला?। अवमानितदोहदा=नावज्ञातदोहदा, क्षणमपि

न अपूर्णमनोरथेत्यर्थः। अत एव व्यवच्छिन्नदोहदा=त्रुटिताकाङ्क्षा। दोहदव्यवच्छेदस्यैव प्रकर्षाधानाय आह–व्यपनीतदोहदा, सुखं सुखेन गर्भाऽनाबाधया "आसइ त्ति" आश्रयति आश्रयणीयं स्तम्भादि, शेते निद्रया, तिष्ठति ऊर्ध्वा, निषीदति=आसने उपविशति, त्वग्–वर्तयति=निद्रां विना शय्यायां, विहरति कुट्टिमे। अत्र त्रिशलाया विशेषणं प्रोक्तम्–"पसत्थदोहला संपुण्णदोहला" तत्र को दोहद उत्पन्नः?, कथं च पूरितः?। तत्संबन्धः कथ्यते–एकदा त्रिशलाया दोहद उत्पन्नो यदुत इन्द्राण्याः कर्णयोः कुण्डले स्वयं परिदधामि, परं तस्य दुष्करत्वेन अपूरणात् प्रत्यहं दुर्मना जाता। तत इन्द्रेण आसनकम्पात् अवधिना ज्ञातम्,। ततः तत्पूरणोपायार्थं इन्द्राणीप्रमुखं अप्सरोवृन्दं लात्वा, एकस्मिन् दुर्गमे पर्वतान्तर्वर्तिनि विषमे भूमिस्थाने, देवनगरं स्थापयित्वा इन्द्रः स्थितः। सिद्धार्थः सैन्यं कृत्वा निकटे गत्वा इन्द्रात् कुण्डले याचते स्म। इन्द्रो न ददाति, युद्धाय सज्जो जातः। ततः सिद्धार्थेन इन्द्रेण समं युद्धं कृतम्। इन्द्रः समर्थोऽपि जानन् भग्नो नष्ट्वा गतः। ततः सिद्धार्थेन अप्सरोवृन्दं लुण्टितम्, इन्द्राण्याः पूत्कुर्वत्याः बलात् कुण्डले गृहीत्वा आनीय त्रिशलायै स्वप्रियायै दत्ते, तया च परिहिते, दोहदः संपूर्णः संजातः।

अथ त्रिशला गर्भभरालसा सखीजनेन प्रत्यहं एवं शासिष्यते। तथा हि—

"मन्दं सञ्चर, मन्दमेव निगद व्यामुञ्च कोपक्रमं, पथ्यं भुङ्क्ष्व बधान नीविमनघं, मा अट्टहासं कृथाः।
आकाशे न च शेष्व, नैव शयने नीचैर्बहिर्गच्छ मा, देवी गर्भभरालसा निजसखीवर्गेण शासिष्यते ॥ १ ॥

"हे सखि ! त्वं मन्दं मन्दं संचर, मन्दं मन्दमेव ब्रूहि, कोपकरणं मुञ्च, पुनः पथ्यं भुंक्ष्व, नीवीं भव्यरीत्या बधान। पुनः अट्टाट्टहासं मा कृथाः, आकाशे भुवि च मा शेष्व, नीचैः मा गच्छ।" इत्यादि ॥

अथ भगवतो जन्मकल्याणकं कदा जातम् ?, तत्राह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जेसे गिम्हाणं पढमे मासे दुच्चे पक्खे चित्तसुद्धे तस्स णं चित्तसुद्धस्स तेरसीदिवसे णं नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइंदियाणं विइक्कंताणं उच्चट्ठाणगएसु गहेसु पढमे चंदजोगे सोमासु दिसासु वितिमिरासु विसुद्धासु जइएसु सव्वसउणेसु पयाहिणाणुकूलंसि भूमिसप्पंसि मारुयंसि पवायंसि निप्फन्नमेइणीयंसि कालंसि पमुइयपक्कीलिएसु जणवएसु पुव्वरत्तावरत्तकालसमयंसि हत्थुत्तराहिं नक्खत्तेणं चंदेणं जोगमुवागएणं आरुग्गा आरुग्गं दारयं पयाया ॥ ९६ ॥

व्याख्या–'तेणं ति' तस्मिन् काले तस्मिन् समये भगवान् श्रीमहावीरदेवः ग्रीष्मकालस्य यः प्रथमो मासः, तस्य यो द्वितीयः पक्षः। एतावता चैत्रसुदि त्रयोदशीरात्रौ नवसु मासेषु उपरि च सार्धसप्तरात्रिन्दिनेषु व्यतिक्रान्तेषु सत्सु,। पुनः ग्रहेषु उच्चस्थानगतेषु। ग्रहाणां उच्चराशयस्त्वेवम्—

रवेः मेषराशिः उच्चः १, एवं चन्द्रस्य वृषः २, मंगलस्य मकरः ३, बुधस्य कन्याराशिः ४, बृहस्पतेः कर्कराशिः ५, शुक्रस्य मीनराशिः ६, शनैश्चरस्य तुलाराशिः ७, राहोः मिथुनराशिः (?) ८। तेषाम् फलमाह—

त्रिभिः उच्चग्रहैः नरेन्द्रो भवेत्, पञ्चभिः वासुदेवः, षड्भिः चक्रवर्ती, सप्तभिः उच्चैस्तीर्थंकरो भवेत् ॥ १ ॥

अत्र तु सर्वग्रहाणां उच्चत्वं अंशकादि अपेक्ष्य घटनीयम्। तथा हि—

सूर्यो दशमे त्रिंशांशे वर्तमानः परमोच्चः १, एवं चन्द्रः तृतीये त्रिंशांशे २, मंगलो अष्टाविंशे त्रिंशांशे ३, बुधः पंचदशे त्रिंशांशे ४, बृहस्पतिः पंचमे त्रिंशांशे ५, शुक्रः सप्तविंशे त्रिंशांशे ६, शनैश्चरो विंशतितमे त्रिंशांशे वर्तमानः परमोच्चो ज्ञेयः ७।

पुनः क्व सति ?। "पढमे चंदत्ति" प्रथमे=प्रधाने, चन्द्रयोगे=चन्द्रबले अर्थात् नृपादीनाम्। पुनः सौम्यासु

---

१ "अज-वृषभ-मृगा-ङ्गना-कुलीरा, झष-वणिजौ च दिवाकरादितुङ्गाः।
दशशिखिमनुयुक्तिथीन्द्रियांशैः, त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥"

इति बृहज्जातके (राशि० अ० १ श्लो० १३) सूर्यादीनां सप्तानां ग्रहाणां मेषादयो राशयः श्लोकोक्ताः क्रमविशिष्टा उच्चस्थानानि। स्वस्वतुङ्गा-(उच्चा)पेक्षया सप्तमस्थानानि नीचानि। अत्र उच्चेष्वपि दशमादयो राशित्रिंशांशा यथाक्रमं उच्चेषु परमोच्चाः, नीचेषु परमनीचाः इति श्लोकार्थः।

मेषः सूर्यः १०। वृषः सोमः ३। मृगः मंगलः २८। कन्या बुधः १५। कर्कः गुरुः ५। मीनः शुक्रः २७। तुलाः शनिः २०। इति ॥

१ प्रथमे चंद्रयोगे प्रथमशब्दस्य प्रधानार्थत्वात्, चंद्रयोगचंद्रबले अर्थात् नृपादीनाम् अथवा तदानीं सूर्यस्य मेषस्थितत्वात्

रजोवृष्ट्याद्यभावात् शान्तासु। पुनः वितिमिरासु भगवज्जन्मकाले सर्वत्र उद्योतभावात्, चन्द्रिकया ध्वस्तध्वान्तासु वा, विशुद्धासु उल्कापातदिग्दाहाद्यभावात् निर्मलासु दिक्षु सत्सु। पुनः सर्वशकुनेषु काकोलपोतक्यादिषु, "जइएसु त्ति" जयोऽस्यास्ति एषु। जयिनो राजादीनां जयदायिनः तेषु। पुनः मारुते=वायौ "पयाहिणत्ति" प्रदक्षिणश्चासौ अनुकूलश्च भगवतः प्रदक्षिणवाहित्वात् अनुकूलः तस्मिन्, अथवा प्रदक्षिणः प्रदक्षिणावर्तत्वात्, अनुकूलः सुरभिशीतलत्वात्। पुनः किंविशिष्टे मारुते?। भूमिसर्पिणि मृदुत्वात्, चण्डवातो हि उच्चैः सर्पति, तादृशे वाते प्रवातुं आरब्धे, "निष्पन्ना" पुनः एवंविधे काले ऋतौ। किंविशिष्टे काले?। निष्पन्नसर्वशस्या मेदिनी यत्र स तस्मिन्। पुनः 'जनपदेषु' जनपदवास्तव्यलोकेषु एवंविधेषु सत्सु। किंविशिष्टेषु जनपदेषु?। प्रमुदिताः सुभिक्षसौख्यादिना प्रक्रीडिताः वसन्तादिषु क्रीडितुं आरब्धाः, ततो विशेषणकर्मधारयः तेषु। अत्र बहुषु आदर्शेषु "उच्चट्ठाण" इत्यादि न दृश्यते। पुनः "पुव्वरत्तेति" अर्धरात्रे हस्तोत्तरानक्षत्रे उत्तरफाल्गुनीनक्षत्रे चन्द्रेण सह वर्तमाने, "आरोग्गा" अनाबाधा माता "आरोग्गं" अनाबाधं "दारयं पयाया" दारकं=पुत्रं प्रजाता=सुषुवे। 'जनि' धातुः सोपसर्गत्वात् सकर्मकः इति ॥

---

भगवतश्च मध्यरात्रे जन्मभावात् तदा च मकरलग्नस्य संभवात् प्रथमायां चान्द्र्यां होरायां 'समराशौ चंद्रतीक्ष्णांशोरिति वचनात्' अन्यथा वा सुधिया वृद्धोपदेशात् भावनीयम्॥ इति संदेहवि०॥

॥ इति श्रीमहावीरदेवस्य जन्मकल्याणकम् ॥

पुनः स्कंदपुराणे विशेषश्चायम्—गतकलियुग संवत् २६९१ वर्षे चैत्रसुदित्रयोदश्यां मङ्गलवारे उत्तराफाल्गुनी-नक्षत्रे रात्रिगतघटी १५ पल २२ समये मकरलग्ने चन्द्रहोरायां श्रीवीरजन्मेति। जन्मकुण्डलिका चेयम्। इत्यनेन महावीरदेवस्य जन्मकल्याणकं व्याख्यातम् ॥




अथ पञ्चमव्याख्याने श्रीमहावीरस्य जन्मोत्सवो व्याख्यास्यते—स वर्तमानयोगः अस्मिन्नवसरे एके दानं ददति, एके शीलं पालयन्ति, एके तपस्तपन्ति, एके भावनां भावयन्ति, इत्यादि श्रीमहावीरस्वामी—सुधर्मस्वामी—जम्बूस्वामी तावत् यावत् शाखानुक्रमः श्रीवयरस्वामी, ततः स्वगच्छगुरुपरम्परा वाच्या, यावद्गुरुवर्तमान तेहतणी आज्ञाए श्रीसंघप्रवर्त्ते।

व्याख्यानं कल्पसूत्रस्य, चतुर्थं सुगमं स्फुटम्। शिष्यार्थं पाठकाश्चक्रुः, समयादिमसुन्दराः ॥ १ ॥

---

१ "चतुर्लक्षं तु द्वात्रिंशत्—सहस्राणि कलिः स्मृतः।" इति हि स्कन्दपुराणे ( माहेश्वरखण्डे अ० ३९ ) पाठः। २ असन्निकट-स्थानैकप्राचीनादर्शेषु महावीरजन्मकुण्डलिका विविधप्रकाराः अन्योन्यसंभिन्नाश्च लभ्यन्ते, याभ्यस्त्वेकेयं प्रतिकृतिः समुपन्यस्ताऽत्र यथा-यथम्। गतकलिकालस्तु २६९१ इति सर्वत्रैव लभ्यते, किंचाद्दते ह्येतद्गतकलिकाले सांप्रतगतकलिकालसंख्यया सद्यःकालीनवीरसंवत्संख्यया न गणनावैषम्यमाप्नोति, तत्त्वं त्वेतद्विषये गणकसुधीभिर्विमर्शनीयम् ॥

इति श्रीकल्पसूत्रस्य चतुर्थं व्याख्यानं श्रीसमयसुन्दरोपाध्यायविरचितं सम्पूर्णम् ॥

# अथ पञ्चमं व्याख्यानम् ॥

ओं नमः श्रीवर्धमानाय । अथ पञ्चमं व्याख्यानं प्रारभ्यते । पूर्वं प्रथमवाचनायां पञ्चपरमेष्ठिनमस्कारो व्याख्यातः १, द्वितीयवाचनायां च श्रीमहावीरदेवस्य गर्भापहारकल्याणकं व्याख्यातम् २, तृतीयवाचनया च चतुर्दशस्वप्ना व्याख्याताः ३, चतुर्थवाचनया च श्रीमहावीरदेवस्य जन्मकल्याणकं व्याख्यातम् ४, अथ पञ्चमवाचनया [ श्रीमन्महावीरदेवस्य ] दीक्षाज्ञाननिर्वाणकल्याणकानि व्याख्यायन्ते । तत्र पूर्वं जन्मोत्सवो व्याख्यायते ।

अथ भगवतो जन्मानन्तरं किं जातम् ?, तत्राह—

जं रयणिं च णं समणे भगवं महावीरे जाए सा णं रयणी बहूहिं देवेहिं देवीहि य ओवयंतेहिं उप्पयंतेहि य उप्पिंजलमाणभूआ कहकहगभूआ आवि हुत्था ॥ ९७ ॥

व्याख्या—"जं रयणिं—"यस्यां रजन्यां=रात्रौ श्रमणो भगवान् महावीरो जातः, तस्यां रात्रौ देवोद्योतोऽभवत् ।

कैः काभिश्च ?। बहुभिर्देवैः बह्वीभिर्देवीभिश्च। किंकुर्वद्भिः किं कुर्वतीभिश्च ?। "ओवयंतेहिं" अवपतद्भिः=अवतरद्भिः उपरिष्टादध आगच्छद्भिः। पुनः "उप्पयंतेहिं" उत्पतद्भिः=ऊर्ध्वं गच्छद्भिः "हुत्थत्ति" अभवत्। "हुत्थत्ति" क्रिया सर्वत्र योज्या १, पुनः लोकश्चतुर्दशरज्ज्वात्मक एकालोकः, एकः=अद्वैतः आलोकः=उद्योतो यत्र सः। पुनः अर्थाद्विभक्तिव्यत्ययाद्वा रजनिः एवंविधा अभूत्। किंविशिष्टा रजनिः ?। देवसंनिकाया चतुर्विधदेवसंनिकायानां संनिपातो यस्यां सा। पुनः किंविशिष्टा रजनिः ?। "उप्पिंजलमाणभूआ" उत्पिंजलो=भृशं आकुलः, स इव आचरति इत्याचारः, क्विपि शतरि च प्राकृतत्वात् माणादेशे च "उप्पिंजलमालभूआ त्ति" सिद्धम्। तद्भूता भूतशब्दस्योपमानार्थत्वात् उप्पिंजलंतीव। क्वापि "उत्पिंजलमालभूआ" इति पाठः, तत्र उत्पिञ्जलानां=देवादीनां माला=श्रेणिः तां भूता=प्राप्ता। पुनः किंविशिष्टा रजनी ?। "कहकहभूयं" "कहकहत्ति" अव्यक्तो नादः तद्भूता हर्षाट्टहासादिना कहकहारवमयी, अथवा तस्यां रात्रौ देवसंनिपाताः अभवन्। उत्पिञ्जलेत्यादिविशेषणद्वयं देवसंनिपातानाम्। [तथा च तद्वर्णनम्—"उद्योतस्त्रिजगत्यासीत्, दध्वान दिवि दुन्दुभिः। नारका अप्यमोदन्त, भूरप्युच्छ्वासमासदत्॥ १ ॥"] पुनः तस्यां रात्रौ किं जातम् ?, तत्राह—

जं रयणिं च णं समणे भगवं महावीरे जाए तं रयणिं च णं बहवे वेसमणकुंडधारी तिरियजंभगा देवा सिद्धत्थरायभवणंसि हिरण्णवासं च सुवण्णवासं च वयरवासं च वत्थवासं

च आभरणवासं च पत्तवासं च पुप्फवासं च फलवासं च बीअवासं च मल्लवासं च गंधवासं च चुण्णवासं च वण्णवासं च वसुहारवासं च वासिंसु ॥ ९८ ॥

व्याख्या—"जं रयणिं" पुनः यस्यां रात्रौ भगवान् जातः, तस्यां रात्रौ बहवो वैश्रमणस्य धनदस्य कुण्डस्य आज्ञाया धारिणः तिर्यग्जृम्भका देवाः सिद्धार्थराजस्य भवने हिरण्यादीनां वृष्टिं कुर्वन्ति १, तत्र हिरण्यं=रूप्यं अघटितस्वर्णं, तस्य वर्षं अल्पतरं, वृष्टिस्तु महती, सुवर्णस्य घटितकनकस्य वृष्टिं कुर्वन्ति, २, वज्रस्य हीरादेः वृष्टिं कुर्वन्ति ३, वस्त्रस्य बहुमूल्यदेवदूष्यादेः वृष्टिं कुर्वन्ति ४, आभरणस्य मुकुटकुण्डलादेः वृष्टिं कुर्वन्ति ५, पत्रस्य नागवल्लीपत्रादेः वृष्टिं कुर्वन्ति ६, पुष्पस्य मालतीचंपकादेः वृष्टिं कुर्वन्ति ७, फलस्य नारिकेलादेः वृष्टिं कुर्वन्ति ८, वीजस्य शालिप्रमुखवीजादेः वृष्टिं कुर्वन्ति ९, मालायाः ग्रथितपुष्पादेः वृष्टिं कुर्वन्ति १०, गन्धस्य कोष्ठपुटपाकादेः वृष्टिं करोति ११, चूर्णस्य गन्धद्रव्यसंबन्धिनो वृष्टिं कुर्वन्ति १२, वर्णस्य चन्दनादेः वृष्टिं करोति १३, वसूनि=रत्नानि तेषां धारा तस्या वर्षं कुर्वन्ति १४। पुनः भगवज्जन्मसमये अचेतना अपि सर्वदिशो मुदिता इव प्रसेदुः। पुनः वायवोऽपि सुखस्पर्शाः सन्तो मन्दं मन्दं वान्ति स्म। पुनः त्रिभुवने महान् उद्योतो जातः। पुनः नारका अपि क्षणं हर्षं प्रापुः। पुनः पृथिव्यपि उच्छ्वासं प्रासा।

अथ अत्र समये षट्पञ्चाशत् ५६ दिक्कुमार्य आगत्य भगवतो जन्मोत्सवं चक्रुः। तासां अनुक्रमं प्राह—

दिक्कुमारीकृत-जन्मोत्सवः

अथ अष्टौ दिक्कुमार्यः अधोलोकवासिन्यः याः गजदन्ताकारपर्वतानां अधस्तात् भवनवासेषु तिष्ठन्ति—

भोगंकरा भोगवती, सुभोगा भोगमालिनी। तोयधारा विचित्रा च, पुष्पमाला अनन्दिता ॥ १ ॥

एता अष्टौ आसनकम्पात् अवधिज्ञानेन भगवतो जन्मकल्याणकं ज्ञात्वा आगत्य संवर्तवातेन जन्मगृहात् योजनं यावत् पृथिवीं शोधयित्वा भगवन्तं भगवतो मातरं च नत्वा ईशानकोणे सूतिगृहं चक्रुः ८।

अथ अष्टौ दिक्कुमार्यः ऊर्ध्वलोकवासिन्यः या नन्दनवनकूटेषु तिष्ठन्ति—

मेघंकरा मेघवती, सुमेघा मेघमालिनी। च सुवत्सा वत्समित्रा, वारिषेणा बलाहिका ॥ २ ॥

एता अष्टौ आगत्य भगवन्तं भगवतो मातरं च नत्वा पूर्वशोधितायां योजनप्रमाणभूमिकायां सुगन्धपानीयसुगन्धपुष्पवृष्टिं चक्रुः १६।

ततः पुनरपि अष्टौ दिक्कुमार्यः पूर्वरुचकवासिन्यो या रुचकाभिधानस्य त्रयोदशद्वीपस्य प्राकाराकारेण मण्डलव्यवस्थितस्य उपरि पूर्वदिग्व्यवस्थितेषु अष्टसु कूटेषु तिष्ठन्ति—

अथ नन्दोत्तरा नन्दा, आनन्दा नन्दिवर्धना। विजया वैजयन्ती च, जयन्ती अपराजिता ॥ ३ ॥

एता अपि अष्टौ आगत्य भगवंतं भगवतो मातरं च नत्वा आलोकार्थं भगवतोऽग्रे दर्पणं धरन्ति २४।

पुनरपि अष्टौ दिक्कुमार्यः तत्रैव रुचकाभिधानत्रयोदशद्वीपे दक्षिणदिग्व्यवस्थितगिरिकूटेषु अष्टसु याः तिष्ठन्ति—

समाहारा सुप्रदत्ता, सुप्रबुद्धा यशोधरा । लक्ष्मीवती शेषवती, चित्रगुप्ता वसुन्धरा ॥ ४ ॥

एता अपि आगत्य च जिनं जिनमातरं च नत्वा जलभृङ्गान् स्नानार्थं करे कृत्वा भगवतोऽग्रे गीतगानं कुर्वन्ति ३२।

पुनरपि अपरा अष्टौ दिक्कुमार्यः तत्रैव त्रयोदशे रुचकद्वीपे पश्चिमदिग्व्यवस्थितगिरिकूटेषु अष्टसु याः तिष्ठन्ति—

इलादेवी सुरादेवी, पृथिवी पद्मावती च । एकनासा नवमिका, भद्रा सीतेति नामतः ॥ ५ ॥

अपि आगत्य जिनं जिनमातरं च नत्वा, वातार्थं व्यजनं हस्ते गृहीत्वा भगवतोऽग्रे तिष्ठन्ति ४० ।

पुनरपि अपरा अष्टौ दिक्कुमार्यः तत्रैव त्रयोदशे रुचकद्वीपे उत्तरदिग्व्यवस्थितगिरिकूटेषु अष्टसु याः तिष्ठन्ति—

अलंबुसा मितकेशी, पुण्डरीका च वारुणी । हासा सर्वप्रभा श्री ह्री, अष्टौ दिग् रुचकाद्रितः ॥ ६ ॥

एता आगत्य, जिनं जिनमातरं च नत्वा, भगवतोऽग्रे चामराणि ढालयन्त्यः तिष्ठन्ति ४८।

पुनरपि अन्याः चतस्रः तत्रैव त्रयोदशे रुचकद्वीपे चतुर्विदिग्व्यवस्थितगिरिकूटेषु चतुर्षु याः तिष्ठन्ति—

विचित्रा १, चित्रकनका २, तेजा ३, सौदामिनी ४ ॥ एता अपि आगत्य जिनं जिनमातरं च नत्वा, दीपं हस्ते गृहीत्वा भगवतोऽग्रे तिष्ठन्ति ५२।

पुनरपि अपराः चतस्रो दिक्कुमार्यः तत्रैव त्रयोदशे रुचकद्वीपे अभ्यन्तरव्यवस्थितगिरिकूटेषु चतुर्षु याः

तिष्ठन्ति—रूपा १, रूपासिका च २, रूपकावती ३, सुरूपा ४ एता आगत्य, जिनं जिनमातरं च नत्वा, भगवतो नालं चतुरङ्गुलतः छित्त्वा, खातोदरे क्षिपन्ति स्म। पश्चात् तं खातोदरं वैडूर्यरत्नैः पूरयित्वा तस्योपरि दूर्वया बद्धं पीठं चक्रुः ५६।

ततो जन्मगृहात् पूर्वस्यां १, दक्षिणस्यां २, उत्तरस्यां ३, च दिशि केलिगृहत्रयं चक्रुः। ततो दक्षिणकेलिगृहे भगवन्तं भगवतो मातरं च नीत्वा द्वयोः अपि अभ्यङ्गं कुर्वन्ति स्म। ततः पूर्वकेलिगृहे नीत्वा, स्नानं कारयित्वा, विलेपनवस्त्रालङ्काराणि परिधापयामासुः। तत उत्तरकेलिगृहे अरणिकाष्ठाभ्यां अग्निं उत्पाद्य, चन्दनैः होमं कृत्वा, रक्षापोट्टलिकां द्वयोः हस्तयोः बबन्धुः। ततो 'हे भगवन्! त्वं पर्वतायुः भव!' इति आशिषं दत्त्वा, अश्मगोलकौ कर्णयोः आस्फाल्य, जन्मस्थाने जिनं जिनमातरं च नीत्वा, स्वस्वदिक्षु स्थित्वा, गीतानि गायन्ति स्म। एताश्च षट्पञ्चाशत् ५६ दिक्कुमार्यः प्रत्येकं त्रित्रिसहस्रमहत्तरादेवीभिः, चतुःसहस्रसामानिकदेवीभिः, षोडशसहस्रैः अङ्गरक्षकदेवैः, सप्तभिरनीकैः, सप्तभिरनीकाधिपतिभिः, अन्यैः अपि महर्द्धिभिः देवैः सहिताः आभियोगिकदेवकृतैः योजनप्रमाणैः विमानैः अत्र आयान्ति। ततो भगवतो जन्मोत्सवं पूर्वविधिना कृत्वा, कृतार्थतां मन्यमानाः स्वस्वस्थानेषु गताः॥

॥ इति षट्पंचाशत्–दिक्कुमारीकृत–जन्मोत्सवः ॥

अथ इन्द्रजन्मोत्सवमाह—

तस्मिन् समये शक्रस्य=इन्द्रस्य आसनं चचाल। ततः अवधिज्ञानप्रयुञ्जानेन सौधर्मेन्द्रेण श्रीमहावीरस्य जन्मसमयो ज्ञातः। ततः इन्द्रः सुघोषां एकयोजनप्रमाणां घण्टां हरिणैगमेषिदेवपार्श्वात् अवादयत्। तद्वादने च सर्वदेवलोकमध्यवर्तिसर्वविमानघंटानादं चक्रुः। ततः सर्वेऽपि देवा इन्द्रादेशं ज्ञात्वा, इन्द्रसमीपे समागताः। इन्द्रोऽपि पालकनाम्ना देवेन कृते लक्षयोजनप्रमाणे पालकनामविमाने उपविष्टः। इन्द्रस्य अग्रतोऽष्टौ अग्रमहिष्य उपविष्टाः, इन्द्रस्य वामपार्श्वे सामानिकदेवाः स्थिताः, इन्द्रस्य दक्षिणपार्श्वे तिसृणां सभानां देवाः स्थिताः, इन्द्रस्य पृष्ठतः सप्तापि अनीकानि स्थितानि, अन्यैः अपि बहुभिरपि देवैः परिवृतः सिंहासनस्थो गीयमानगुणग्रामः सन् इन्द्रश्चचाल। एवमन्येऽपि देवाः स्वस्वविमानानि आरुह्य चेलुः। तेऽपि केऽपि इन्द्रस्य आदेशात्, केऽपि मित्रस्य अनुवर्तनात्, केऽपि स्वस्त्रीणां प्रेरणात्, केऽपि तीर्थङ्करस्य रागात्, केऽपि कौतुकात्, केऽपि आश्चर्यात्, केऽपि भक्तितः। एवं सर्वेऽपि सुरा नानाप्रकारैः वाहनैर्युक्ताः इन्द्रेण समं चलिताः। तस्मिन् प्रस्तावे नानाप्रकारैः वाद्यनिर्घोषैः=घण्टानां क्वणितशब्दैः देवानां कोलाहलैश्च शब्दाऽद्वैतं विश्वं जातम्। मार्गागमने सिंहवाहनस्थो देवो हस्तिवाहनस्थं देवं वक्ति—'भो! त्वदीयं वाहनं गजं दूरीकुरु, मदीयवाहनः केसरी दुर्धरोऽस्ति, ततो हनिष्यति १, एवं अश्वस्थो वेसरस्थं वक्ति २, गरुडस्थः सर्पस्थम् ३, चित्रकस्थः छागस्थम् ४, इत्यादि। एवं सुराणां कोटिकोटीभिर्वाहनैः विमानैश्च विस्ती-

र्णोऽपि आकाशमार्गः सङ्कीर्णो जातः। तथा केऽपि देवा अग्रे गन्तुकामा मित्रत्वं परित्यज्य अग्रे ययुः। केऽपि दाक्षिण्यं परित्यज्य, केऽपि प्रतिज्ञां परित्यज्य अग्रे गच्छन्ति स्म। केचिद्देवाः वदन्ति–'भो मित्र! क्षणं प्रतीक्षस्व।' अपरे देवाः वदन्ति–'भो! न वक्तव्यम्, मौनं कुरु, एतादृशे महोत्सवे कः कं प्रतीक्षते?।' "पर्ववासराश्च" संकीर्णा एव भवन्ति। तथा आकाशे आगच्छतां देवानां मस्तके यदा चन्द्रकिरणा लग्नाः तदा देवाः निर्जरा अपि सजरा इव दृश्यन्ते स्म। तथा तारका अपि मस्तकोपरि रूप्यघटाकाराः, कण्ठे ग्रैवेयकाभरणसमाः, देहे च प्रस्वेदबिन्दुसमाः शोभन्ते स्म। ततो नन्दीश्वरे विमानानि संक्षिप्य जिनजन्मस्थाने समागत्य, जिनं जिनमातरं च त्रिः प्रदक्षिणीकृत्य, वन्दित्वा नमस्यित्वा च इन्द्रो वदति स्म–'हे रत्नकुक्षिधारिके! हे विश्वदीपिके! तुभ्यं नमोऽस्तु! अहं शक्रोऽस्मि, प्रथमदेवलोकात् आगतोऽस्मि। चरमतीर्थङ्करस्य जन्मोत्सवं करिष्यामि। हे देवि! त्वया न भेतव्यम्।' इत्युक्त्वा अवस्वापिनीं निद्रां दत्त्वा, जिनप्रतिबिम्बं जिनमातृपार्श्वे मुक्त्वा, भगवन्तं करसंपुटे गृहीत्वा चलितः। तत्र पञ्च रूपाणि इन्द्रेण सर्वश्रेयोलाभं वाञ्छता कृतानि–एकेन रूपेण तीर्थङ्करो गृहीतः, द्वाभ्यां रूपाभ्यां चामरे गृहीते। एकेन रूपेण छत्रं गृहीतम्। एकेन रूपेण वज्रं गृहीत्वा अग्रे चलितः ५। तस्मिन् समये इन्द्रो हर्षेण एवं भावयति स्म–'अद्य मम सहस्रनेत्राणि सफलानि जातानि, यैः कृत्वा अहं भगवतः संपूर्णरूपं पश्यामि।' पुनरपि अग्रेगामिनो देवाः पृष्ठगान् देवान् स्तुवन्ते–'धन्याः पृष्ठगा देवाः! ये भगवंतं सम्यक् पश्यन्ति, स्वकीये नेत्रे च पश्चात् समीहन्ते। एवं पृष्ठगा अग्रगा-

मिनः स्तुवन्ति । अनया रीत्या इन्द्रो मेरुपर्वतस्य शृङ्गस्थे पाण्डुकवने मेरुचूलाया दक्षिणदिशि अतिपाण्डुक-
म्यलाशिलातले श्रीजिनं उत्सङ्गे कृत्वा पूर्वदिक्संमुखो निषीदति स्म । देवाः सर्वेऽपि भगवत्समीपे समा-
गताः । ततो द्वादशदेवलोकस्वामी अच्युतेन्द्रः आभियोगिकदेवान् इति आदिशति स्म–'भो देवाः ! यूयं
कलशैः गङ्गापद्मद्रहादितीर्थानां पानीयमानयत । परं ते कलशाः कीदृशाः कियन्तश्च ?, तदाह—

एकसहस्राष्टौ कलशाः १००८ सुवर्णमयाः १, १००८ रूप्यमयाः २, १००८ रत्नमयाः ३, १००८ स्वर्णरूप्यमयाः ४, १००८ स्वर्णरत्नमयाः ५, १००८ रूप्यरत्नमयाः ६, १००८ सुवर्णरूप्यरत्नमयाः ७, १००८ मृन्मयाः ८। सर्वेऽपि अष्टौ सहस्राः चतुःषष्टिश्च (८०६४), सर्वेऽपि कलशा योजनाननाः । एवं भृङ्गारः । १ दर्पण २ रत्नकरण्डक ३ सुप्रतिष्ठक ४ स्थाल ५ पात्रिका ६ पुष्पचङ्गेरिका ७ आदीनि पूजाया उपकरणानि प्रत्येकं प्रत्येकं एकं सहस्रं अष्टौ च ज्ञेयानि । एवं अच्युतेन्द्रो गङ्गादीनां महानदीनां चतुर्दशलक्षषट्पञ्चाशत्सहस्र( १४५६००० )मितानां पानीयम्, मागधादितीर्थानां मृत्तिकां, पद्मद्रहादीनां पद्मानि, क्षुल्लहिमवद्वर्षधरवैताढ्यविजयवक्षस्कारदेवकुरू-त्तरकुरुभद्रशालनंदनवनादीनां सिद्धार्थ १ पुष्प २ तुवर ३ प्रमुखगन्धान् सर्वौषधीश्च जलानि च आनाय-यत् । अथ ते देवाः तीर्थजलेन भृतान् कुम्भान् हृदये धरन्तः आकाशमार्गे आगच्छन्तः कीदृशाः सम्भा-व्यन्ते ?। संसारसमुद्रं तरीतुमिव हृदयाग्रे कुंभा धृताः सन्ति १। अथवा भावद्रुमं सिञ्चन्तीव २, अथवा

पापमलं क्षालयन्तीव ३। ततः सर्वे देवाः कुम्भान् तीर्थजलभृतान् तीर्थङ्करोपरि यावत् ढालयन्ति तावत् इन्द्रस्य संशय उत्पन्नः—'अहो! अयं बाल एतावतां कलशादीनां नीरधारां कथं सहिष्यति? मा प्लावनं भवतु।' तत इन्द्रेण क्षणं तेषां कलशढालनं निवारितम्। ततो भगवता अवधिज्ञानेन इन्द्रस्य अभिप्रायं ज्ञात्वा, अनन्तबलेन पादस्य वामाङ्गुष्ठाग्रं ईषत् चंपितम्। ततो मेरुपर्वतोऽकम्पत। तत्कम्पनेन च किं जातम्?, तदाह—

पृथिवी कम्पिता १, पर्वतानां शृङ्गाणि त्रुटित्वा पतितानि २, समुद्राः क्षोभं प्राप्ताः ३, ब्रह्माण्डस्फोटसदृशः शब्दः प्रकटीबभूव ४, अप्सरसो भीतास्त्रस्ता स्वकीयपतिम्—आलिङ्गनं अकरोत् ५। अत्र कवेरुत्प्रेक्षा—मेरुणा ज्ञातं "अहमसंख्यातानां तीर्थङ्कराणां मध्ये न केनापि तीर्थङ्करेण पूर्वं स्पृष्टः। अद्य चरमतीर्थङ्करेण पादाग्रेण स्पृष्टः ततो मम महान् प्रसादः कृतः, अहं निष्पापः पवित्रश्च कृतः, ततो हर्षप्रकर्षात् नृत्यति स्म" इति। अथ मेरुकंपने इन्द्रेण रुष्टेन विचारितम्—'अहो! केन पापिष्ठेन देवदानवभूतप्रेतराक्षसव्यन्तरादिना शान्तिकरणसमये उपद्रवः कृतः?।' ततोऽवधिज्ञानप्रयुञ्जनेन ज्ञातम्—'अहो! अहमज्ञानी, तीर्थङ्करास्तु बाल्यावस्थायां अपि अनन्तबला भवन्ति।' ततः सौधर्मेन्द्रेण आदेशे दत्ते, पूर्वमच्युतेन्द्रेण समकालं कलशैः स्नानाभिषेको भगवतः कारितः। ततोऽनुपरिपाटीतः सर्वैरपि स्नानाभिषेकः कारितो यावचन्द्रसूर्योदयः। ततः

पुनरपि चत्वारि वृषभरूपाणि कृत्वा, अष्टशृङ्गैः दुग्धधाराभिः स्नानाभिषेकं इन्द्रः कारितवान्। स्नानाभिषेके कृते मेरुः कीदृशो जातः ?, तत्र कवेः उत्प्रेक्षा–सर्वपर्वताः सप्तशतानि सप्तपञ्चाशच्च ७५७ तेषां मध्ये मेरुपर्वतस्य राज्याभिषेकः कृतः, स्नात्रनीरैः स्नानाभिषेको जातः। नीरनिर्झराणि मुक्ताहाराः, भगवतो मूर्तिः मस्तके मुकुटं, देववाद्यानि वाद्यानि, अप्सरो गीतानि गीतानि इति। ततो देवाः गीतगानतानमाननृत्यवाद्यादिकं आरात्रिकापर्यन्तं जन्मोत्सवं कृत्वा, भगवन्तं मातुः पार्श्वे मुक्त्वा, भगवत्प्रतिबिम्बं संहृत्य, अवस्वापिनीं निद्रां दूरीकृत्य, कुण्डलयुगलं भगवत उच्छीर्षे मुक्त्वा, श्रीदामरत्नदामजटितं स्वर्णकन्दुकं उल्लोचे मुक्त्वा, स्वामिनोऽङ्गुष्ठे अमृतं संन्यस्य, रत्नमयपट्टे रूप्यमयतण्डुलानां अष्टौ मङ्गलानि लिखित्वा, द्वात्रिंशद्रत्नस्वर्णकोटीः वैश्रमणदेवः इन्द्रवचनेन सिद्धार्थराजगृहे वर्षति स्म। तत इन्द्र आभियोगिकसुरैः उद्घोषणां वाढं दापयामास–"भो भो! यः कोऽपि भगवतो भगवतो मातुर्वा मनसापि अशुभं चिन्तयिष्यति तस्य शिरः आर्य(अर्जुन) मञ्जरीवत् सप्तधा स्फुटिष्यति।" ततः चतुःषष्टिरपि[1] इन्द्राः, असंख्यातैः [इन्द्रैः] देवैश्च सहिताः जिनजन्मोत्सवं कृत्वा, नन्दीश्वरे अष्टाह्निकां कृत्वा, स्वस्वस्थानं जग्मुः।

॥ इति चतुःषष्टिइन्द्रकृत–जन्मोत्सवः ॥

---

१ वैमानिकेन्द्राः १०। भवनपतीन्द्राः २०। व्यन्तरेन्द्राः ३२। ज्यौतिष्केन्द्रौ २। इति चतुःषष्टिः ६४ ॥

अथ-इन्द्रजन्मोत्सवानन्तरं प्रियभाषितानाम्नी दासी सिद्धार्थनृपं पुत्रजन्मनिवेदनेन वर्धापयति स्म। राज्ञाऽपि हृष्टतुष्टेन दास्या मुकुटवर्जानि आभरणानि दत्तानि, मस्तकं क्षालयित्वा, दासीनामकर्म दूरीकृतम् इति ॥

अथ प्रभाते सिद्धार्थराजा किं कृतवान् ?, तत्राह—

**तए णं से सिद्धत्थे खत्तिए भवणवइवाणमंतरजोइसवेमाणिएहिं देवेहिं तित्थयरजम्मणाभिसेयमहिमाए कयाए समाणीए पच्चूसकालसमयंसि नगरगुत्तिए सद्दावेइ, सद्दावित्ता एवं वयासी ॥ ९९ ॥ खिप्पामेव भो देवाणुप्पिया ! कुंडपुरे नगरे चारगसोहणं करेह, करित्ता माणुम्माणवद्धणं करेह, माणुम्माणवद्धणं करित्ता ॥**

व्याख्या-"तए णं से सिद्धत्थे" ततश्च सिद्धार्थो राजा क्षत्रियः भवनपतिव्यन्तरज्योतिर्वासिविमानवासिदेवैः तीर्थङ्करजन्माभिषेकमहिमायां कृतायां सत्यां, प्रभातकालसमये "नगरगुत्तिए" नगरगुप्तिकान्=पुररक्षकान् "सद्दावेइ" समाकारयति, "सद्दावित्ता" समाकार्य च एवं अवादीत्-'भो देवानुप्रियाः ! क्षिप्रं=शीघ्रं क्षत्रियकुण्डग्रामे चारकशोधनं=बंदिमोचनं कुरुत कारयत च। एवं "माणुम्माणवद्धणं" मानं रसधान्यविषयं, उन्मानं च तुलारूपं तयोः वर्धनं कुरुत, कारयत च। पुनः सिद्धार्थो राजा किं कृतवान् ?, तत्राह—

कुंडपुरं नगरं सब्भिंतरबाहिरियं आसियसम्मज्जिओवलित्तं संघाडगतिगचउक्कचच्चरचउम्मुहमहापहपहेसु सित्तसुइसंमट्ठरत्थंतरावणवीहियं मंचाइमंचकलिअं नाणाविहरागभूसिअज्झयपडागमंडिअं लाउल्लोइयमहिअं गोसीससरसरत्तचंदणदद्दरदिन्नपंचंगुलितलं उवचियचंदणकलसं चंदणघडसुकयतोरणपडिदुवारदेसभागं आसत्तोसत्तविपुलवट्टवग्घारियमल्लदामकलावं पंचवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलिअं कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धूआभिरामं सुगंधवरगंधिअं गंधवट्टिभूअं नडनट्टगजल्लमल्लमुट्ठियवेलंबगकहगपाढगलासगआरक्खगलंखमंखतूणइल्लतुंबवीणियअणेगतालायराणुचरिअं करेह कारवेह, करित्ता कारवेत्ता य जूअसहस्सं मुसलसहस्सं च उस्सवेह, उस्सवित्ता मम एयमाणत्तियं पच्चप्पिणेह ॥ १०० ॥

व्याख्या-"कुंडपुरं नगरं सब्भिंतर"-पुनरपि सिद्धार्थो राजा प्राह-"भो देवानुप्रियाः! क्षत्रियकुण्डनगरं ईदृशं कुरुत=स्वयं कारयत चान्यैः। कीदृशं नगरम् ?। "सब्भिंतरबाहिरिअं" सह-अभ्यन्तरेण-मध्यभागेन "बाहिरिका"=बहिर्भागो यत्र तत् तथा, क्रियाविशेषणमिदम्। कीदृशं नगरम् ?। आसिक्तं=गन्धो-

दकच्छटादानात्, संमार्जितं-कचवरशोधनात्, उपलिप्तं-गोमयादिना। पुनः शृङ्गाटक-त्रिक-चतुष्क-चत्वर-चतुर्मुख-महापथ-पथेषु पूर्वं व्याख्यातेषु स्थानेषु सिक्तानि जलेन, अत एव शुचीनि=पवित्राणि, संसृष्टानि कचवरापनयनेन समीकृतानि वा, रथ्यान्तराणि=रथ्यामध्यानि, आपणवीथयश्च-हट्टमार्गा यस्मिन् तत्। पुनः कीदृशं नगरम् ?। मञ्चाः मालकाः प्रेक्षणकद्रष्टृजनोपवेशनार्थं अतिमञ्चास्तेषामप्युपरि ये तैः कलितम्। पुनः कीदृशं नगरम् ?। "नाणाविहरागभूसिअज्झयपडागमंडिअं" नानाविधरागैः कुसुंभादिभिः विभूषिता ये ध्वजाः सिंहगरुडादिरूपकोपेता बृहत्पटरूपाः, पताकाश्च ताभ्य इतराः ताभिर्मण्डितम्। पुनः कीदृशं नगरम् ?। "लाउल्लोइअं" छगणादिना लेपनं, सेटिकादिना कुड्यादौ धवलनं, ताभ्यां महितमिव=पूजितमिव, यद्वा लिप्तं उल्लोचितं=उल्लोचयुक्तं महितं च पुष्पप्रकरादिना। पुनः कीदृशं नगरम् ?। "गोसीस-सरसरत्त" गोशीर्षस्य=चन्दनविशेषस्य सरसस्य-प्रत्यग्रस्य रक्तचन्दनस्य-चन्दनविशेषस्यैव, दर्दरस्य=दर्दराभिधानपर्वतजातश्रीखण्डस्य, दत्ताः=न्यस्ताः पञ्चाङ्गुलयस्तला हस्तका यस्मिन् कुड्यादिषु, दर्दरबहलेन चपेटारूपेण वा दत्तपञ्चाङ्गुलितलं इत्येके। अन्ये त्वाहुः दर्दरः चीरावनद्धकुण्डिकामुखं तेन गर्भितेन गोशीर्षादिरसेनेति। पुनः कीदृशं नगरम् ?। "उवचिअचंदणकलसं" उपचिताः=उपनिहिताः गृहान्तः(कोण)चतुष्केषु चन्दनकलशाः=माङ्गल्यघटाः यत्र तत्। पुनः कीदृशं नगरम् ?। "चंदणघडसुकयतोरणपडिदुवारदेसभागं" चन्दनघटाः सुकृतास्तोरणानि च प्रतिद्वारं द्वारस्य द्वारस्य देशभागेषु यत्र तत्। क्वचित् घटस्थाने "घणत्ति"

पाठः, तत्र वन्दना=वन्दनमाला, घनानि=बहूनि सुकृतानि तोरणानि च प्रतिद्वारं देशभागेषु यत्र तत्। पुनः कीदृशं नगरम्?। "आसत्ते" आसक्तो=भूमिलग्नः, उत्सक्तश्च=उपरिलग्नो विपुलो=विस्तीर्णो वृत्तो=वर्तुलो "वग्घारिअत्ति" प्रलंबितः पुष्पगृहाकारो माल्यदाम्नां=पुष्पमालानां कलापः=समूहो यत्र तत्। पुनः कीदृशं नगरम्?। "पंचवन्न" पञ्चवर्णाः सरसाः सुरभयो ये मुक्ताः करप्रेरिताः पुष्पपुञ्जास्तैर्य उपचारो भूमेः पूजा तेन कलितम्। पुनः कीदृशं नगरम्?। "कालागरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धूआभिरामं सुगंधवरगंधिअं गंधवट्टिभूअं" इति विशेषणत्रयस्य अर्थः। पूर्ववत्। पुनः कीदृशं नगरम्?। "नडनट्टेत्ति" नटाः=नाटककर्तारः १, नर्तकाः=ये स्वयं नृत्यन्ति, "अंकेल्ला" इत्येके २, जल्लाः=वरत्रखेलकाः, राज्ञः स्तोत्रपाठका इत्यन्ये ३, मल्लाः भुजयुद्धप्रतीताः ४, मौष्टिकाः=मल्ला एव ये मुष्टिभिः प्रहरन्ति ५, विडम्बकाः=विदूषकाः ये समुखविकारं उत्प्लुत्य उत्प्लुत्य नर्तकाः ६, कथकाः=सरसकथाकथकाः ७, पाठकाः सूक्तादीनाम् ८, "पवग त्ति" पाठे प्लवकाः=ये उत्प्लवन्ते, झंपादिना गर्तादिकं नद्यादिकं वा तरन्ति ९, लासकाः=ये रासकान् ददति १०, आरक्षकाः=तलवराः, आख्यायका वा शुभाशुभयोः ११, लंखाः=महावंशाग्रखेलकाः १२, मंखाः=चित्रफलकहस्ता भिक्षाकाः–गौरीपुत्राः इति प्रसिद्धाः १३, तूणइल्लाः=भस्त्रकचित्ताः, तूणाख्यवाद्यवन्तो वा १४, तुम्बवीणिकाः=वीणावादकाः, अथवा तुम्बा=किन्नरी–आलापन्यादिवादकाः, वीणिकाः=वीणावादकाः १५, अनेके ये तालाचराः=तालादानेन प्रेक्षाकारिणः, तालान् कुट्टयन्तो वा ये कथां कथयन्ति

तैः अनुचरितं=सेवितं यत्तत्तथा, एवंविधं नगरं स्वयं कुरुत, अन्यैः कारयत, कृत्वा कारयित्वा च पुनरपि मङ्गलार्थं यूपसहस्रं=मुसलसहस्रं ऊर्ध्वीकुरुत, कृत्वा च मम एतां आज्ञां कृत्वा प्रत्यर्पयत ॥

ततः ते कौटुम्बिकपुरुषाः किं कृतवन्तः ?, तत्राह—

**तए णं ते कोडुंबियपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठा जाव हिअया करयलजावपडिसुणित्ता खिप्पामेव कुंडपुरे नगरे चारगसोहणं जाव उस्सवित्ता जेणेव सिद्धत्थे राया (खत्तिए) तेणेव उवागच्छंति, उवागच्छित्ता करयल जाव कट्टु सिद्धत्थस्स खत्तियस्स रण्णो एयमाणत्तियं पच्चप्पिणंति ॥ १०१ ॥**

व्याख्या—"तए णं ते कोडुंबियपुरिसा" ततः ते कौटुम्बिकपुरुषाः सिद्धार्थेन राज्ञा एवं उक्ताः सन्तो हृष्टतुष्टहृदयाः करतलयुगलं मस्तके नियुज्य आदेशं अङ्गीकृत्य, शीघ्रमेव बन्दिमोचनं यावन्मुसलसहस्रं ऊर्ध्वं कारयित्वा, यत्रैव स्थाने सिद्धार्थो राजा तत्रागच्छन्ति, आगत्य च करतलयुगलं मस्तके कृत्वा राज्ञा दत्तां आज्ञां तथैव कृत्वा राज्ञः समर्पयन्ति इति ।

ततः सिद्धार्थो राजा किं करोति ?, तत्राह—

**तए णं से सिद्धत्थे राया जेणेव अट्टणसाला तेणेव उवागच्छइ, उवागच्छित्ता जाव सव्वा-**

रोहेणं सव्वपुप्फगंधवत्थमल्लालंकारविभूसाए सव्वतुडिअसद्दनिनाएणं महया इड्डीए महया जुईए महया वलेणं महया वाहणेणं महया समुदएणं महया वरतुडिअजमगसमगपवाइएणं संखपणवभेरिझल्लरिखरमुहिहुडुक्कमुरजमुइंगदुंदुहिनिग्घोसनाइयरवेणं उस्सुक्कं उक्करं उक्किट्ठं अदिज्जं अमिज्जं अभडप्पवेसं अदंडकोदंडिमं अधरिमं गणिआवरनाडइज्जकलियं अणेगतालायराणुचरिअं अणुद्धुअमुइंगं (५००) अमिलायमल्लदामं पमुइअपक्कीलियसपुरजणजाणवयं दसदिवसं ठिइवडियं करेइ ॥ १०२ ॥

व्याख्या—"तए णं से सिद्धत्थे राया" ततश्च सिद्धार्थो राजा यत्र अट्टणशाला तत्र आगत्य दशदिवसान् यावत् स्थितिपतितां करोतीति सम्बन्धः। स्थितौ कुलमर्यादायां पतिता आगता या पुत्रजन्मोत्सवप्रक्रिया तां केन प्रकारेण स्थितिपतितां करोति ?, तदाह—"जाव सव्वारोहेणं" समस्तान्तःपुरैः, यावत्करणात् "सव्वजुईए" इत्यादि दीक्षायां वक्ष्यमाणं "सव्वारोहेणं" इत्यन्तं अत्र ग्राह्यम्। पुनः सर्वपुष्पगन्धवस्त्रमाल्यानि अलङ्कारो मुकुटादिः तेषां विभूषया कृत्वा। पुनः केन ?। "सव्वतुडियसद्दनिनाएणं" सर्वाणि यानि त्रुटितादिवादित्राणि तेषां शब्दो, निनादश्च प्रतिशब्दः तेन। कीदृशो राजा ?। "महया इड्डीए" महत्या ऋद्ध्या छत्रचामरादिकया

युक्त इति गम्यम्। एवं "महया जुईए" युक्तिः (इत्यत्र) इष्टवस्तुघटनात्, द्युतिः वा दीप्तिः आभरणादीनां तया। पुनः महता बलेन=सैन्येन, पुनः महता वाहनेन शिबिकावेसरादिना, पुनः महता समुदयेन संगताभ्युदयेन निजपरिवारादिसमुदयेन वा, पुनः महातुर्याणां यमकसमकं–युगपद्वादितेन=ध्वनितेन। पुनः शंखः=कम्बुः, पणवो मृत्पडहः, भेरी=ढक्का, 'दमामा' इति नाम्नी, झल्लरी=चतुरङ्गुलनालिः करटिसदृशी वलयाकारा उभयतो नद्धा इत्यन्ये। खरमुखी=काहला, हुडुक्का=तिविलितुल्या, मुरजो=मर्दलः, मृदङ्गो=मृन्मयः, दुन्दुभिः=देववाद्यम्, एतेषां निर्घोषो=महाध्वनिः, नादितं च=प्रतिशब्दः तद्रूपो यो रवः तेन। पुनः कीदृशीं स्थितिपतितां?। "उस्सुक्कं" उच्छुल्कां=उन्मुक्तशुल्कां, शुल्कं=विक्रेतव्यभाण्डं प्रति मण्डपिकायां राजदेयं द्रव्यम्। पुनः कीदृशीं स्थितिपतिताम्?। उत्करां=उन्मुक्तकरां, करो=गवादीन् प्रति प्रतिवर्षं राजदेयं द्रव्यम्, उन्मुक्तं कृष्टं कर्षणं यस्यां, लभ्येऽप्याकर्षणनिषेधात्, अथवा उत्कृष्टां=प्रधानाम्। पुनः कीदृशीं स्थितिपतिताम्?। अदेयां=विक्रयनिषेधेन केनापि न कस्यापि देयम्, द्रव्येन विना दातव्यम्। पुनः कीदृशीं स्थितिपतिताम्?। अमेयां क्रयविक्रयनिषेधादेव। पुनः कीदृशीं स्थितिपतिताम्?। अभटप्रवेशां, न विद्यते भटानां राजाज्ञादायिनां भटपुत्रादीनां प्रवेशः कुटुम्बिगृहेषु यस्यां सा ताम्। पुनः कीदृशीं स्थितिपतिताम्?। अदण्डिमकोदण्डिमं दण्डेन निर्वृत्तं दण्डिमं, कुदण्डेन निर्वृत्तं कुदण्डिमं=राजद्रव्यं तद्द्वयमपि नास्ति यस्यां सा ताम्।

तत्र दण्डः=अपराधानुसारेण राजग्राह्यं द्रव्यम्, कुदण्डस्तु कारणिकानां प्रजापराधान्महत्यपराधे अल्पं राजग्राह्यम्। क्वचित् 'अदण्डकुदण्डिमं' इति पाठः, तत्र दण्डलभ्यं द्रव्यं दण्डः, शेषं पूर्ववत्। पुनः कीदृशीं स्थितिपतिताम्?। अधरिमं न धरिमं=ऋणं यस्यां सा ताम्, ऋणमुत्कलत्वात्। कुत्रापि 'अहरिमं' इति पाठः, केनापि कस्यापि अहरणात्। पुनः कीदृशीं स्थितिपतिताम्?। गणिकावरैः=विलासिनीप्रधानैः, "अगणियन्ति" पाठे, अगणितैः प्रतिस्थानाभावात्। असंख्यैः नाटकीयैः=नाटकप्रतिबद्धैः पात्रैः कलिताम्। पुनः कीदृशीं स्थितिपतिताम्?। अनेकतालाचरानुचरितां=प्रेक्षाकारिसेविताम्। पुनः कीदृशीं स्थितिपतिताम्?। अनुद्धूता—आनुरूप्येण वादनार्थं उत्क्षिप्ताः, अनुद्धूता वा वादनार्थं अपरित्यक्ता मृदङ्गा यस्यां सा ताम्। पुनः कीदृशीं स्थितिपतिताम्?। अम्लानानि माल्यदामानि=पुष्पमाला यस्यां सा ताम्। पुनः कीदृशीं स्थितिपतिताम्?। प्रमुदितो=हृष्टः प्रक्रीडितश्च क्रीडितुं आरब्धः सहपुरजनेन जनपदो लोको यस्यां सा ताम्। क्वापि "पमुइअपक्कीलिअजणाभिरामां" इति पाठः, तत्र प्रमुदितैः=प्रक्रीडितैश्च जनैः अभिरामां। वाचनान्तरे—"विजयवेजइअं" दृश्यते, तत्र अतिशयेन विजयो विजयविजयः, स प्रयोजनं यत्र सा विजयवैजयिकी ताम्। ततो राजा किं करोति?, तत्राह—

तए णं से सिद्धत्थे राया दसाहियाए ठिइवडियाए वट्टमाणीए सइए य साहस्सिए य

सयसाहस्सिए य जाए य दाए य भाए अ दलमाणे अ दवावेमाणे अ, सइए अ साहस्सिए अ सयसाहस्सिए य लंभे पडिच्छमाणे य पडिच्छावेमाणे य एवं विहरइ ॥ १०३ ॥

व्याख्या-'तए णं से सिद्धत्थे'-इति ततश्च सिद्धार्थो राजा दशाहिकायां=दशदिवसप्रमाणायां स्थितौ कुलमर्यादायां पतितायां वर्तमानायां शतिकान्=शतपरिमाणान्, साहस्रिकान्=सहस्रपरिमाणान्, शतसाहस्रिकान्=लक्षपरिमाणान्, यागान्=देवपूजाः, दायान्=पर्वादौ दानानि, भागान्=लब्धद्रविणभागान् मानितद्रव्यांशान् वा, ददन् दापयन्, लाभान् प्रतीच्छन्=गृह्णन् प्रतिग्राहयन् विहरति आस्ते। ततो भगवतो मातापितरौ किं कुरुतः ?, तत्राह—

तए णं समणस्स भगवओ महावीरस्स अम्मापियरो पढमे दिवसे ठिइवडियं करिंति, तइए दिवसे चंदसूरदंसणिअं करिंति, छट्ठे दिवसे धम्मजागरियं करिंति, इक्कारसमे दिवसे विइक्कंते निव्वत्तिए असुइजम्मकम्मकरणे, संपत्ते बारसाहे दिवसे विउलं असणपाणखाइमसाइमं उवक्खडाविंति, उवक्खडावित्ता ॥

व्याख्या-"तए णं" ततश्च भगवतो मातापितरौ प्रथमे दिवसे स्थितिपतितं कुलक्रमान्तर्भूतं पुत्रजन्मोचितं

अनुष्ठानं कुरुतः । पुनरपि "तइए दिवसे चंदसूरदंसणिअं करिंति" तृतीये दिवसे चन्द्रसूरयोः दर्शनिकां उत्सवविशेषं कारयतो मातापितरौ यत्राधुना बालस्य दर्पणो दर्श्यते । तद्विधिरयम्–गृहस्थगुरुः स्फटिकमयीं रूप्यमयीं वा चंद्रमूर्तिं विधिना अर्चित्वा स्थापयेत् । ततः तीर्थङ्करमातरं स्नातां सुवस्त्राभरणां करद्वये धृतपुत्रां चन्द्रोदये प्रत्यक्षं चन्द्रसंमुखं नीत्वा इति वदति–"ॐ अर्हं चन्द्रोऽसि, निशाकरोऽसि, नक्षत्रपतिरसि, सुधाकरोऽसि, औषधीगर्भोऽसि, अस्य कुलस्य ऋद्धिं, वृद्धिं कुरु कुरु स्वाहा ।" इत्यादिचन्द्रमन्त्रमुच्चरन् मातृपुत्रयोः चन्द्रं दर्शयेत् । ततो माता सपुत्रा गुरुं प्रणमति, गुरुश्चाशीर्वादं ददाति । यथा–"सर्वौषधीमिश्रमरीचिजालः [राजिः], सर्वापदां संहरणप्रवीणः । करोतु वृद्धिं सकलेऽपि वंशे, युष्माकमिन्दुः सततं प्रसन्नः ॥ १ ॥" ततः स्थापितां इन्दुमूर्तिं विसर्जयेत् । कदाचित् सा रात्रिः चतुर्दशी अमावास्या वा स्यात् साभ्रे वा आकाशे चन्द्रो न दृश्यते तदा तस्यां एव सन्ध्यायां चन्द्रदर्शनं कार्यम् । अपरस्यां अपि रात्रौ चन्द्रोदये भवतु तत् । पुनः तस्मिन्नेव दिने प्रभाते स्वर्णमयीं ताम्रमयीं वा सूर्यमूर्तिं पूर्वविधिना संस्थाप्य गृहस्थगुरुरिति वदति–"ॐ अर्हं सूर्योऽसि, दिनकरोऽसि, तमोऽपहोऽसि, सहस्रकिरणोऽसि,–जगच्चक्षुरसि, प्रसीद (प्रसन्नो भूत्वेत्यर्थः) अस्य कुलस्य तुष्टिं पुष्टिं प्रमोदं कुरु कुरु स्वाहा" इत्यादिसूर्यमन्त्रं उच्चरन्, मातृपुत्रयोः पूर्वसूर्यं दर्शयेत् । ततो माता गुरुं प्रणमति, गुरुश्च आशीर्वादं ददाति, यथा–"सर्वसुरासुरवंद्यः, कारयिता सर्वधर्मकार्याणां । भूयात् त्रिजगच्चक्षुः, मङ्गलदस्ते सपुत्रायाः ॥ १ ॥" इति ॥ ततो मातापितरौ षष्ठे दिवसे "धम्मजागरिअं" धर्मेण

कुलधर्मेण लोकधर्मेण वा जाता जागरिका धर्मजागरिका=रात्रौ धर्मजागरणं तां कुर्वन्ति। ततः एकादशे दिवसे व्यतिक्रान्ते=गते सति, पुनः "निव्वत्तिए असुइजम्मकम्मकरणे" निर्वर्तिते=कृते, अशुचीनां=अशौचवतां जन्मकर्मणां प्रसवव्यापाराणां=नालच्छेदनादीनां करणे। "संपत्ते–बारसाहे दिवसे"–संप्राप्ते द्वादशाख्यदिवसे, अथवा द्वादशानां अह्नां समाहारो द्वादशाहं, तस्य दिवसो येन द्वादशाहः पूर्यते। तत्र "विउलं असणपाणखाइमसाइमं उवक्खडाविंति" मातापितरौ विपुलं=विस्तीर्णं परिघलं, अशन १ पान २ खादिम ३ स्वादिमं ४ चतुर्विधमपि आहारं उपस्कारयतोः=रसवतीं निष्पादयतः उपस्कारयित्वा च। ततः किं कृत्वा, कीदृशौ सन्तौ मातापितरौ किं कुर्वाते ?, तत्राह—

मित्तनाइनिययसयणसंबंधिपरिजणं नाए य खत्तिए अ आमंतेइ, आमंतित्ता तओ पच्छा ण्हाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगल्लाइं पवराइं वत्थाइं परिहिया अप्पमहग्घाभरणालंकियसरीरा भोअणवेलाए भोअणमंडवंसि सुहासणवरगया तेणं मित्तनाइनिययसंबंधिपरिजणेणं नायएहिं खत्तिएहिं सद्धिं तं विउलं असणपाणखाइमसाइमं आसाएमाणा विसाएमाणा परिभुंजेमाणा परिभाएमाणा एवं वा विहरंति ॥ १०४ ॥

व्याख्या–"मित्तनाइनियय" मित्राणि=सुहृदः १, ज्ञातयः=सजातीयाः मातृपितृभ्रात्रादयः २, निजकाः=

स्वकीयाः पुत्रादयः ३, स्वजनाः पितृव्यादयः ४, सम्बन्धिनः=श्वशुरपुत्रश्वशुरादयः ५, परिजनो=दासीदासादिः ६, "नाएयखत्तिए"त्ति "उसभसामिसयणिज्जगा" ऋषभादितः पट्टानुपूर्व्यागताः तान् आमन्त्र्य=आकार्य, ततः स्नातौ कृतबलिकर्माणौ कृतकौतुकमंगलप्रायश्चित्तौ, भोजनवेलायां भोजनमंडपे सुखासनवरगतौ तेन मित्रज्ञातिनिजकसम्बन्धिपरिजनेन ज्ञातक्षत्रियैश्च सार्धं तत् विपुलं चतुर्विधं आहारं "आसाएमाणा" आ–ईषत्, स्वादयन्तौ बहु च त्यजन्तौ इक्षुखण्डादिवत्, "विसाएमाणा" विशेषेण=आधिक्येन स्वादयन्तौ अल्पमेव त्यजन्तौ खर्जूरादिवत्, "परिभुंजेमाणा" परि=सामस्त्येन, उपभुञ्जानौ अल्पमपि अत्यजन्तौ भोज्यम्, "परिभाएमाणा" परिभाजयन्तौ=अन्योन्यं यच्छन्तौ स्वाद्यम्, एवं मातापितरौ विहरतः, ततः कीदृशौ जातौ ?, तत्राह—

जिमिअभुत्तुत्तरागयाऽवि अ णं समाणा आयंता चोक्खा परमसुईभूआ तं मित्तनाइनियगसयणसंबंधिपरिजणं नायए खत्तिए य विउलेणं पुप्फवत्थगंधमल्लालंकारेणं सक्कारिंति संमाणिंति सक्कारिता संमाणित्ता तस्सेव मित्तनाइनियगसयणसंबंधिपरियणस्स नायाणं खत्तिआण य पुरओ एवं वयासी ॥ १०५ ॥

व्याख्या–"जिमिअभुत्तुत्त" जिमितौ=भुक्तवन्तौ भुक्तोत्तरकालं=भोजनोत्तरकालं आगतौ उपवेशनस्थाने

इति गम्यम्, "समाणत्ति" सन्तौ, पुनः कीदृशौ ?। आचांतौ=शुद्धोदकेन कृतशौचौ, चोक्षौ=लेपसिक्थाद्यपनयनेन, अत एव परमशुचिभूतौ तान् मित्रादीन् प्रति एवं अवादिष्टाम्।

अत्र पुनः ग्रन्थान्तरानुसारेण भोजनविच्छित्तिं प्राह—

मांड्यउ उत्तंग तोरणमांडवउ, तुरतनवउ बेसवानउ आंगणउ तेतउ नीलरतनतणउ। सखरामांड्या आसण, बैसतां किसी विमासण। आगइं मुंकी सोनानी आडणी, ते किम जायइ छांडणी। उपरि सोनाना थाल, अत्यंतघणुं विसाल। विचमे चोसठ्ठ वाटकी, लगार नही जातिकाटकी। गंगोदक दीधा, थालक चोलानइ हाथ पवित्र कीधा। सगली पांति बैठी, तितरइ प्रीसणहारी पइठी। ते केहवी ? सोल शृंगार सज्या, बीजा काम त्यज्या। हाथनी रूडी, विहुंबांहेखलकइ चूडी। लघलाघवी कला, मन कीधा मोकला। चित्तनी उदार अतिघणी दातार। दउलती हाथ, परमेसर देजे तेहनो साथ। धसमसती आवी, सगलांरइ मनभावी। पहिलुं फल हलि प्रीसइ, सगलांरा हीयां हीसइ। पाका आंबानी कातली, ते बूराखंडसुं भरी अनइ वली पातली। पाका केला, ते वली खांडसुं कीधा भेला। सखराकरणा, तेवली पीला वरणा। नीली नारंगी रंगइ दीसती सुरंगी। नीकोली रायणि, प्रीसी भाइणी। दाडिमनी कली, खातां पूजइ रली। निमजानेइ अखोड, खातां पूजइ कोड। द्राखने विदाम, केई कागदी केई साम। सिलेमानी खारिकनइ खजुर, ते परीस्या भरपूर नालेरनी गिरी, मालवी गुलसुंभरी। नींबू खाटा नइ मीठा, एहवा तो कदे न दीठा। चारोली नइ

पिसता, लोक जीमइ हसता। वली सेलडी ने सदा फल, ते पिण प्रीस्या परिघल। हिव पकवान आणइ ते केहवा, वखाणइ सतपुडा खाजा तुरतना ताजा, सद्‌ला नइ साजा, मोटा जाणे प्रासादना छाजा। पछे प्रीस्या लाडू, जाणे नान्हा गाडू। कुण कुण ते नाम, जीमतां मन रहे ठाम। मोतियालाडू, दालिआलाडू, सेवियालाडू, कीटीरालाडू, नांदउलिरालाडू, तिलना लाडू, मगरीयालाडू, झगरीयालाडू, सिंहकेसरीयालाडू। वली बीजा आण्या पकान्, जीमतां वाधइ मुखनो वान्। कुण कुण जात नवी नवी भाति, दहीवडा, गुंदवडा, फीणा, सफरासोट, माहे नही खोट। पातली सेव, प्रीसी रूडी टेव। तरताऊ घेवर, तल्या गुंद, कुंडलाकृत जलेबी, सीरा लापसी, मीठो मगद, आछोमालनिगद खांडरो चूरमो, साकरनो चूरमो,॥ पछे प्रीसी दालि, ते जीमीयइ विचालि। ते कुण कुण भेद, सांभलतां उपजै उमेद। सुगंधसालि, सुवर्णसालि, धोलीसालि, रातीसालि, पीलीसालि, सुद्धसालि, कौमुदीसालि, कलमसालि, कुंकणीसालि, देवजीरसालि, रायभोगसालि, मीठी सालि, साठी चोखा, अखंडचोखा, निवली खांड्या, सबली छड्या, हलुये हाथ सोख्या, नखवती वीण्या, उत्तम स्त्री ओख्या, सुघडस्त्री साख्या, सुजाणस्त्री उतार्‌या। एहवा अणीयाला सुगंध सरस फरहरा कूर प्रीस्या॥ वली दालि प्रीसी पणि ते कुण कुण अनइ केहवी ?—मंडोरा मुंगनी दालि, काबिली चिणानी दालि, गुजराती तूयरनी दालि, उडदनी दालि, झालरनी दालि, मटरनी दालि, वरणइ पीयली, परिणामइ सीयली॥ वली परिघल घी प्रीस्या पणि ते केहवा ?—आजना ताव्या गाइना घी मजीठवरणा घी, सुरहा घी, नाकपेय

घी, सदा आदेय घी ॥ हिवि पोली प्रीसी पणि ते केहवी ?–आछी पोली, घीमांहि झबोली, फुंकरी मारी फलसई जाइ, एक वीसनउ एक कोलीयुं थाइ ॥ हिवै सालणा प्रीस्या पिण ते केहवा ?–नीलीछमकाई डोडीना सालणा, टिंडोरांना सालणा, तिंडसीना सालणा, चीभडांना सालणा, कोहलांना सालणा, कंकोडांना सालणा, कारेलांना सालणा, करमदांना सालणा, कालिंगडांना सालणा, केलांना सालणा, आरीयांना सालणा, तूरीयांना सालणा, मुंठकचरना सालणा, खरबूजांना सालणा, मोगरीना सालणा, नींबूयांना सालणा, आंबोलियांना सालणा, वाल्होलना सालणा, वली चउलांनी फलीना सालणा, सरघूनी फलीना सालणा, सांगरीना सालणा, काचरीना सालणा, आमलांना सालणा, कयरना सालणा, फूलना सालणा, फोगना सालणा, नीलीमरिचना सालणा, नीली पींपरिना सालणा, राईता सालणा, खाटा सालणा, खारा सालणा, मीठा सालणा, गल्या सालणा, तल्या सालणा, वघाख्या सालणा, धुंगाख्या सालणा, छमकाया सालणा ॥ वली प्रीसी भाजी तेऊपर सहुको राजी, ते कुण कुण ?–सरसवनी भाजी, सोयांनी भाजी, मूलांनी भाजी, वथुयानी भाजी, चिणांनी भाजी, चीयलिनी भाजी, चंदलेवानी भाजी, मेथीनी भाजी ॥ हिवै वडा आवइ ते केहवा ?–मरिचाला वडा, तल्या वडा, कोरा वडा, कांजीरा वडा, घोलवडा, भुंगारी दालिरा वडा, उडदांरी दालिरा वडा, घणइ घणि घोलिभीना, घणि तेल सीना, मरिचांरा घणुं चमत्कार, अत्यंत सुकमार, हाथलीधा उछलतइ, मुंहडै घाल्यां तुरत गलइ, घणुं स्युं ? खर्गना देव देवी पणि खावानइ टलवलइ हिवे पलेव आवे

पणि ते केहवी ?—चोखानी पलेव, ज्वारिनी पलेव, बाजरीनी पलेव, हलदिया पलेव, पिंपलीया पलेव, सुंठिया-पलेव, सयडकिया पलेव ॥ हिवै भोजनवीचि, पीवाना पांणी आवइ, पणि ते केहवा ?—साकरना पाणी, दाखना पाणी, खांडना पाणी, गंगाना पाणी, पालर पाणी, कर्पूरवास्या पाणी, एलचीवास्या पाणी, ठाढा हीम सीतल पाणी ॥ हिवी दहीना घोल आवइ ते केहवा ?—गाइना दही, भइंसिना दही, सघरा दही, काठा जाम्या दही, मधुरा दही, सखरासजीरालास, लवणाजाडा घोल, तेहना भर्या कचोल । चाउलांसुं जीमतां थया रंगरोल ॥ वली सरवरा कोरा गरवा । भरी आण्या करवा, । मांहे घणी राई, जीमतां ढील नहीं काइ; उपरि जीरा लूणरु प्रतिवास, कारण हारी पणि खास ॥ हिवे चलूना पाणी आवे ते केहवा ?—केवडाना पाणी, काथाना पाणी, कर्पूरवास्या पाणी, पाडलवास्या पाणी, चंदनवास्या पाणी, एलचीवास्या पाणी, सुगंधपाणी, गंगोदकपाणी, तिणसूं चलू कीधा ॥ हिवै मुंछण दीजै ते केहवा ?—वांकडी सोपारीनी फाल, चिवली सोपारीनी फाल, ते पणि केसर कपूर वासित । वली त्रीखा लवंग, जावंत्री, जाइफल, मोटा डोडा, पाका नागरवेलना पांन, घणा आदरनइ मान । घणा गीतनै गांन, घणा ताननै मांन ॥ पछै भला वस्त्र पहिराया ते कुण कुण ?—देवदूष्य वस्त्र, रत्नकंबल वस्त्र, पांभडीवस्त्र खीरोदकवस्त्र, अटाण वस्त्र, खासा वस्त्र, अधोतरी वस्त्र, नरमा वस्त्र, सेला-वस्त्र, कर्पूरवस्त्र, मलमलवस्त्र, कसबीवस्त्र, जरवापवस्त्र, मुखमलवस्त्र, चीणी वस्त्र, बुलबुल च समा वस्त्र, मसंजर वस्त्र, कथीपावस्त्र, पाटू वस्त्र, टसरिया वस्त्र, सणियावस्त्र, भव्यरववस्त्र, नारीकुंजरप्रमुखं वस्त्र, पंचरंगीवागा

पहिराया ॥ वली काश्मीरकेसरना छांटणाकीधा। वली भला भला विलेपन सुगंध लगाया, बावना चंदन विलेपन कीधा, सुगंध अरगजा लगाया, वली सखरा चोआ चंपेल, फूलेल, केवडेल, जाई, जुई, कुंद, मचकुंद, चंपो, मरुयो, मोगरो, दमणो, केतकी, मालती प्रमुखना फूल पहिराया। पछै वली मुगट, तिलक, कुंडल, हार, दोर, वीरवलय, अंगद, बहिरखा, नवग्रही, मुंद्रडी, कंदोरा, हाथना हथसांकला, पगनी सांकलीप्रमुख पहिराया। एहवी कुटुंब साहम्मीनी भक्ति विच्छित्ति कीधी ॥

अथ मित्रादीनां अग्रे मातापितरौ किं अवादिष्टाम् ?, तत्राह—

पुव्विंपि णं देवाणुप्पिया ! अम्हं एयंसि दारगंसि गब्भं वक्कंतंसि समाणंसि इमे एयारूवे अब्भत्थिए चिंतिए जाव समुप्पज्जित्था—जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि गब्भत्ताए वक्कंते तप्पभिइं च णं अम्हे हिरण्णेणं वड्ढामो सुवण्णेणं धणेणं धन्नेणं रज्जेणं सावइज्जेणं जाव पीइसक्कारेणं अईव अईव अभिवड्ढामो, सामंतरायणो वसमागया य ॥ १०६ ॥ तं जया णं अम्हं एस दारए जाए भविस्सइ तया णं अम्हे एयस्स दारगस्स इमं एयाणुरूवं गुण्णं गुणनिप्फन्नं नामधिज्जं करिस्सामो वद्धमाणुत्ति, ता अज्ज अम्ह मणोरहसंपत्ती जाया, तं होउ णं अम्हं कुमारे वद्धमाणे नामेणं ॥ १०७ ॥

व्याख्या—"पुव्विंपि णं" भो देवानुप्रियाः! पूर्वमपि आवयोः एतस्मिन् दारके=बालके कुक्षौ गर्भस्थे सति अयं=एतादृशो अभ्यर्थितः। चिन्तितः मनोरथः समुत्पन्नोऽभूत्—यत्प्रभृति आवयोः एष दारकः कुक्षौ गर्भत्वेन व्युत्क्रान्तः, तत्प्रभृति आवां हिरण्येन वर्धावहे, सुवर्णेन वर्धावहे, धनेन वर्धावहे, धान्येन वर्धावहे, पुनः स्वापतेयद्रव्येण वर्धावहे, यावत्प्रीतिसत्कारेण अतीव वर्धावहे, सामन्तादयो राजानोऽपि वशं आगताः, ततो यदा आवयोरेष दारको जातो भविष्यति, तदा आवां एतस्य दारकस्य एतदनुरूपं गुण्यं गुणनिष्पन्नं पूर्वं व्याख्यातार्थं सार्थकं नाम करिष्यावः "वर्धमानः" इति। यतः सर्वैः प्रकारैः आवां वृद्धिं प्राप्तौ, ततः आवयोरस्य मनोरथसंप्राप्तिः जाता। ततो भवतु कुमारो वर्धमाननाम्ना, ततः श्रमणस्य भगवतो महावीरस्य मातापितरौ "श्रीवर्धमानः" इति नाम कुरुतः।

अथ भगवतः सार्थकं नामत्रयं कथयन्ति, तत्राह—

समणे भगवं महावीरे कासवगुत्ते णं, तस्स णं तओ नामधिज्जा एवमाहिज्जंति, तं जहा—अम्मापिउसंतिए वद्धमाणे, सहसंमुइआए समणे, अयले भयभेरवाणं परीसहोवसग्गाणं खंतिखमे पडिमाण पालगे धीमं अरइरइसहे दविए वीरिअसंपन्ने देवेहिं से नामं कयं 'समणे भगवं महावीरे' ॥ १०८ ॥

व्याख्या-"समणे भगवं" श्रमणो भगवान् महावीरः काश्यपगोत्रस्तस्य त्रीणि नामानि एवं व्याख्यायन्ते अधीयन्ते वा, तद्यथा-मातृपितृसत्कं नाम "वर्धमानः" इति १, "सहसंमुइआए समणे" सहभाविनी=समुदिता=रागद्वेषाभावः तया श्राम्यतीति श्रमणः तपोनिधिः, "श्रमू च खेदतपसोः" इति वचनात् २, तथा भयं=अकस्मात्, भैरवं=सिंहादिभयम्, तयोः विषये अचलः=निष्प्रकम्पः, तद्गोचरत्वात्, परीषहाः क्षुत्पिपासादयो द्वाविंशतिः, उपसर्गाः दिव्यादिभेदेन षोडश तान् क्षान्त्या क्षमते, न तु असमर्थतया यः सः। पुनः प्रतिमानां-भद्रादीनां एकरात्रिक्यादीनां वा तदभिग्रहविशेषाणां वा पालकः पारगो वा। पुनः धीमान्=ज्ञानचतुष्टयवान्। पुनः अरतिरत्योः सहः=समर्थः, तन्निग्रहे क्षमः। पुनः द्रव्यं तत्तद्गुणभाजनं, "द्रव्यं च भव्यं" इति वचनात् रागद्वेषरहित इति वृद्धाः। पुनः वीर्यसम्पन्नः-स्वस्य सिद्धिगमने निश्चितेऽपि तपश्चरणादौ प्रवर्तनात्, अतो 'महावीरः' इति नाम देवैः कृतम् ३। अथ भगवान् किंचिन्न्यूनाष्टवर्षीयो जातः। परं कीदृशः?। दिव्यरूपधारी, ज्ञानत्रयसहितः, धवलदन्तपङ्क्तिः, पद्मगर्भगौरवर्णः, सुगन्धश्वासोच्छ्वासः, देवमनुष्यैः परिवृतः, एकदा बालैः सह तिंदूसकेन क्रीडाविशेषेण लोके "आमलकीक्रीडा" इति प्रसिद्धेन अरमत, तत्स्वरूपं चेदं-बहवो बाला मिलन्ति, तेषां मध्ये एको वामदं[क्ष]गात् अधस्तात् लकुटं बलात् निक्षिपति, अन्ये च सर्वेऽपि द्रुतं समीपवर्तिवृक्षस्योपरि चटन्ति, एकः तं लकुटं लात्वा आगत्य वृक्षाधोवर्तिधूलिपुञ्जोपरि रोपयित्वा, वृक्षोपरि चटिताऽचटितानां मध्ये, यो हस्तेन पादौ स्पृशति, स हारितः। अथ उपरिचटितानां मध्ये कोऽपि अकस्मात्

उत्तीर्य तं लकुटं गृह्णाति, तदा तद्ग्राहको जितः। प्राक्तनः पुनः हारितः, जेता च हारितपृष्ठे [छौ] चटित्वा सङ्केतितं स्थानं याति। एतस्यां क्रीडायां जायमानायां सत्यां, इन्द्रेण सभामध्ये प्रोक्तम्—"भो देवाः! अद्य श्रीमहावीरस्य बालत्वेऽपि यादृक् निर्भीकत्वं अनन्तबलवत्त्वं च वर्तते, तादृक् कुत्रापि नास्ति।" ततः एको देवः तद्वचनं अश्रद्दधानो बालरूपं विधाय क्रीडनवृक्षं महाभुजङ्गमेन थुडे अवेष्टयत्, तं च महाभयंकरं फूत्कुर्वन्तं सर्पं दृष्ट्वा सर्वेऽपि बाला नष्टाः। श्रीमहावीरेण निर्भीकेन गृहीत्वा रज्जुवत् दूरे उल्लालयित्वा निक्षिप्तः। पुनः सुरश्चिन्तयति—"इत्थं जिनो न भीतः, अन्यथा भापयिष्यामि।" अत्रान्तरे श्रीवीरः तिंदूसकक्रीडां करोति। तत्र सोऽपि सुरो बालरूपं कृत्वा कुमारैः समं क्रीडति। सुरबालो हारितो रममाणः। ततस्तं वाहनीकृत्य चचाल पृष्ठोपरि चटितो भगवान्। ततः स सुरबालो वेतालरूपं कृत्वा, सप्ततालदेहमानः सन् भगवद्भापनार्थं वर्धितुं प्रवृत्तः। ततो भगवता ज्ञानेन तत्स्वरूपं ज्ञात्वा वज्रमयमुष्टिप्रहारो दत्तः। ततो मायी देवः आरारटिं [मुक्त्वा] कृत्वा, शशकवत् शरीरं संकुच्य पतितः। ततो भगवद्बलादिगुणरञ्जितः चलत्कुण्डलाभरणो भूत्वा भगवन्तं प्रणम्य, करकमलयुगलं संयुज्य एवं अस्तावीत्—"हे स्वामिन्! यादृशस्त्वं सभामध्ये इन्द्रेण वर्णितः ततोऽप्यधिकतरः प्रत्यक्षं दृष्टः, वारं वारं निजापराधं क्षामयामि।" इति पादौ प्रणम्य देवः स्वस्थानं गतः॥

इति आमलकीक्रीडाकरणम् [रमणम्]॥

अथ भगवतो लेखशालाकरणं कथ्यते। तस्य विस्तारस्त्वयम्—शुभदिवसे शुभमुहूर्ते पूर्वं मातापितरौ

समस्तमित्रज्ञातिकुटुंबादीन् भोजनवस्त्राभरणकेसरछंटनतिलककरणादिना सत्कुर्वाते। पुनः लेखशालिकानां दानार्थं, वरसोला साकर खांड अखोड गुंदवडा द्राक्ष खारिक टोपरा खजूर सिंघोडा अखोड बदाम चारउली धारवी फलहलि नालेर सोपारी सोनाना खडिया रत्नावरतणां रूपानी पाटी फूलफल पानना–बीडाप्रमुख-नानाविधवस्तूनि सार्धं लात्वा, भगवतः स्नानं कारापयित्वा, प्रधानवस्त्राणि परिधाप्य, स्वर्णरत्नाभरणानि मुकुटकुण्डलतिलकादीनि यथास्थाने परिधाप्य, हस्तिस्कन्धे भगवन्तं निवेश्य, मस्तकधृतछत्रवीज्यमानचामर-गीयमानगीतदीयमानदानवाद्यमानविविधनिर्घोषनृत्यनाटकादिविच्छित्त्या उपाध्यायशालाद्वारदेशे भगवान् आनीतः। तावता पाठकब्राह्मणेन चिन्तितम्–"इतः पूर्वं मम शालायां सामान्यछात्राः पठनाय आगताः, परं अद्य तु राज–पुत्रो मम समेतः।" ततो गर्वेणोच्चैः आसनं स्थापयित्वा स्वयं विविधवस्त्राणि दिव्याभरणानि परिधाय उपविष्टः। अत्रान्तरे इन्द्रस्य आसनं चलाचलं जातं। किंवत्?। वातकम्पितध्वजावत्, पुनः समुद्रसंक्रान्तचन्द्रवत्, पुनः मत्तहस्तिकर्णवत्, पुनः कुलटाचित्तवत्, पुनः मूषातापितहेमवत्। ततः इन्द्रः अवधिना ज्ञात्वा आगत्य, प्रभोः पुरः प्राह–"अहो! मात्रादीनां मोहः!, भगवन्तो हि विनापि अध्ययनं विद्वांसो भवन्ति। नहि आम्रे तोरणबन्धनं, नापि सुधाया माधुर्यकरणं, नच सरस्वत्या भाले [भोलामींडी] पाठनं, नहि चन्द्रस्य धवलीकरणं सम्भवति। परं भवन्तु मातापित्रोः मनोरथाः पूर्णाः।" ततः इन्द्रो वृद्ध-ब्राह्मणरूपं कृत्वा, श्रीभगवन्तं उच्चैः योग्यासने उपवेश्य, उपाध्यायमनोगतान् सन्देहान् भगवन्तं

पृच्छति स्म । भगवांश्च तेषां उत्तराणि दत्तवान्, उपाध्यायश्च भगवता कथ्यमानानि उत्तराणि शृण्वन् एवं अचिन्तयत्–"अहो ! एते व्याकरणसन्देहा मम बाल्यावस्थात आरभ्य अभूवन्, परं न केनापि पण्डितेन भग्नाः, अनेन बालेनापि भग्नाः! । अहो ! एतस्य बालस्य ज्ञानम् ! ।" इति आश्चर्ये क्रियमाणे इन्द्र उपाध्याय-पण्डितं प्राह–"भो ! एनं बालमात्रं त्वं मा जानीहि । अयं त्रिभुवनस्वामी ज्ञानत्रयसहितः सर्वज्ञप्रायो महावीरदेवः । इन्द्रेण दशधा सूत्राणि पृष्टानि–संज्ञासूत्रं १, परिभाषासूत्रं २, विधिसूत्रं ३, नियमसूत्रं ४, प्रतिषेधसूत्रं ५, अधिकारसूत्रं ६, अतिदेशसूत्रं ७, अनुवादसूत्रं ८, विभाषासूत्रं ९, निपातसूत्रं १०। भगवता च एतेषां दशानां व्याकरणसूत्राणां प्रत्युत्तराणि दत्तानि । तदा तत्र स्थाने "जैनेन्द्रव्याकरणं" जातं । ततः उपाध्यायविप्रेणापि भगवान् श्रीमहावीरदेवो गुरुः कृतः । ततो विप्रस्य बहुदानादिना सन्तोषं कृत्वा, श्रीभगवान् तथैव विच्छित्त्या स्वगृहे गतः । इन्द्रोऽपि भगवन्तं प्रणम्य स्वस्थानं गतः ॥ इति लेखशालाकरणम् ॥

अथ प्रभोः विवाहकरणम् ॥ अथ यदा भगवान् यौवनावस्थां प्राप्तः भोगसमर्थो जातः, तदा प्रसेनजित् सामन्तभूपस्य पुत्रीं यशोदां मातापितृभ्यां परिणायितः । तया सह सुखं अनुभवतो भगवतः प्रियदर्शनानाम्नी पुत्री जाता । सा निजभागिनेयस्य जमालेः परिणायिता । भगवतश्च अष्टाविंशतिवर्षाणि जातानि तदवसरे मातापितरौ देवलोकं गतौ, आवश्यकाभिप्रायेण चतुर्थं देवलोकं । श्रीआचाराङ्गाभिप्रायेण श्रीपार्श्वनाथस्य श्रावकत्वात् अच्युतं द्वादशं देवलोकं गतौ इति ॥

अथ भगवतः पितृप्रमुखकुटुम्बस्य नामानि प्राह, तत्राह—

समणस्स णं भगवओ महावीरस्स पिआ कासवगुत्ते णं, तस्स णं तओ नामधिज्जा एवमाहिज्जंति, तं जहा—सिद्धत्थे इ वा, सिज्जंसे इ वा, जसंसे इ वा ॥ समणस्स णं भगवओ महावीरस्स माया वासिट्ठी गुत्तेणं तीसे तओ नामधिज्जा एवमाहिज्जंति, तं जहा—तिसला इ वा, विदेहदिन्ना इ वा, पीइकारिणी इ वा ॥ समणस्स णं भगवओ महावीरस्स पितिज्जे सुपासे, जिट्ठे भाया नंदिवद्धणे, भगिणी सुदंसणा, भारिया जसोआ कोडिन्ना गुत्तेणं ॥ समणस्स णं भगवओ महावीरस्स धूआ कासवी गुत्तेणं, तीसे दो नामधिज्जा एवमाहिज्जंति, तं जहा—अणोज्जा इ वा, पियदंसणा इ वा ॥ समणस्स णं भगवओ महावीरस्स नत्तुई कोसिअ (कासव) गुत्तेणं, तीसे णं दुवे नामधिज्जा एवमाहिज्जंति, तं जहा—सेसवई इ वा, जसवई इ वा ॥ १०९ ॥

व्याख्या—"समणस्स णं भगवओ" भगवतः पिता काश्यपगोत्रीयः, तस्य त्रीणि नामानि—सिद्धार्थः १,

श्रेयांसः २, यशस्वान् [यशस्वी] ३, १ ॥ भगवतो माता वासिष्ठगोत्रीया, तस्या अपि त्रीणि नामानि—
त्रिशला १, विदेहदिन्ना २, प्रीतिकारिणी ३, च २ ॥ पुनः भगवतः पितृव्यः सुपार्श्वः ३, ज्येष्ठो भ्राता नंदि-
वर्धनः ४ ॥ भगवतो भगिनी सुदर्शना जमालेः माता ५ ॥ भगवतो भार्या यशोदा कौण्डिन्यगोत्रीया ६ ॥
भगवतः पुत्री काश्यपगोत्रीया, तस्याः नामद्वयम्—अनुज्ञा १, प्रियदर्शना २ च, सा जमालेः दत्ता ७ ॥ भगवतो
दौहित्री कौशिकगोत्रीया, तस्याः नामद्वयम्—शेपवती १, यशोवती २, च ८ ॥

अथ भगवान् कीदृशो जातः ?, तत्राह—

समणे भगवं महावीरे दक्खे दक्खपइन्ने पडिरूवे आलीणे भद्दए विणीए नाए नायपुत्ते नायकुलचंदे विदेहे विदेहदिन्ने विदेहजच्चे विदेहसूमाले तीसं वासाइं विदेहंसि कट्टु अम्मा-पिऊहिं देवत्तगएहिं गुरुमहत्तरएहिं अब्भणुन्नाए समत्तपइन्ने ॥

व्याख्या—"समणे भगवं" श्रमणो भगवान् महावीरः, दक्षः कलासु, दक्षा=प्रतिज्ञा तन्निर्वाहकतया यस्य प्रतिज्ञा यस्य सः । प्रतिरूपः—तद्गुणसङ्क्रमणे दर्पणत्वात्, आलीनः सर्वगुणैराश्लिष्टो गुप्तेन्द्रियो वा । भद्रकः सरलः भद्रो—वृषभः तद्वत् गच्छतीति भद्रगो भद्रदो वा—सर्वकल्याणदायित्वात्, विनीतो विनयवान्, सुशिक्षितो वा जितेन्द्रियो वा । विनयो हि इन्द्रियजयः तत्सहितश्च शास्त्रं पठितुं अर्हति, तस्य च पाठकाः प्रमादिन्ः,

ततश्च सर्वश्रियो भवन्ति इति, ज्ञातः=प्रख्यातः। ज्ञातः-सिद्धार्थः तस्य पुत्रो ज्ञातपुत्रः। न च पुत्रमात्रेण काचित् सिद्धिः स्यात्, अतः आह-ज्ञातकुलचन्द्रः, विदेहः=विशिष्टदेहः, प्रथमसंहननसंस्थानोपेतत्वात्। अथवा 'दिहींक् उपलेपे' विगतो देहो लेपो यस्मात् स, विदेहो भोगेष्वपि वैराग्यवत्त्वात्, विदेहदिन्ना=त्रिशला तस्याः अपत्यं वैदेहदिन्नः। संस्कृते तु विदेहदत्तायाः अपत्यं वैदेहदत्त इति तस्या एव औरसपुत्रत्वाभिधानाय आह- "विदेहजच्चे त्ति"। "भीमो-भीमसेन" इति न्यायात्। विदेहा=त्रिशला तस्यां जाता विदेहजा अर्चा=शरीरं यस्य सः विदेहजार्चः। अथवा विदेहो=अनंगः कन्दर्पः स यात्यः=पीडयितव्यो यस्य सः विदेहयात्यः। विशेषेण दिह्यते=लिप्यते पापैर्जीवोऽस्मिन् इति विदेहो=गृहवासः, तत्रैव सुकुमारो न पुनः व्रते, कालचक्राद्युपसर्ग-सहने तु वज्रकर्कशत्वात्। त्रिंशद्वर्षाणि गृहवासे कृत्वा=स्थित्वा, तत्र भगवान् अष्टाविंशतिवर्षान्ते माता-पित्रोः देवलोकं गतयोः। आवश्यकानुसारेण चतुर्थदेवलोकं। आचाराङ्गानुसारेण तु श्रीपार्श्वनाथस्य श्रावक-त्वात् अनशनेन द्वादशदेवलोकं प्राप्तयोः। प्रतिज्ञां पूर्णां ज्ञात्वा, दीक्षायां उद्यतो जातः, तदा नन्दिवर्धनेन ज्येष्ठभ्रात्रा प्रोक्तम्-"हे बन्धो! क्षते क्षारं मा क्षेप्सीः! पित्रोर्विरहार्तस्य मम दुःसहः तव विरहः इति स्थीयतां त्वया वर्षद्वयम्।" ततः पितृस्थानीयज्येष्ठभ्रातृनन्दिवर्धनस्य आग्रहेण भावमुनीभूय, वस्त्रालङ्कार-विभूषितोऽपि वैराग्यात् निरवद्यवृत्तिः सन् तस्थौ। ततो गुरुर्ज्येष्ठभ्रातृनन्दिवर्धनः महत्तरकाश्च राज्यप्रधानाः तैः अभ्यनुज्ञातो=व्रतार्थं दत्तानुमतिः "समत्तपइण्णो" समाप्ता=पूर्णीभूता प्रतिज्ञा-"नाहं समणो होहं

अम्मापिअरंमि जीवंते" इत्यादिरूपा यस्य सः। एतत्समये स्वामिवृद्धभ्राता नन्दिवर्धनो राज्ये प्रधानैः स्थापितः। अथ यदा भगवान् जातोऽभूत् तदा लोके एवं प्रसिद्धिः जाताऽभूत्–यत्–"एष महावीरः चतुर्दश-स्वप्नसूचितो जातः इति हेतोः अयं चक्रवर्ती भविष्यति।" ततः एनां प्रसिद्धिं श्रुत्वा, स्वस्वमातापितृभिः स्वस्वकुमारपुत्राः श्रेणिकचण्डप्रद्योतनादयो भगवत्सेवार्थं मुक्ता अभूवन्। भगवति च गृहस्थावासे घोरानुष्ठानं कर्तुं प्रवृत्ते सति 'नायं चक्रवर्ती भविष्यति' इति स्वगृहे गताः।

अथ भगवतो घोरानुष्ठानेऽपि क्रियमाणे वर्षमेकं जातम्। एतावता एकोनत्रिंशत्तमे वर्षे व्यतीते किं जातम्?, तत्राह—

पुणरवि लोगंतिएहिं जीअकप्पिएहिं देवेहिं ताहिं इट्ठाहिं कंताहिं पिआहिं मणुन्नाहिं मणामाहिं उरालाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं मिअमहुरसस्सिरीआहिं हिययगमणिज्जाहिं हिययपल्हायणिज्जाहिं गंभीराहिं अपुणरुत्ताहिं वग्गूहिं अणवरयं अभिनंदमाणा य अभिथुव-माणा य एवं वयासी ॥ ११० ॥ "जय जय नंदा! जय जय भद्दा! भद्दं ते, जय जय खत्तिअवरवसहा!, बुज्झाहि भगवं लोगनाहा!, सयलजगजीवहियं पवत्तेहि धम्मतित्थं, हियसुहनिस्सेयसकरं सव्वलोए सव्वजीवाणं भविस्सइत्तिकट्टु जयजयसद्दं पउजंति ॥ १११ ॥

व्याख्या—"पुणरवि लोगंतिएहिं त्ति" पुनरपि—इति विशेषद्योतने, एकं तावत् स्वयमेव समासप्रतिज्ञः, विशेषतश्च लोकान्तिकदेवैः बोधित इति गम्यं, तृतीयाया अन्यथा अनुपपत्तेः। लोकान्ते भवाः लौकान्तिकाः=ब्रह्मलोकवासिनः सारस्वताद्या एकान्तसम्यग्दृष्टयः, स्थानाङ्गवृत्तौ लोकान्ते वा उदयिकभावलोकावसाने भवा अनन्तरभवे मुक्तिगमनात् इत्युक्तत्वात् एकावतारिणः। क्वचित्तु संग्रहण्यवचूर्णौ तु एते च नियमेन अष्टमे भवे सिद्ध्यन्ति इत्युक्तम्। न च भगवान् तेषां उपदेशमपेक्षते, स्वयंबुद्धत्वात्। जीतं=अवश्यमाचरणीयं कल्पितं=कृतं यैस्ते, जीतकल्पिताः, जीतेन वा अवश्यंभावेन कल्प—इति कर्तव्यता जीतकल्पः, सः एषां अस्तीति जीतकल्पिकाः तैः, विभक्तिव्यत्ययात् ते लोकांतिकाः देवाः ताभिः इष्टादिभिः पूर्वं व्याख्यातार्थाभिः वाग्भिः=वाणीभिः गंभीराभिः=महाध्वनिभिः अपुनरुक्ताभिः। क्वापि—"मिअ १ महुर २ गंभीर ३ गाहिआहिं" इति पाठः, तत्र दुरवधार्यमप्यर्थं श्रोतॄन् ग्राहयन्ति याः ताः ग्राहिकाः, ततः पदचतुष्टयस्य कर्मधारयः। अनवरतं भगवन्तं अभिनन्दयन्तः, समृद्धिमन्तं आचक्षाणाः, अभिष्टुवन्तश्च गुणौ कीर्तनं कुर्वन्त, एवं अवादिषुः=व्यजिज्ञपयन्—"हे भगवन्! त्वं जय जय! जयं लभस्व, संभ्रमे द्विस्त्वम्। "नंदत्ति" नन्दति—समृद्धो भवति इति 'नंद आमन्त्रणे' दीर्घत्वं प्राकृतत्वात्। अथवा जय त्वं जगन्नन्द=भुवनसमृद्धिकारक! एवं "जय जय! भद्दा" नवरं—भद्रः=कल्याणवान् कल्याणकारी वा, भद्रं ते भवतु! इति विशेषः। हे क्षत्रियवर वृषभ! क्षत्रियाणां मध्ये अत्यन्तश्रेष्ठ, हे भगवन्! त्वं बुद्ध्यस्व! भो लोकनाथ! धर्मतीर्थं=धर्मप्रधानं तीर्थं प्रवचनं प्रवर्तय!। किंविशिष्टं

धर्मतीर्थम्?। हितं=पथ्यान्नवत् १, सुखं=शर्म शुभं वा, कल्याणं निःश्रेयसं=मोक्षः तस्य [तेषां] करं। केषां?। सर्वलोके सर्वजीवानां सूक्ष्मादीनां रक्षोपदेशदानादिना भविष्यति" इति कथयित्वा जयजयशब्दं प्रयुञ्जते ॥

अथ भगवान् लोकान्तिकदेवप्रतिबोधात् पूर्वमपि कीदृश आसीत्?, तत्राह—

पुव्विंपि णं समणस्स भगवओ महावीरस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे आभोइए अप्पडिवाई नाणदंसणे हुत्था, तए णं समणे भगवं महावीरे तेणं अणुत्तरेणं आभोइएणं नाणदंसणेणं अप्पणो निक्खमणकालं आभोएइ, आभोइत्ता चिच्चा हिरण्णं, चिच्चा सुवण्णं, चिच्चा धणं, चिच्चा रज्जं, चिच्चा रट्ठं, एवं बलं वाहणं कोसं कुट्ठागारं, चिच्चा पुरं, चिच्चा अंतेउरं, चिच्चा जणवयं, चिच्चा विपुलधणकणगरयणमणिमुत्तियसंखसिलप्पवालरत्तरयणमाइयं संतसारसावइज्जं, विच्छड्डइत्ता, विगोवइत्ता, दाणं दायारेहिं परिभाइत्ता, दाणं दाइयाणं परिभाइत्ता ॥ ११२ ॥

व्याख्या—"पुव्विंपि णं" श्रमणस्य भगवतो महावीरस्य पूर्वमपि, मनुष्योचितात् गृहस्थधर्मात् विवाहादेः अनुत्तरं सर्वोत्कृष्टं परमावधेः किंचिन्न्यूनं आभोगिकं=आभोगप्रयोजनं अप्रतिपाति—आकेवलोत्पत्तेः अनिवर्तकं अव-

धिज्ञानं अवधिदर्शनं च आसीत्। तेन कारणेन भगवान् तेन अनुत्तरज्ञानदर्शनेन आत्मनो निष्क्रमणकालं=दीक्षासमयं "आलोएइ" विलोकयति, विलोक्य च किं कृतवान् ?, तत्राह—"आभोइत्ता चिच्चा हिरण्णं" विलोकयित्वा=त्यक्त्वा, हिरण्यादीनां पदानां व्याख्या पूर्ववत् ज्ञेया। "विच्छड्डइत्ता" विशेषेण त्यक्त्वा, विगोप्य गुप्तं सत् प्रकाशीकृत्य दानातिशयात्, अथवा विगोप्य 'गुपि गोपन-कुत्सनयोः', कुत्सनीयमेतदस्थिरत्वात् इत्युक्त्वा, दानं दीयते इति दानं=धनं, दायाय=दानार्थं आऋच्छन्ति इति 'अचि' प्रत्यये दायाराः=याचकाः तेभ्यः "परिभाइत्ता" परिभाज्य,—विभागेन दत्त्वा, अथवा दातृभिः स्वपुरुषैः दानं परिभाज्य—दापयित्वा, दायो=भागोऽस्ति येषां दायिकाः=गोत्रिकाः तेभ्यो दानं=धनं विभागं परिभाज्य=विभागशो दत्त्वा। तत्र भगवता वर्षं यावत् कियत् दानं दत्तम् ?, तत्राह—प्रातः भोजनकालं यावत्। "ज्ञाता—वृत्तिः" अनुसारेण तु प्राभातिकं भोजनकालं यावत् प्रहरद्वयादिकमित्यर्थः। "चत्वारिंशत् वल्लैः एकः सुवर्णः स्यात्" इति श्रीविक्रमादित्यप्रबन्धे, "अष्टौ हाटककोटयः" इति अत्र व्याख्यातत्वात्। एका सुवर्णानां कोटिः अष्टौ च लक्षाः प्रत्यहं दीयन्ते "वरह वरं वरह वरं" इति वरवरिका, त्रिकचतुष्कचत्वरादिषु स्थानेषु घोष्यते, यश्च यत् याचते तत् सर्वं इन्द्रादेशात् देवा आनीय पूरयन्ति। वार्षिकदानमानं यथा—त्रीणि शतानि अष्टाविंशतिश्च कोटयः अशीतिर्लक्षाश्च सुवर्णानाम्।

अथ यदा भगवान् दीक्षायां उद्यतो जातः, तदा नन्दिवर्धनो राजा इन्द्राद्याश्च देवाः कीदृशं दीक्षामहो-

त्सवं कुर्वन्ति ?, तमाह-पूर्वं नन्दिवर्धनो राजा अष्टोत्तरसहस्र १००८ सुवर्णमय १ रूप्यमय २ मणिमय ३ सुवर्णरूप्यमय ४ सुवर्णमणिमय ५ रूप्यमणिमय ६ स्वर्णरूप्यमणिमय ७ मृन्मयान् ८ कलशान् निष्क्रमणाभिषेकसामग्रीनिमित्तं कारयन्ति, एवं इन्द्रा अपि आभियोगिकदेवपार्श्वात् सुवर्णादिकलशान् तावन्तः अष्टधा कारयन्ति, ते दिव्याः कलशाः नन्दिवर्धनकारितकलशेषु दिव्यानुभावेन प्रविष्टाः, ततोऽतीव नन्दिवर्धनकलशाः शोभन्ते स्म । ततो नन्दिवर्धनो राजा भगवन्तं स्वर्णसिंहासने पूर्वाभिमुखं निवेश्य, देवानीतक्षीरोदनीरैः तीर्थमृत्तिकाभिः सर्वकषायैः च अभिषेकं करोति । एवं इन्द्राद्या अपि देवाः तैः स्वकीयैः कलशैः अभिषेकं कृतवन्तः । ततो देवा भृङ्गारदर्पणादीनि हस्ते गृहीत्वा भगवदग्रे जयजयशब्दं प्रयुञ्जानाः तिष्ठन्ति । ततो देवसम्बन्धिचन्दनेन गात्रं अनुलिप्तं, कल्पवृक्षपुष्पमालाः परिधापिताः, एकं श्वेतं वस्त्रं परिधापितं यस्य मूल्यं लक्षम् । ततो मुकुटतिलककुण्डलकेयूरहारकटककटिसूत्रमुद्रिकादिसर्वाभरणैः सर्वं शरीरं विभूषितम् ॥ ततो नन्दिवर्धनेन राज्ञा चन्द्रप्रभानाम्नी शिबिका आनीय स्थापिता, सा कीदृशी ? इत्यादि । अनेकस्तम्भशतसन्निविष्टा मणिकनकविचित्रा पञ्चाशद्धनुर्दीर्घा, पञ्चविंशतिधनुर्विस्तीर्णा, षट्त्रिंशद्धनुरुच्चा । एतस्याः शिबिकाया मध्ये देवानीतशिबिका प्रविष्टा । तेन दिव्यानुभावेन अतीव सुन्दरा जाता । तस्याः शिबिकाया मध्ये स्वर्णसिंहासनं स्थापितं । तत्र श्रीभगवान् पूर्वाभिमुखः उपविष्टः, प्रभोर्दक्षिणतः कुलमहत्तरिकाहंसलक्षणं पटशाटकमादाय तिष्ठति । वामपार्श्वे प्रभोः अम्बधात्री व्रतोपकरणमादाय तिष्ठति । पृष्ठे च एका स्फारसारशृङ्गारा तरुणी-स्त्री

धवलछत्रं मस्तके धृत्वा तिष्ठति। ईशानकोणे च एका स्त्री गङ्गानीरभृतं भृङ्गारं गृहीत्वा तिष्ठति। आग्नेयकोणे तु एका स्त्री कनकदण्डमणिविचित्रं व्यजनं लात्वा भद्रासने निषीदति। ततः पूर्वं तां शिबिकां यावता नन्दिवर्धनराजादिष्टाः पुरुषाः उत्पाटयन्ति॥ अत्रान्तरे शक्रः शिबिकाया दाक्षिण्यां उपरितनीं बाहामुत्पाटयति १ एवं ईशानेन्द्र उत्तरां उपरितनीं बाहां २। चमरेन्द्रोऽधस्तनीं दाक्षिणात्यां बाहां ३। बलीन्द्रोऽधस्तनीं उत्तरां बाहां ४। शेषा भवनपति ५ व्यन्तर ६ ज्योतिष्क ७ वैमानिकेन्द्राः यथायोग्यं शिबिकां उत्पाटयन्ति॥ ततः शक्रेशानवर्जाः तां शिबिकां उद्वहन्ति, शक्रेशानौ तु चामराभ्यां वीजयतः। तदवसरे देवा दुन्दुभिं ताडयन्ति स्म। पञ्चवर्णानि पुष्पाणि सर्वत्र विक्षिपन्ति स्म॥ आगच्छद्भिः देवैः विविधैर्गगनतलं कीदृशं शोभते स्म?। यथा कुसुमितं वनखण्डं १ यथा वा शरत्काले पद्मसरः २। अथवा यथा अतसीवनं कुसुमितं ३ अथवा यथा चम्पकवनं तिलकवनं पुष्पितं नन्दनवनं वा शोभते। पुनरपि स्त्रियो निजनिजकर्तव्यं-स्वकीय-स्वकीयव्यापारांश्च मुक्त्वा तुर्यनिर्घोषं श्रुत्वा, कौतुकोत्सुका विह्वलाः सत्यो भगवद्विलोकनाय समागताः। पुनः भगवतो दीक्षामहोत्सवविच्छित्तिं प्राह-भगवति शिबिकारूढे प्रव्रज्यायै गन्तुं प्रवृत्ते, तत्प्रथमतया रत्नमयानि अष्टौ मङ्गलानि पुरतः क्रमेण प्रस्थितानि। तथाहि-स्वस्तिकः १ श्रीवत्सः २ नंद्यावर्तः ३ वर्धमानः ४ भद्रासनं ५ कलशः ६ मत्स्ययुग्मं ७ दर्पणः ८ च। तदनन्तरं आलोकदर्शनीयानि क्रमेण पूर्णकलश-भृङ्गारचामराणि। ततो गगनतलमुल्लिखन्ती लहलहायमाना वैजयन्ती। तदनंतरं विमलवैडूर्यरत्नमयं प्रलम्ब-

मानकोरण्टमाल्यदामशोभितं चन्द्रमण्डलसदृशं छत्रं। तदनन्तरं मणिकनकविचित्रं पादपीठसहितं सिंहासनं। तदनन्तरं १०८ आरोहणरहिताः तुरङ्गमाः। तदनन्तरं १०८ प्रधानकुञ्जराः। तदनन्तरं १०८ घण्टापताका-नान्दीघोषनानाप्रकारप्रहरणैः भृताः रथाः। तदनन्तरं १०८ सुन्दररूपवन्तः पुरुषाः। तदनन्तरं हयानीकं, ततो गजानीकं, ततो रथानीकं, ततः पदात्यनीकं, ततः आकाशतलं उल्लिखन् लघुपताकासहस्रमण्डितो योजन-सहस्रप्रमाणो रत्नमयो महान्=उच्चैः महेन्द्रध्वजः। ततो बहवः खड्गग्राहाः कुन्तग्राहाः, पीठग्राहाः=फलकग्राहाः, ततो हासकारकाः=नर्मकारकाः, कान्दर्पिकाः=उग्रभोगा राजन्याः, क्षत्रियाः=राजानो माण्डलिकाः मन्त्रिणो=महामन्त्रिणः श्रेष्ठिनः सार्थवाहा देवा देव्यश्च सर्वेऽपि अग्रे गच्छन्तो भगवतो जयजयशब्दं प्रयुञ्जते। भगवतः पृष्ठे हस्तिस्कन्धारूढकोरण्टमाल्यदामसहितेन ध्रियमाणछत्रेण विराजमानः श्वेतचामराभ्यां वीज्यमानः चतुरङ्गसेनापरिवृतो नन्दिवर्धनो राजा अनुगच्छति ॥ इति ॥

अथ श्रीभगवान् कदा कया विच्छित्त्या नगरमध्ये निस्सरति ?, तत्राह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जे से हेमंताणं पढमे मासे पढमे पक्खे मग्गसिरबहुले, तस्स णं मग्गसिरबहुलस्स दसमीपक्खेणं पाईणगामिणीए छायाए पोरिसीए अभिनिवट्टाए पमाणपत्ताए सुव्वएणं दिवसेणं विजएणं मुहुत्तेणं चंदप्पभाए सीआए

सदेवमणुआसुराए परिसाए समणुगम्ममाणमग्गे, संखियचक्कियनंगलिअमुहमंगलियवद्धमाणपूसमाणघंटियगणेहिं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणामाहिं उरालाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं मिअमहुरसस्सिरीआहिं वग्गूहिं अभिनंदमाणा अभिथुवमाणा य एवं वयासी ॥ ११३ ॥—

व्याख्या—"तेणं कालेणं" तस्मिन् काले तस्मिन् समये यो हेमन्तस्य ऋतोः प्रथमो मासः प्रथमः पक्षो मार्गशीर्षबहुलः। एतावता मार्गशीर्षमासस्य कृष्णदशमीदिवसे "पाईणगामिणीए छायाए" पूर्वदिग्गामिन्यां छायायां "पोरिसिए" पौरुष्यां पाश्चात्यायां—चतुर्थप्रहरे अभिनिर्वृत्तायां जातायां प्रमाणप्राप्तायां कोटिप्राप्तायां अग्रभागप्राप्तायां, सुव्रते दिवसे विजये मुहूर्ते चन्द्रप्रभायां शिबिकायां आरूढ इति गम्यम्। सह—देवैर्मनुजैः असुरैः वर्तते या सा सदेवमनुजासुरा तया परिषदा=जनसमुदायेन समनुगम्यमानं=अनुव्रज्यमानं भगवन्तं "अग्गेत्ति" अग्रे भगवतोऽग्रभागे शंखिकाद्यैः परिवृतं। तत्र शङ्खिकाः—चन्दनगर्भशंखहस्ता मङ्गलकारिणः शंखवादका वा, चाक्रिकाः=चक्रप्रहरणहस्ताः कुंभकारतैलिकादयो वा, लाङ्गलिका—गलावलम्बितस्वर्णादिमयहलाकारधारिणो भट्टविशेषाः कर्षका वा, मुखमाङ्गलिकाः—मुखे मङ्गलं येषां ते मुखमाङ्गलिकाः=मङ्गलपाठकाः, वर्धमानाः स्कन्धारोपितनराः, पुष्यमाणा—मागधाः पुरोहितस्थानीया मान्या वा, घण्टया चर-

न्तीति घाण्टिका, राउलिकाः तेषां गणाः तैः, ताभिः इष्टादिविशेषणादिभिः वाग्भिः अभिनन्दते अभिष्टु-
वन्तश्च प्रक्रमात् कुलमहत्तरादिषु स्वजना एवं अवादिषुः, किं ? तदाह—

जय जय नंदा !, जय जय भद्दा !, भद्दं ते खत्तियवरवसहा ! अभग्गेहिं नाणदंसणचरित्तेहिं, अजियाइं जिणाहि इंदियाइं, जिअं च पालेहि समणधम्मं, जियविग्घोऽवि य वसाहि तं देव ! सिद्धिमज्झे, निहणाहि रागद्दोसमल्ले तवेणं धिइधणिअवद्धकच्छे, मद्दाहि अट्ठकम्मसत्तू झाणेणं उत्तमेणं सुक्केणं, अप्पमत्तो हराहि आराहणपडागं च वीर ! तेलुक्करंगमज्झे, पावय वितिमिरमणुत्तरं केवलवरनाणं गच्छ य मुक्खं परं पयं जिणवरोवइट्ठेणं मग्गेणं अकुडिलेणं हंता परीसहचमूं, जय जय खत्तिअवरवसहा ! वहूइं दिवसाइं वहूइं पक्खाइं वहूइं मासाइं, वहूइं उऊइं वहूइं अयणाइं वहूइं संवच्छराइं, अभीए परीसहोवसग्गाणं, खंतिखमे भयभेरवाणं, धम्मे ते अविग्घं भवउ त्तिकट्टु जयजयसद्दं पउंजंति ॥ ११४ ॥

व्याख्या—"जय जये"त्यादि प्राग्वत्। अभग्नैः—निरतिचारैः ज्ञानाद्यैः उपलक्षितः त्वं अजितानि इन्द्रियाणि—जय=वशीकुरु जितं च सात्म्यापन्नं श्रमणधर्मं पालय, जितविघ्नोऽपि च त्वं हे देव ! निवस—वस सिद्धिमध्ये,

अपि च समुच्चये। अत्र सिद्धिशब्देन श्रमणधर्मस्य वशीकारः तस्य मध्यं-लक्षणया प्रकर्षः। तत्र त्वं निरन्तरायं तिष्ठ इत्यर्थः। अत एव रागद्वेषमल्लौ तपसा बाह्याभ्यन्तरेण साधकतमेन निजहि=निगृहाण। कीदृशः सन्?। "धिइधणिअबद्धकच्छे" धृतौ=सन्तोषे धैर्ये वा धणिअं-अत्यर्थं बद्धकक्षः सन्। पुनः अष्टकर्मशत्रून् मर्दय, केन ध्यानेन आर्तरौद्रनिषेधाय आह-"उत्तमेणं" उत्तमसा-तमोऽतीतेन शुक्लेन अप्रमत्तः सन् गृहाण च। आराधना जयपताका हे वीर! त्रैलोक्यमेव रङ्गः-मल्लाक्षवाटकः तन्मध्ये प्राप्नुहि। वितिमिरं-अनुत्तरं केवलज्ञानं गच्छ च मोक्षं-परमं पदं। केन, किं कृत्वा?। ऋषभादिजिनोक्तेन मार्गेण रत्नत्रयरूपेण सरलेन=अक्षेपेण मोक्षप्रापकत्वात्, हत्वा परीषहचमूं। जय क्षत्रियवरवृषभ! जात्यक्षत्रियो हि परचमूं हन्ति, स्वौजसा बहूनि दिवसानि बहून् पक्षान्, बहून् मासान्, बहून् ऋतून् हेमन्तादीन् बहूनि अयनानि-षण्मासानि दक्षिणायनोत्तरायणरूपाणि, बहूनि वर्षाणि यावत् अभीतः परीषहोपसर्गेभ्यः भैरवभयानां क्षान्त्या क्षमो न तु असामर्थ्यादिना, तव धर्मे प्रस्तुतसंयमे अविघ्नं=विघ्नाभावो भवतु "त्ति कट्टु" इति उच्चार्य जयजयशब्दं, प्रयुञ्जते स्वजना एव। पुनरपि श्रीभगवान् कया विच्छित्त्या नगरमध्ये निर्गच्छति, तत्राह—

तए णं समणे भगवं महावीरे नयणमालासहस्सेहिं पिच्छिज्जमाणे २, वयणमालासहस्सेहिं अभिथुव्वमाणे २, हिययमालासहस्सेहिं उन्नंदिज्जमाणे २, मणोरहमालासहस्सेहिं विच्छिप्प-

माणे २, कंतिरूवगुणेहिं पत्थिज्जमाणे २, अंगुलिमालासहस्सेहिं दाइज्जमाणे २, दाहिणहत्थेणं बहूणं नरनारीसहस्साणं अंजलिमालासहस्साइं पडिच्छमाणे २, भवणपंतिसहस्साइं समइच्छमाणे २, तंतीतलतालतुडियगीयवाइअरवेणं महुरेण य मणहरेणं जयजयसद्दघोसमीसिएणं मंजुमंजुणा घोसेण य पडिबुज्झमाणे २, सविड्ढीए सव्वजुईए सव्वबलेणं सव्ववाहणेणं सव्वसमुदएणं सव्वायरेणं सव्वविभूईए सव्वविभूसाए सव्वसंभमेणं सव्वसंगमेणं सव्वपगईहिं सव्वनाटएहिं सव्वतालायरेहिं सव्वोरोहेणं सव्वपुप्फगंधमल्लालंकारविभूसाए सव्वतुडियसद्दसन्निनाएणं ॥

व्याख्या–"तए णं समणे" ततश्च श्रमणो भगवान् महावीरः कीदृक् सन् नगरमध्ये निर्गच्छति ?। नयनमालाः–श्रेणिस्थितजननेत्रपङ्क्तयः तासां सहस्रैः प्रेक्ष्यमाणः, एवमग्रेऽपि। वचनमालासहस्रैः=वदनमालासहस्रैः वा अभिष्टूयमानः, हृदयमालासहस्रैः उन्नन्द्यमानः–उत् प्राबल्येन समृद्धिं नीयमानो जय जीव नन्देत्यादिपर्यालोचनात्। मनोरथमालासहस्रैः अस्याज्ञाकरा भवाम इत्यादिभिः जनविकल्पैः–विशेषेण स्पृश्यमानः कान्तिरूपगुणैः हेतुभिः प्रार्थ्यमानो–भर्तृतया=स्वामितया वा स्त्रीपुरुषजनेनाभिलष्यमाण इत्यर्थः। अङ्गुलिमालासहस्रैः "दाइज्जमाणत्ति" दर्श्यमानो बहूनां नरनारीसहस्राणां अञ्जलिमालासहस्रैः प्रतीच्छन्=गृह्णन्,

भवनपङ्क्तिसहस्राणि समतिक्रामन्=उल्लङ्घयन्। तं आदीनां गीते गीतमध्ये यत् वादितं वादनं तेन यो रवः, तेन। कीदृशेन?। मधुरेण=मनोहरेण। पुनः कीदृशेन?। जयशब्दघोषमिश्रितेन। पुनः कीदृशेन?। मञ्जुमञ्जुना, न ज्ञायते कोऽपि किमपि जल्पतीति। अतिकोमलेन वा घोषेण च लोकानां स्वरेण प्रतिबुध्यमानः=सावधानीभवन्। पुनः सर्वर्द्ध्या–समस्तछत्रादिराजचिन्हरूपया, द्युतिः आभरणादीनां, युतिर्वा इष्टवस्तुयोगतः तया, सर्वबलेन–बलं=हस्त्यश्वरथपदातिरूपं चतुरङ्गसैन्यं, सर्ववाहनेन वाहनं=करभवेसरशिबिकाशकटयानादिसमुदायः। "सव्वसमुदएणं" पौरादिमेलापकेन सर्वादरेण सर्वौचित्यकृत्यकरणेन, सर्वविभूत्या विभूतिः=संपत् तया, सर्वविभूषया विभूषा=शोभा तया, सर्वसंभ्रमेण संभ्रमः=प्रमोदकृतौत्सुक्यम्, सर्वसङ्गमेन संगमः=स्वजनमेलापकः, सर्वप्रकृतिभिः–प्रकृतयोऽष्टादश नैगमादिनगरवास्तव्यलोकास्ताभिः, सर्वनाटकैः–नाटकादीनि सुगमानि, सर्वतालाचरैः सर्वावरोधेन सर्वपुष्पगन्धमाल्यालङ्कारविभूषया। व्याख्या पूर्ववत्। सर्वतूर्यशब्दसनिनादेन सर्वतूर्यशब्दानां मीलनेन यः संगतो निनादो=महाघोषः तेन। अल्पेष्वपि ऋद्ध्यादिषु सर्वशब्दप्रवृत्तिः दृष्टा इत्यत आह—

महया इड्ढीए महया जुईए महया बलेणं महया वाहणेणं महया समुदएणं महया वरतुडियजमगसमगप्पवाइएणं संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कदुंदुहिनिग्घोसनाइयरवेणं

कुंडपुरं नगरं मज्झंमज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव नायसंडवणे उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छइ ॥ ११५ ॥ उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुअइ, ओमुइत्ता सयमेव पंचमुट्ठियं लोअं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय एगे अवीए मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए ॥११६॥

व्याख्या–"महया इड्ढीए" इत्यादि॥ व्याख्या प्राग्वत्। महत्या ऋद्ध्या, महत्या द्युत्या, महता बलेन, महता वाहनेन, महता समुदयेन, महता वरतूर्ययमगसमगप्रवादितेन। पुनः शंखपणवपटहभेरिझल्लरिखरमुखिदुन्दुभिनिर्घोषनादितरवेण कुंडपुरं नगरं "मज्झंमज्झेणं" मध्ये भूत्वा निर्गच्छति, निर्गत्य च यत्रैव ज्ञातखण्डवनं=उद्यानं यत्रैव अशोकवरपादपः तत्रैव उपागच्छति, उपागत्य च अशोकवरपादपस्य अधस्तात् शिविकां "ठावेइ" स्थिरीकरोति, स्थिरीकृत्य च शिविकातः प्रत्यवरोहति=अवतरति, उत्तरतीत्यर्थः। उत्तीर्य च, स्वयमेव आभरणमाल्यालङ्कारं उन्मुञ्चतीत्यर्थः। तच्चाभरणं कुलमहत्तरिका हंसलक्षणपटशाटकेन प्रतीच्छति, उन्मुच्य च, स्वयमेव पञ्चमुष्टिकं [एकया मुष्ट्या कूर्चस्य, चतसृभिस्तु शिरस इति पञ्चमौष्टिकं] लोचं करोति।

शक्रश्च हंसलक्षणपटशाटकेन केशान् प्रतीच्छय=गृहीत्वा क्षीरसमुद्रे प्रवाहयति। तस्मिन् प्रस्तावे शक्रेण वाद्यनिर्घोषो वाद्यमानः स्थापितः। अङ्गुलीमूर्ध्वीकृत्य 'निरोल' इति प्रोक्तं च, तदा भगवान् सिद्धानां नमस्कारं कृत्वा, सर्वसावद्ययोगं समुच्चरति, तथाहि-"करेमि सामाइअं सव्वं सावज्जं जोगं पच्चक्खामि" इत्यादि॥ अत्र "भंते" इति पदं नोच्चरति, तस्य गुरोः अभावात्, तथैव कल्पत्वाच्च। केन तपसा ?। अपानकेन चतुर्विधाहारेण षष्ठेन तपसा उत्तरफाल्गुनीनक्षत्रे च चन्द्रेण सह योगं गते सति। "एगं देवदूसमादाय" एकं देवदूष्यवस्त्रं दिव्यवस्त्रविशेषं इन्द्रेण भगवतः स्कन्धे अर्पितं, तत् आदाय=गृहीत्वा, एको रागद्वेषसहायाभावात् अद्वितीय एकाक्येव। न पुनर्यथा ऋषभः चतुःसहस्र्यां राज्ञां, मल्लिपार्श्वौ त्रिभिस्त्रिभिः शतैः, वासुपूज्यः षट्शतैः, शेषा एकोनविंशतितीर्थकराः सहस्रैः समं प्रव्रजिताः। मुण्डो भूत्वा द्रव्यतः शिरःकूर्चलुञ्चनेन भावतः क्रोधाद्यपनयनेन अगारात्=गृहात् निष्क्रम्येति शेषः। अनगारतां=साधुतां आगमोक्तविधिना प्रव्रजितः=श्रमणीभूतः। भगवता यदा चारित्रं गृहीतं तदानीमेव भगवतः चतुर्थं मनःपर्यवज्ञानं समुत्पन्नं। ततः इन्द्रादयः सर्वेऽपि देवाः श्रीमहावीरं वन्दित्वा, नन्दीश्वरद्वीपे यात्रां कृत्वा स्वस्थानं गताः। श्रीभगवानपि बन्धुवर्गं आपृच्छय विहृतः, बन्धुवर्गोऽपि भगवन्तं वन्दित्वा, विषण्णचित्तः सन् निवृत्य स्वगृहे गतः॥

॥ इति श्रीमहावीरदेवस्य दीक्षाकल्याणकम् ॥

अथ भगवान् ततो विहृत्य, जनमार्गं त्यक्त्वा पल्लीमार्गेण मुहूर्तशेषे दिवसे कुम्मारग्रामसमीपे रात्रौ कायोत्सर्गे स्थितः। तत्र एको गोपो दिवसे वृषभान् वाहयित्वा, सन्ध्यायां एतत्पार्श्वे चरन्तु इति कृत्वा गोदोहार्थं ग्रामे गतः, प्रत्यागतश्च तान् अपश्यन् स्वामिनं प्राह–"क्व गता मे वृषभाः ब्रूहि।" श्रीभगवान् मौनत्वात् न ब्रूते, ततोऽन्यत्र रात्रौ ते गवेषिताः, परं न दृष्टाः क्वापि, पुनः भगवत्समीपं आगतः, तदवसरे वृषभा अपि अन्यत्र भ्रान्त्वा भ्रान्त्वा, भगवत्समीपं आगताः गोपेन दृष्टाः। तदा गोपेन कथितम्–"रे पाखण्डिन्! त्वया ज्ञातं अहमेतान् वृषभान् लात्वा यास्यामि! इति प्रच्छन्नं त्वया वृषभा एतावन्तं कालं स्थापिता अभूवन्।" ततो गोपो रुषा[रोषा]क्रान्तो दामनं गृहीत्वा, यावत् ताडनार्थं उद्यतः, तावता अवधिना ज्ञात्वा इन्द्र आगत्य, तं स्तम्भयामास, प्रोक्तवांश्च–"रे! सिद्धार्थराजपुत्रं अद्य प्रव्रजितं त्वं न जानासि?" इति दूरीकृतः। ततः इन्द्रो भगवन्तं प्राह–"हे स्वामिन्! तव प्राकृतं कर्म प्रभूतं अशुभं वर्तते, तेन तव द्वादशवर्षाणि यावत् उपसर्गा भविष्यन्ति। तावन्तं कालं अहं तान् उपसर्गान् वारयन् तव वैयावृत्यं करोमि।" प्रभुः प्राह–"भो इन्द्र! न एअं भूयं, न एअं भविस्सइ, न एअं भवइ, जन्नं अरिहंता देविंदस्स वा असुरिंदस्स वा निस्साए केवलनाणं उप्पाडिंसु सिद्धिं वा वच्चंति।" अत्रावसरे–"मारणान्तोपसर्गस्य वारणार्थं बिडौजसा। सिद्धार्थः स्थापितः स्वामि मातृष्वस्रेयव्यन्तरः॥ १॥" इत्युक्तत्वात्, सिद्धार्थनामा व्यन्तरो भगवतो मातृष्वस्रेयः, अन्तर्वाच्यादौ तु स्वामिपितृव्यः सिद्धार्थ इत्युक्तमस्ति, स समागत्य इन्द्रं प्राह–"अहं श्रीभगवतो वैयावृत्यं करोमि, ममादेशं

देहि।" ततः इन्द्रेणोक्तम्–"त्वया भगवान् न मोच्यः।" इत्युक्त्वा कौशिकोऽपि [इन्द्रोऽपि] स्वस्थानं गत इति। द्वितीयदिने कोल्लाकसंनिवेशे बहुलब्राह्मणगृहे भगवता गृहस्थकांस्यपात्रे पायसेन मधुघृतसंयुक्तेन पारणं कृतं। प्रथमपारणकं गृहस्थपात्रे परमान्नेन चकारेति आगमिकान्तर्वाच्ये। प्रथमपारणकं सपात्रधर्मज्ञापनार्थं पात्रे एव विहितवान् इति कल्पकिरणावल्यां। देवैश्च पञ्चदिव्यानि प्रकटितानि चेलोत्क्षेपः १ गन्धोदकपुष्पवृष्टिः २ दुन्दुभिनादः ३ आकाशे अहो दानमिति घोषणं ४ सार्धद्वादशकोटिसुवर्णवसुधारावृष्टिश्चेति ५। इयं वसुधारावृष्टिः उत्कृष्टा, जघन्या तु सार्धद्वादशलक्षसुवर्णवृष्टिः ज्ञेया। ततो भगवान् विहृत्य, मोराकसंनिवेशं गतः। तत्र सिद्धार्थवयस्यो दुइज्जंतकनामा कुलपतिः मिलितः, भगवता पूर्वाभ्यासात् बाहुः प्रसारितः, तेनापि कुशलवार्ता पृष्टा। तत्र एकरात्रिं स्थित्वा, प्रभाते विहारकरणे दुइज्जंतकेन प्रोक्तम्–"हे स्वामिन्! अष्टौ मासान् शेषकाले अन्यत्र भ्रान्त्वा वर्षाकाले अत्र स्थेयमिति" भगवताऽप्यङ्गीकृतं। ततो भगवान् शेषे कालेऽन्यत्र विहृत्य तत्र मोराकसंनिवेशे आगत्य एकस्य कस्यचित् कुलपुत्रस्य [तृणगृहे] उटजे प्रभुः स्थितः, दैवयोगेन मेघवृष्टिः न जाता, तेन गावः तृणानि भक्षयन्ति, भगवान् न निवारयति, ततः कुलपुत्रस्य अप्रीतिः जाता। तदा भगवता अभिग्रहपञ्चकं गृहीतम्। अप्रीतिस्थाने न स्थेयं १, कायोत्सर्गे स्थातव्यं २, मौनं कार्यं ३, पाणिभोजिना भाव्यं ४, गृहस्थस्य विनयो न कार्यः ५ चेति। श्रीभगवद्गात्रं च इन्द्रेण सुरभिचन्दनादिना अनुलिप्तमासीत् दीक्षासमये, स च गन्धो मासचतुष्टयेनापि न गतः। तेन

तद्गन्धाकृष्टैः भ्रमरैः गात्रं कदर्थितं। सुन्दररूपत्वात् तरुणस्त्रीभिः भर्तृत्वेन प्रार्थना कृता, तरुणपुरुषैः स्वामित्वेन प्रार्थना कृता॥ एवं श्रीभगवतः चतुरो मासान् साधिकान् यावत् अनुलोमप्रतिलोमा उपसर्गा जाताः॥

अथ श्रीभगवान् कीदृशो जातः ?, तत्राह—

समणे भगवं महावीरे संवच्छरं साहियं मासं जाव चीवरधारी होत्था, तेण परं अचेलए पाणिपडिग्गाहिए॥ समणे भगवं महावीरे साइरेगाइं दुवालस वासाइं निच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा उप्पज्जंति, तं जहा—दिव्वा वा माणुसा वा तिरिक्खजोणिआ वा, अणुलोमा वा पडिलोमा वा, ते उप्पन्ने सम्मं सहइ खमइ तितिक्खइ अहियासेइ॥११७॥

व्याख्या—"समणे भगवं" श्रमणो भगवान् महावीरः साधिकमासं संवत्सरं यावत् चीवरधारी दीक्षाग्रहणे वामस्कन्धे इन्द्रसमर्पितवस्त्रधारकः अभवत्। ततः साधिकमासवर्षात् ऊर्ध्वं अचेलको=वस्त्रविवर्जित आसीत्। कथमित्युक्ते संबन्धमाह—

भगवता यदा दीक्षा गृहीता तदा शक्रेण देवदूष्यवस्त्रं भगवतो वामस्कन्धे स्थापितम्। ततः पश्चात् भगवतः पितृमित्रः सोमदेवो विप्रो महादरिद्रः करद्वयं योजयित्वा दीनहीनवचनैः श्रीवीरम् इति विज्ञपयति स्म—

"हे कृपानाथ ! हे परदुःखप्रमाथ ! हे मम मित्रपुत्र ! हे दारिद्रलतालवित्र ! मम मूलतो विज्ञप्तिं अवधारय, मां च निस्तारय, यो मम सहायो, मयैव सह जातो, मयैव समं वर्धितः, परिणयनसमयेऽपि मत्तः पूर्वं मम पत्नीं परिणीतवान्, किं बहुना ?, तनुच्छायेव स्वकर्मप्रकृतिरिव मम केटकं क्षणमपि न अमुञ्चत् । स मया धनार्जननिमित्तं परदेशप्रस्थि[त]तिसमये भणितः—

"रे दालिद्द ! विअक्खण !, वत्ता एक सुणिज्ज । अम्ह देसंतरि-चल्लिया, तुं थिर घरे रहिज्ज ॥ १ ॥"

ततो मया सह आजन्मप्रीतिं अमुञ्चन् दरिद्रसहचरः प्राह—

"पडिवन्नउ गिरुआं-तणउ अविहड जाण सुजाण । तुम्ह देसंतरि चल्लिआ तओ अम्हे अग्गेवाण ॥ २ ॥"

ततो मया निवारितोऽपि मया समं एव ( तिष्ठति )—

"गङ्गां योऽवतरत् तथैव यमुनां यो नर्मदां शर्मदां, का वार्ता शरदम्बुमज्जनविधौ यश्चार्णवं तीर्णवान् ।
सोऽस्माकं चिरमाश्रितो यमधुना श्रीवीर ! विश्वाधिप !, त्वद्दानाम्बुसरित्प्रवाहलहरीमग्नोऽद्य सम्भाव्यते ॥१॥"

ततः तत्प्रभावात् परदेशे प्रतिगृहं प्रतिजनं भिक्षां याचमानं प्रत्यक्षतोऽग्रे वर्तमानमपि मां न कोऽपि पश्यति । यदुक्तम्—

"दीसंति जोगसिद्धा, अंजणसिद्धा-वि केवि दीसंति । दारिद्दजोगसिद्धा पासे वि ठिआ न दीसंति ॥ १ ॥

पुनरपि "रे दारिद्र्य! नमस्तुभ्यं, सिद्धोऽहं तव दर्शनात्। अहं सर्वत्र पश्यामि, न मां पश्यति कश्चन ॥ २॥"

इति हेतोः उद्यमे कृतेऽपि परदेशे बहुपरिभ्रमणे भाग्यहीनोऽहं न किमपि धनं लब्धवान्। यथा गतः तथैवाऽऽगतः। ततो दारिद्र्यपुरस्सरं स्वगृहे प्रविशन्तं मां मम भार्या अनार्या दुर्निवार्या यष्टिमादाय सम्मुखं धाविता, निष्ठुरकठोरवचनैः प्राह च–"रे निर्भाग्यशिरोमणे! रे आजन्मदारिद्र्य! रे दुर्भाग! रे निर्गुणनाथ! रे ढोलण! अहं त्वां धनं विना साक्षात् दारिद्र्यरूपं किं करोमि?, त्वया किमपि नानीतं, ममापि गृहे तव सहचरसांनिध्यात् "अन्नं नास्त्युदकं नास्ति, नास्ति गृहे युगन्धरी। शाकं च लवणं नास्ति, तन्नास्ति यच्च भुज्यते ॥१॥

एतादृशं स्वरूपं वर्तते। अपि च मम गृहे किमपि नास्ति, अतो मम गृहे दारिद्र्यमेव लहकति। यदुक्तम्—

'जसु घरि भइंसि न रींकइं पाडउ, जसु घरि बलद न दीसइ गाडउ।
जसु घरि नारि न चूडीखलकइ, तसु घरि दालिद लहरे लहकइ ॥ १ ॥'

अपि च धनेनैव मान्यता स्यात्, यदुक्तम्—

'धनैर्दुष्कुलीनाः कुलीनाः क्रियन्ते, धनैरेव पापात् पुनर्निस्तरन्ति।
धनिभ्यो विशिष्टो न लोकेऽपि कश्चित्, धनं चार्जयध्वं धनं चार्जयध्वम् ॥ १ ॥'

पुनः धनं विना जीवन्नपि मृत इव यतो—

"धनमर्जय काकुत्स्थ!, धनमूलमिदं जगत्। अन्तरं नैव पश्यामि, निर्धनस्य मृतस्य च ॥ १ ॥"

पुनरपि—

'पुत्ता य सीसा य समं विभत्ता, विसी देवाय य समं विभत्ता।
मुक्खातिरिक्खा य समं विभत्ता, मुआ दरिद्दा य समं विभत्ता' ॥ १ ॥

पुनः सा प्राह—"रे भाग्यहीन! श्रीवीरेण वार्षिकदाने दीयमाने सर्वेषां च दारिद्र्यदुःखप्रलयं विधीयमाने त्वं च परदेशे कथं गतः?। द्राक्षापचनसमये काकस्येव तव चञ्चुपाको जातः!। अथवा मेघे वर्षति त्वं नदीतटस्थजवासावनस्पतितुल्यो जातः!। अथवा रात्रौ दिवा मेघे वर्षति सत्यपि पलाशे पत्रत्रयमेव स्यात्! रे अनिष्ट! रे पापिष्ठ! रे पाण्डुरपृष्ठ!" इत्यादिभिः निष्ठुरवचनैः बहुभिः निर्भर्त्स्य, गलग्राहं तया गृहात् निष्कासितः। ततः—

"आगिइं दालिद् पाछइं दालिद दालिदचिहुंए पासे। पिंड्याणी मुंनइ मारणमांड्यउ तिण हुं आयउनासे ॥१॥"

इति हेतोः अनन्यगतिकत्वात् प्रव्रजितोऽपि कृपापरत्वाच्च ध्रुवं दास्यति। किंचिन्मम वीर इति विचार्य प्रतीतिं निर्धार्य तव समीपं समेतोऽस्मि। ततो श्रीमहावीर! त्वं मम दारिद्र्यं चूरय, मम मनोरथं पूरय। नच ज्ञेयं वार्षिकदानावसरे सर्वैः प्राप्तम्, त्वया किमपि कथं न प्राप्तम्? यतः— ॥१३२॥

"स्वामिन्! कनकधाराभिः, त्वयि सर्वत्र वर्षति। अभाग्यछत्रसंछन्ने मयि नायान्ति बिन्दवः?॥ १ ॥"

मया विचारितम्—

"रे मन! अप्पउ खंचकरि चिंता जालि म पाडि। फल तेतउ ही पामीयइ, जे तउ लिखउ निलाडि ॥ १ ॥"

पुनः किं जातं? एकं तव दानं न प्रासम्, प्रत्युत तद्व्यतिकरेण पत्न्या गृहात् निष्कासितश्च। यतः—

"त्वयि वर्षति पर्जन्ये, सर्वे पल्लविता द्रुमाः। अस्माकमर्कवृक्षाणां, पूर्वपत्रेषु संशयः ॥ १ ॥" इत्यादि-लेल्लिपल्लिवचनैः कृपार्द्रहृदयेन श्रीभगवतापि विचारितम्—'अहं निर्ग्रन्थः, मम पार्श्वे किमपि नास्ति, अदाने च इन्द्रादिसर्वलोकसमक्षं प्रार्थनाभङ्गः स्यात्, तद्भङ्गे च लघुता स्यात्। यतः—

"तणलहुअं तुसलहुअं तणतुसलहुयं च पत्थणालहुअं। तत्तो वि सो अ लहुओ, पत्थणभंगो कओ जेण ॥१॥"

पुनरपि—

"यान्तु यान्तु बत प्राणाः, अर्थिनिर्व्यर्थतां गते। पश्चादपि हि गन्तव्यं, क्व सार्थः पुनरीदृशः ॥ १ ॥" इत्यादि-शिष्टाचारविचारमाचरन् श्रीमहावीरदेवः कृपया चीवरार्धं विप्राय अदात्, अपरेषां च इति आज्ञापयत्—

"जां संपइ तां देहु धण, इण परिअक्खइ वीर। पितामित्त बांभणभणी, आधओ दीधओ चीर ॥ १ ॥"

---

१ "एमाइ दीणयावसगलंतनयणंसुधोयवयणेणं। तह तेण विन्नविज्जइ जह भिज्जइ वीयरागोऽवि ॥ १३ ॥ भगवयावि एवमायण्णिऊण समुच्छलियापरिकलियकारुन्नपुण्णचित्तेण भणियं—"भो भो देवाणुप्पिय! परिचत्तासेससंगोऽहं संपयं, तुमं च अणंतदोगच्चभरविहुरियसरीरो, अओ जइवि असारिच्छमेयं तहावि गिण्हसु इमस्स देवदूसस्स अद्धंति" इति ॥" (प्रा० महावीरचरित्रे)।

ततो विप्रः चीरार्धं लात्वा स्वगृहाय चलितः, द्वारसमीपे समागच्छन्तं सचीरं विप्रं दृष्ट्वा ब्राह्मणी हर्षिता सती समुत्थाय, सम्मुखं आगत्य करद्वयं योजयित्वा एवं अवादीत्–'हे प्राणनाथ ! हे मम जीवन ! हे कान्त ! हे सुभग ! मेघस्येव मार्गे दृश्यमाने त्वं समेतः, त्वां विना अहं–जलं विना मत्सीव टलवलन्ती आस्थां' इत्यादि-मृष्टविशिष्टवचनरचनाकथनपूर्वं अपूर्वरीत्या प्रीत्या स्नानमज्जनभोजनपानताम्बूलप्रदानसन्मानसुखशय्याशयन-भोगप्रमुखसुखोपचारैः उपचरितो भार्यया भृशं मुदं आदधानो गतः तूर्णकारसमीपं दशिकाबन्धार्थं । ततः तूर्णकारेणापि त्रुटितं न तादृक् [ भवति ] इति विचार्य, सोमविप्रस्य प्रोक्तम्–"रे विप्र ! एतस्य द्वितीयं खण्डमानय यथासन्धितं सत्, लक्षमूल्यं भावि । ततः तव मम च द्वयोः दारिद्र्यनाशः स्यात् ।" ततो विप्रः पश्चात् वलित्वा प्रवर्धमानलोभो वर्धमानस्वामिसमीपं आजगाम । परं पुनः याचने जातलज्जो विमृशति स्म–"कथं पुनर्याचे ? अतिलोभोऽपि पुंसां न युक्तः ।" अथ भगवानपि ज्ञास्यति–"अहो ! विप्रस्य लौल्यं, ततो मार्गणं न युक्तम्" इति मौनं कृत्वा स्थितः । न पुनः वाचा मार्गितं चीरार्धं लज्जया, यतः—

"लज्जा वारेइ मुहं, असंपया भणइ मग्गिरे मग्गि । दिन्नं मानकवाडं देहीति न निग्गया वाणी ॥ १ ॥"

एवं साधिकमासं वर्षं यावत् भगवतः पृष्ठमनुगच्छन्, दक्षिणवाचालासन्नसुवर्णवालुकानदीतटस्थतरुकण्टके विलग्नं देवदूष्यार्धं अग्रहीत् । भगवानपि सिंहावलोकनेन तत् अद्राक्षीत् । ममत्वेन इत्यन्ये १, स्थण्डिले पतितं अस्थण्डिले वा इत्यन्ये २, सहसात्कारेण इत्यपरे ३, शिष्याणां वस्त्रपात्रादि सुलभं भावि न वा इति

केचित् ४, कण्टके लग्नत्वात् स्वसन्ततेः कषायबाहुल्यात् कण्टकप्रायतां आकलय्य निर्ममतया पुनः न जग्राह। ततो विप्रोऽपि कृतकृत्यमात्मानं मन्यमानः संपूर्णमनोरथः तूर्णकारपार्श्वे खंडद्वयं सन्धयित्वा तूर्णकारस्यापि स्वेप्सितं दत्त्वा, स्वयं सोमविप्रो यावज्जीवं सुखी बभूव इति ॥

[ अयं सम्बन्धः कौतुकार्थं विस्तरतया लिखितोऽस्ति । नवाधिकवाचनायां वेलायां सत्यां वाच्यः, नो चेत् नहि । ]

तथा पाणिपतग्राहिकः-पाणिपात्रः, स्वामी हि सप्रावरणधर्मव्यवस्थापनार्थं यथा [देवदूष्यं] वस्त्रं गृहीतवान् । तथा प्रथमपारणकं सपात्रधर्मज्ञापनार्थं पात्रे एवाऽकरोत् "तेण परं अचेलए पाणिपडिगहिए" । [विहितवान्] ततःपरं पाणिपात्र इत्याम्नायः । श्रमणो भगवान् महावीरः साधिकानि द्वादशवर्षाणि नित्यं व्युत्सृष्टकायः-परिकर्मवर्जनात्, पुनः त्यक्तदेहः परीषहसहनात्, ये केचन उपसर्गा उत्पद्यन्ते दिव्या वा मानुष्या वा तिर्यक्संबंधिनो वा तान् सम्यक् सहते भयाभावेन, क्षमते क्रोधाभावेन, तितिक्षते दैन्यस्य अनवलम्बनेन, अध्यासयति अविचलकायतया । पुनः श्रीभगवान् दीक्षानन्तरं कीदृशो जातः?, तदाह—

तए णं समणे भगवं महावीरे अणगारे जाए, ईरियासमिए भासासमिए एसणासमिए आयाणभंडमत्तनिक्खेवणासमिए उच्चारपासवणखेलजल्लसंघाणपारिट्ठावणियासमिए मणसमिए वयसमिए कायसमिए मणगुत्ते वयगुत्ते कायगुत्ते गुत्ते गुत्तिंदिए गुत्तबंभयारी अकोहे

अमाणे अमाए अलोहे संते पसंते उवसंते परिनिव्वुडे अणासवे अममे अकिंचणे छिन्नगंथे निरुवलेवे, कंसपाई इव मुक्कतोए १, संखे इव निरंजणे २, जीवे इव अप्पडिहयगई ३, गगणमिव निरालंबणे ४, वाऊ इव अप्पडिबद्धे ५, सारयसलिलं व सुद्धहियए ६, पुक्खरपत्तं व निरुवलेवे ७, कुम्मे इव गुत्तिंदिए ८, खग्गिविसाणं व एगजाए ९, विहग इव विप्पमुक्के १०, भारंडपक्खी इव अप्पमत्ते ११, कुंजरे इव सोंडीरे १२, वसहो इव जायथामे १३, सीहो इव दुद्धरिसे १४, मंदरे इव निक्कंपे १५, सागरो इव गंभीरे १६, चंदो इव सोमलेसे १७, सूरो इव दित्ततेए १८, जच्चकणगं व जायरूवे १९, वसुंधरा इव सव्वफासविसहे २०, सुहुयहुयासणो इव तेयसा जलंते २१ ॥ इमेसिं पयाणं दुन्नि संगहणिगाहाओ–कंसे संखे जीवे, गगणे वाऊ य सरयसलिले अ। पुक्खरपत्ते कुम्मे, विहगे खग्गे य भारंडे ॥ १ ॥ कुंजर वसहे सीहे, नगराया चेव सागरमखोहे। चंदे सूरे कणगे, वसुंधरा चेव हूयवहे ॥ २ ॥"

व्याख्या–"तए णं" ततश्च दीक्षाग्रहणानन्तरं भगवान् अनगारो जातः, न विद्यते अगारं=गृहं यस्य सः

अनगारः। पुनः कीदृशः ?। ईर्यायां—गमनागमनादौ समितः=सम्यक् प्रवृत्तः। पुनः कीदृशः ?। भाषायां=भाषणे समितः। पुनः कीदृशः ?। एषणायां—द्विचत्वारिंशद्दोषविशुद्धाहारग्रहणे समितः। पुनः कीदृशः ?। आदाने=ग्रहणे उपकरणस्येति गम्यम्। भाण्डमात्रायां—वस्त्राद्युपकरणरूपपरिच्छदस्य अथवा भाण्डस्य वस्त्रादेः मृन्मयभाजनस्य वा मात्रस्य=पात्रविशेषस्य निक्षेपणे—विमोचने समितः सुप्रत्युत्क्षेपणादिना। पुनः कीदृशः ?। उच्चारः=पुरीषं, प्रस्रवणं=मूत्रं, खेलो=निष्ठीवनं, सिंघाणो=नासिकामलः, जल्लः=शरीरमलः तेषां परिष्ठापना=परित्यागः तत्र समितः शुद्धस्थण्डिलाश्रयणात्। एतच्चान्त्यसमितिद्वयं भगवतो भाण्डसिंघानाद्यभावेऽपि समितिनामाऽखण्डनार्थं इत्थमुक्तं। पुनः कीदृशः ?। "मनःसमित" इत्यादि मनःप्रभृतीनां कुशलानां प्रवर्तकः। "मनोगुप्त" इत्यादि तेषां अशुभानां निषेधको, यतः समितिः—सत्प्रवृत्तिः गुप्तिस्तु—निरोधः, अत एव गुप्तः सर्वथा गुप्तत्वात् गुप्तेन्द्रियः शब्दादिषु रागाद्यभावात्। "गुत्तबंभयारी" गुप्तं नवगुप्तिमत् ब्रह्म चरतीत्येवंशीलः। "गुत्तिंदिअबंभयारी" इति पाठे तु गुप्तानि इन्द्रियाणि शब्दादिषु रागाद्यभावात् श्रोत्रादीनि ब्रह्मचर्य—मैथुनविरतिरूपं वसत्यादि नवगुप्तिमत् चरति—आसेवते इत्येवंशीलो यः सः। पुनः कीदृशः ?। अक्रोधः, अमानः, अमायः, अलोभः इति पदचतुष्टयं सुगमार्थम्। पुनः कीदृशः ?। अत एव शान्तो अन्तर्वृत्त्या। पुनः कीदृशः ?। प्रशान्तः बहिर्वृत्त्या। पुनः कीदृशः ?। उपशान्तः उभयतः, यद्वा मनःप्रभृत्यपेक्षया शान्त्यादीनि पदानि। अन्ये त्वाहुः—शान्त उपशमी प्रशान्त इन्द्रियनोइन्द्रियैः। उपशान्तः क्रोधाद्यकरणेन,

अमाणे अमाए अलोहे संते पसंते उवसंते परिनिव्वुडे अणासवे अममे अकिंचणे छिन्नगंथे निरुवलेवे, कंसपाई इव मुक्कतोए १, संखे इव निरंजणे २, जीवे इव अप्पडिहयगई ३, गगणमिव निरालंबणे ४, वाऊ इव अप्पडिबद्धे ५, सारयसलिलं व सुद्धहियए ६, पुक्खरपत्तं व निरुवलेवे ७, कुम्मे इव गुत्तिंदिए ८, खग्गिविसाणं व एगजाए ९, विहग इव विप्पमुक्के १०, भारंडपक्खी इव अप्पमत्ते ११, कुंजरे इव सोंडीरे १२, वसहो इव जायथामे १३, सीहो इव दुद्धरिसे १४, मंदरे इव निक्कंपे १५, सागरो इव गंभीरे १६, चंदो इव सोमलेसे १७, सूरो इव दित्ततेए १८, जच्चकणगं व जायरूवे १९, वसुंधरा इव सव्वफासविसहे २०, सुहुयहुयासणो इव तेयसा जलंते २१ ॥ इमेसिं पयाणं दुन्नि संगहणिगाहाओ—कंसे संखे जीवे, गगणे वाऊ य सरयसलिले अ। पुक्खरपत्ते कुम्मे, विहगे खग्गे य भारंडे ॥ १ ॥ कुंजर वसहे सीहे, नगराया चेव सागरमखोहे। चंदे सूरे कणगे, वसुंधरा चेव हूयवहे ॥ २ ॥"

व्याख्या—"तए णं" ततश्च दीक्षाग्रहणानन्तरं भगवान् अनगारो जातः, न विद्यते अगारं=गृहं यस्य सः

अनगारः। पुनः कीदृशः ?। ईर्यायां–गमनागमनादौ समितः=सम्यक् प्रवृत्तः। पुनः कीदृशः ?। भाषायां=भाषणे समितः। पुनः कीदृशः ?। एषणायां–द्विचत्वारिंशद्दोषविशुद्धाहारग्रहणे समितः। पुनः कीदृशः ?। आदाने=ग्रहणे उपकरणस्येति गम्यम्। भाण्डमात्रायां–वस्त्राद्युपकरणरूपपरिच्छदस्य अथवा भाण्डस्य वस्त्रादेः मृन्मयभाजनस्य वा मात्रस्य=पात्रविशेषस्य निक्षेपणे–विमोचने समितः सुप्रत्युपेक्षणादिना। पुनः कीदृशः ?। उच्चारः=पुरीषं, प्रस्रवणं=मूत्रं, खेलो=निष्ठीवनं, सिंघाणो=नासिकामलः, जल्लः=शरीरमलः तेषां परिष्ठापना=परित्यागः तत्र समितः शुद्धस्थण्डिलाश्रयणात्। एतच्चान्त्यसमितिद्वयं भगवतो भाण्डसिंघानाद्यभावेऽपि समितिनामाऽखण्डनार्थं इत्थमुक्तं। पुनः कीदृशः ?। "मनःसमित" इत्यादि मनःप्रभृतीनां कुशलानां प्रवर्तकः। "मनोगुप्त" इत्यादि तेषां अशुभानां निषेधको, यतः समितिः–सत्प्रवृत्तिः गुप्तिस्तु–निरोधः, अत एव गुप्तः सर्वथा गुप्तत्वात् गुप्तेन्द्रियः शब्दादिषु रागाद्यभावात्। "गुत्तबंभयारी" गुप्तं नवगुप्तिमत् ब्रह्म चरतीत्येवंशीलः। "गुत्तिंदिअबंभयारी" इति पाठे तु गुप्तानि इन्द्रियाणि शब्दादिषु रागाद्यभावात् श्रोत्रादीनि ब्रह्मचर्य–मैथुनविरतिरूपं वसत्यादि नवगुप्तिमत् चरति–आसेवते इत्येवंशीलो यः सः। पुनः कीदृशः ?। अक्रोधः, अमानः, अमायः, अलोभः इति पदचतुष्टयं सुगमार्थम्। पुनः कीदृशः ?। अत एव शान्तो अन्तर्वृत्त्या। पुनः कीदृशः ?। प्रशान्तः बहिर्वृत्त्या। पुनः कीदृशः ?। उपशान्तः उभयतः, यद्वा मनःप्रभृत्यपेक्षया शान्त्यादीनि पदानि। अन्ये त्वाहुः–शान्त उपशमी प्रशान्त इन्द्रियनोइन्द्रियैः। उपशान्तः क्रोधाद्यकरणेन,

अथवा श्रान्तो भवभ्रमणात् । प्रस्रान्तः प्रकृष्टचित्तत्वात् । उपशान्तो निवृत्तः पापेभ्यः प्रशमप्रकर्षाय, एकार्थं पदत्रयमिति । अत एव पुनः कीदृशः ?। परिनिर्वृतः=सकलसन्तापवर्जितः। पुनः कीदृशः ?। अनाश्रवो–हिंसादिसप्तदशाश्रवनिवृत्तः। पुनः कीदृशः ?। अममः–आभिष्वङ्गिकममेति शब्दरहितः। पुनः कीदृशः ?। अकिञ्चनो=निर्द्रव्यः। पुनः कीदृशः ?। छिन्नग्रन्थो–मुक्तहिरण्यादिग्रन्थः। क्वचित् "छिन्नसोएत्ति" पाठः, तत्र छिन्नशोकः छिन्नस्रोतो वा, छिन्नसंसारप्रवाह इत्यर्थः। पुनः कीदृशः ?। "निरुपलेपो" द्रव्यभाव-मलरहितः, तत्र द्रव्यतो देहमलः, भावतो मिथ्यात्वादिमलः, ताभ्यां रहितनिरुपलेपत्वमेवोपमानैराह–पुनः कीदृशः ?। कांस्यपात्रीव मुक्तं–त्यक्तं तोयमिव तोयं–बन्धहेतुत्वात् स्नेहो येन सः। पुनः कीदृशः ?। शङ्ख इव निरञ्जनः, रञ्जनं रङ्गणं वा रागाद्युपरञ्जनं तस्मान्निर्गतः। पुनः कीदृशः ?। 'जीव इव' अप्रतिहतगतिः–सर्वत्र औचित्येन अस्खलितविहारात् । संयमे वा अप्रतिहतवृत्तिः । पुनः कीदृशः ?। गगनमिव निरालम्बनो देशग्रामकुलादिनिश्रारहितत्वात्। पुनः कीदृशः ?। वायुरिव अप्रतिबद्धः, क्षेत्रादौ प्रतिबन्धाभावेन औचित्येन सततविहारित्वात्। पुनः कीदृशः ?। शारदसलिलमिव शुद्धहृदयः, कालुष्याभावात्। पुनः कीदृशः ?। पुष्करं=पद्मं तस्य पत्रमिव निरुपलेपः, पङ्कजलकल्पस्वजनविषयस्नेहरहितत्वात् । पुनः कीदृशः ?। कूर्म इव=कच्छप इव गुप्तेन्द्रियः, स हि कदाचित् ग्रीवापादचतुष्टयरूपाङ्गपञ्चकेन गुप्तः स्यात्, एवं भगवानपि इन्द्रियपञ्चकेन। पुनः कीदृशः ?। खड्गो गण्डकाख्यो जीवः तस्य विषाणं=शृङ्गं एकमेव स्यात् तद्वदेको

जात एकजात एकभूतो रागादिसहायवैकल्यात् । पुनः कीदृशः ?। विहग इव विप्रमुक्तो—मुक्तपरिकरत्वात् अनियतवासाच । पुनः कीदृशः ?। भारण्डपक्षीव अप्रमत्तो निद्राद्यभावात् । भारण्डपक्षिणः किल एकं शरीरं पृथग्ग्रीवं त्रिपादं च स्यात्, तौ च अत्यन्तं अप्रमत्ततयैव निर्वाहं लभेते इति तदुपमानम् इति कल्पावचूरिव्याख्यानम् ॥ भारण्डपक्षिणो हि एकोदराः पृथग्ग्रीवाः अन्योन्यफलभक्षिणौ जीवद्वयरूपा भवन्ति । ते सर्वदा चकितचित्ता भवन्ति इति ज्ञाताधृत्तौ पञ्चमाध्ययने एवमेव व्याख्यातम् । पाईवृत्तौ—औपपातिकवृत्तौ च "भारण्डपक्षिणः ख्याताः, त्रिपदा मर्त्यभाषिणः । द्विजिह्वा द्विमुखा एको—दरा भिन्नफलैषिणः ॥१॥" इति तपागच्छीयप्रतिक्रमणवृत्तौ । पुनः कीदृशः ?। कुञ्जर इव शौण्डीरः कर्मशत्रुसैन्यं प्रति शूरः । पुनः कीदृशः ?। वृषभ इव जातस्थामा—स्वीकृतमहाव्रतभारवहनं प्रति जातबलो—निर्वाहकत्वात् । पुनः कीदृशः ?। सिंह इव दुर्धर्षः=परीषहादिमृगैः न अभिभवनीयः । पुनः कीदृशः ?। मेरुरिव अनुकूलप्रतिकूलोपसर्गवातैः अचलितसत्त्वः । पुनः कीदृशः ?। सागर इव गम्भीरो हर्षशोकादिकारकसंपर्केऽपि अविकृतचित्तः । पुनः कीदृशः ?। चन्द्र इव सोमलेश्यः अनुतापहेतुमनःपरिणामः । पुनः कीदृशः ?। सूर इव दीप्ततेजाः द्रव्यतः शरीरदीप्त्या भावतो ज्ञानेन परेषां क्षोभकत्वाद्वा । पुनः कीदृशः ?। जात्यकनकमिव जातं=संपन्नं रूपं=स्वरूपं रागादिकुद्रव्यविरहात् यस्य अपगतदोषरूपकुद्रव्यत्वेन उत्पन्नस्वस्वभाव इत्यर्थः । पुनः कीदृशः ?। वसुन्धरा इव सर्वान् अनुकूलेतरान् शीतोष्णादीन् उपसर्गान् विषहते यः । पुनः कीदृशः ?। सुहुतो—घृतादितर्पितः स

चासौ हुताशनश्च अग्निः तद्वत्तेजसा ज्ञानरूपेण तपस्तेजसा वा ज्वलन् दीप्यमानः । अत्र च "इमेसिं पयाणं दुन्निसंघयणि गाहाओ" इति वाक्यपूर्विके द्वे गाथे क्वचित् आदर्शे दृश्येते—

"कंसे संखे जीवे, गगणे वाऊ य सरयसलिले अ । पुक्खरपत्ते कुम्मे, विहगे खग्गे य भारंडे ॥ १ ॥
कुंजर वसहे सीहे, नगराया चेव सागरमखोहे । चंदे सूरे कणगे, वसुंधरा चेव हूयवहे ॥ २ ॥" इत्यादि ।

पुनः श्रीभगवद्गुणोत्कीर्तनं प्रकारान्तरेणाऽऽह—

नत्थि णं तस्स भगवंतस्स कत्थइ पडिबंधे, से अ पडिबंधे चउव्विहे पन्नत्ते, तं जहा—दव्वओ खित्तओ कालओ भावओ, दव्वओ णं सचित्ताचित्तमीसेसु दव्वेसु, खित्तओ णं गामे वा नगरे वा अरण्णे वा खित्ते वा खले वा घरे वा अंगणे वा नहे वा, कालओ णं समए वा आवलिआए वा आणपाणुए वा थोवे वा खणे वा लवे वा मुहुत्ते वा अहोरत्ते वा पक्खे वा मासे वा उउए वा अयणे वा संवच्छरे वा अन्नयरे वा दीहकालसंजोए, भावओ णं कोहे वा माणे वा मायाए वा लोभे वा भए वा हासे वा पिज्जे वा दोसे वा कलहे वा अब्भक्खाणे वा पेसुन्ने वा परपरिवाए वा अरइरई(ए) वा मायामोसे वा मिच्छादंसणसल्ले वा, (६००) तस्स णं

प्रकारान्तरेण भगवद्गुणोत्कीर्तनं

भगवंतस्स नो एवं भवइ ॥११८॥ से णं भगवं वासावासवज्जं अट्ठ गिम्हहेमंतिए मासे गामे एगराइए नगरे पंचराइए वासीचंदणसमाणकप्पे समतिणमणिलेट्ठुकंचणे समदुक्खसुहे इहलोगपरलोगअप्पडिबद्धे जीवियमरणे अ निरवकंखे संसारपारगामी कम्मसत्तुनिग्घायण-ट्ठाए अब्भुट्ठिए एवं च णं विहरइ ॥ ११९ ॥

व्याख्या—"नत्थि त्ति" नास्ति अयं पक्षो यदुत तस्य भगवतः कुत्रचित्प्रतिबन्धो भवति, स च प्रतिबन्धश्चतुर्विधो भवति। तद् यथा—द्रव्यतः सचित्ताऽचित्तमिश्रितेषु द्रव्येषु १, क्षेत्रतश्च ग्रामे वा नगरे वा अरण्ये वा क्षेत्रे=धान्यनिष्पत्तिभूमौ, खले—धान्यमलनपवनादिस्थण्डिले, गृहे वा अङ्गणे वा नभसि=आकाशे प्रतिबन्धो भवति २, कालतः=समये, समयः—सर्वनिकृष्टः कालः उत्पलपत्रशतव्यतिभेद—जरत्पटशाटिकापाटनादिदृष्टान्त-साध्यः, आवलिकायां—असंख्यातसमयरूपायां "आणपाणूए" इति उच्छ्वासनिःश्वासकाले स्तोके—ससोच्छ्वास-माने क्षणे बहुतरोच्छ्वासरूपे, लवे—ससस्तोकमाने, मुहूर्ते ससससतिमाने, अहोरात्रे वा पक्षे वा मासे वा ऋतौ [हेमन्तादौ] हिमादौ वा, अयने—दक्षिणायनादौ, संवतसरे—वर्षे वा अन्यतरस्मिन् दीर्घकालसंयोगयुग-पूर्वादौ प्रतिबंधो न भवति ३। भावतश्च क्रोधे वा माने वा मायायां वा लोभे वा भये इहलोकादिससविधे हास्ये हर्षे वा "पिज्जत्ति" अनभिव्यक्तमायालोभस्वभावे अभिष्वङ्गमात्रे प्रेमणि, द्वेषे अनभिव्यक्तक्रोधमान-

स्वरूपे अप्रीतिमात्रे, अथवा रागः–सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधनेऽपि अभिरमते विषयो गर्धः प्रेम तस्मिन्, द्वेषो–दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने च अप्रीतिः तत्र, कलहे–असत्यवचनराट्यादौ "अब्भक्खाणे वा" अभ्याख्याने–असद्दोषाविष्करणे, पैशून्ये–प्रच्छन्नं असद्दोषाविष्करणे, पुनः परपरिवादे–विप्रकीर्णं परदोषवचने, अरतिः मोहनीयोदयाच्चित्तोद्वेगफला, रतिः–मोहोदयाच्चित्ताभिरतिः समाहारे–अरतिरतिः तत्र, मायामृषे मायामोषे वा–वेषान्तरभाषान्तरकरणेन परवञ्चनं, मायया सह मृषा मायामृषा, मायया वा मोषो मायामोषः तस्मिन्, मिथ्यादर्शनं=मिथ्यात्वं शल्यमिव अनेकदुःखहेतुत्वात् । तत्र एवं अमुना प्रकारेण तस्य भगवतो न भवति प्रतिबन्ध इति प्रकृतं । वर्षासु–प्रावृषि वासो–वर्षावासः तद्वर्जं अष्ट-मासान् ग्रैष्महैमन्तिकान्, ग्रामे एकरात्रौ वासमानतया अस्ति यस्य स एकरात्रिकः, एवं नगरे पञ्चरात्रिकः, वासीचन्दनयोः प्रतीतयोः, अथवा वासीचन्दने इव वासीचन्दने अपकारोपकारयोः समानो निर्द्वेषरागत्वात्, कल्पो–विकल्पः समाचारो वा यस्य सः । पुनः कीदृशः ? । समानि=तुल्यानि उपेक्षणीयतया तृणादीनि मणिलोष्टकांचनानि यस्य सः । पुनः कीदृशः ? । समसुखदुःखः । पुनः कीदृशः ? । इहलोके परलोके च अप्रतिबद्धः । पुनः जीविते मरणे च निरवकाङ्क्षः । पुनः कीदृशः ? । संसारपारगामी । पुनः कीदृशः ? । कर्मशत्रुनिर्घातनाय अभ्युत्थितः । "एवं च णं विहरइ" इति । एवं ईर्यासमित्यादिगुणयोगेन विहरति=आस्ते इति ॥

वीरस्य प्रतिबन्धा-भावः

अथ श्रीभगवतो गङ्गापुलिने चक्राङ्कुशादिलक्षणचिन्हितानि पादयोः पदानि दृष्ट्वा, कोऽपि सामुद्रिकः पुरुषः पदानुयायी भगवत्समीपे समागतो, भगवन्तं निर्ग्रन्थं दृष्ट्वा विषादं प्राप्तः, चित्ते चिन्तयितुं लग्नः—"अहो! मया लक्षणानुसारेण ज्ञातमासीत्, अयं चक्रवर्त्यादिः महापुरुषः कोऽपि भावी, मम दारिद्र्यं चूरयिष्यति।" ततः इन्द्रेण आगत्य प्रोक्तम्—"भो सामुद्रिक! अयं धर्मचक्रवर्ती सुरासुरनमस्कृतः, एतस्य पादरजोऽपि दारिद्र्यं हरति" इति भणित्वा, इन्द्रेण बहुधनकनकरत्नप्रदानसन्तोषेण [संतोषितः] आशा पूरिता।

अथ श्रीभगवान् आषाढचतुर्मास्या अर्धमासादनन्तरं अस्थिग्रामे गतः। तत्र प्रथमचतुर्मासके शूलपाणि-यक्षायतने स्थितः, स च यक्षो रौद्रस्वभावः, कस्यापि मानवस्य रात्रौ वासं न ददाति, कदाचित् कोऽपि वसति तदा तं मारयति। श्रीभगवता इन्द्रशर्मनामयक्षपूजकपार्श्वात् रात्रौ वासः प्रार्थितः, तेन प्रोक्तम्—"सर्वग्राम-लोकानां आज्ञां लाहि" भगवता ग्रामलोकाः पृष्टाः सन्तः, स्वकीयां स्वकीयां वसतिं ददति, परं यक्षायतनस्य न, कुतः, तस्य क्रूरत्वात्, ततो श्रीभगवानेव ग्रामलोकान् अनुज्ञाप्य यक्षप्रतिबोधनार्थं प्रासादकोणे स्थितः, चतुर्मास्यां रात्रौ न स्थातव्यं इति ग्रामलोकैः निवारितोऽपि। अथ अस्थिग्रामस्य उत्पत्तिः कथ्यते—धनदेवसार्थ-वाहस्य धौर्यो वृषभोऽभूत्, ग्रीष्मे नद्यां बहुवालुकायां अन्ये वृषभाः शकटोत्तारणे असमर्था जाताः। तत एकेनापि स्वामिना प्रशंसितेन पञ्चशत (५००) शकटानि उत्तारितानि, परं त्रुटितः, ततो धनसार्थवाहेन चारि-(तृण)पानीयनिमित्तं वर्धमानग्रामवास्तव्यानां वृद्धश्रेष्ठिणां बहु द्रव्यं दत्त्वा प्रोक्तम्—"एतस्य वृषभस्य सारणा

कर्तव्या" गतः सार्थवाहः, पश्चात् तैर्द्रव्यं मनोमानितं कृतं, निर्दयत्वेन तस्य सारणा न कृता। ततो वृषभः क्षुधातृषापीडितः पादौ निक्षिप्य मृत्वा शूलपाणिः यक्षो जातो, रुष्टो ग्रामलोकोपरि मारिं विकुर्व्य मारिता बहवो लोकाः। ततो लोकेन भीतेन विज्ञप्तिः कृता—"योऽस्मान् मारयति स प्रकटीभवतु।" ततो देववाणी जाता, "अहं वृषभजीवो ग्रामलोकैः कुमरणेन मारितः, मया च कुपितेन मारिः पातिता। अथ मम देवगृहं कारयन्तु, वृषभरूपां यक्षप्रतिमां कारयन्तु, [यातां] यात्रां नित्यं पूजां च कारयन्तु, यथा उपद्रव उपशाम्यति।" ततो ग्रामलोकैः तथैव कृतं, मरकोपद्रवो निवृत्तः, कल्याणं च जातं। मृतकानां अस्थ्नां स्थाने स्थाने पुञ्जो दृश्यते स्म। ततो वर्धमानग्रामस्य अस्थिग्राम इति प्रसिद्धिः जाता। स्वामी शूलपाणियक्षप्रासादे अर्धमासिकतपसा प्रथमचतुर्मास्यां स्थितः। रात्रौ च रुष्टेन यक्षेण अट्टाट्टहास १, हस्ति २, पिशाच ३, नागानां ४, उपसर्गाः कृताः, परं स्वामी न क्षुब्धः। पुनः शिरः १, कर्ण २, नासा ३, दन्त ४, नख ५, चक्षुः ६, पृष्ठाणां ७, सप्तानां सप्तवेदनाः कृताः, परं भगवान् ध्यानात् न चलितः। तत्समये सिद्धार्थेन प्रोक्तम्—"रे शूलपाणे! त्वं न जानासि, एनं सिद्धार्थराजपुत्रं यस्य इन्द्रः सेवकोऽस्ति, अतो भीतः सन् प्रतिबुद्धो, भगवन्तं क्षामयति स उपशान्तश्च श्रीभगवतो महिमानं अकरोत्। ततः प्रभातकाले मुहूर्तमात्रं निद्राप्रमादं चकार। तदा स्वामिना दश स्वप्नाः दृष्टाः। तालपिशाचः १, श्वेतकोकिला २, विचित्रकोकिलायुग्मं ३, पुष्पमालाद्विकं ४, गोवर्गः ५, सरः ६, सागरः ७, सूर्यः ८, अन्त्राणि ९, मेरुपर्वतश्च १०, प्रभाते श्रीभगवतो वन्दनार्थं लोका आगताः।

श्रीभगवन्तं दृष्ट्वा संतुष्टाः सन्तो महिमानं चक्रुः। तत्र श्रीपार्श्वनाथस्य शिष्याभाषो गृहस्थ उत्पलनामा श्रीभगवतो महिमार्थं स्वामिदृष्टनवस्वप्नानां फलं कथयति स्म। तथा हि–"हे स्वामिन्! त्वं तालपिशाचदर्शनात् मोहपिशाचं निराकरिष्यसि १। श्वेतकोकिलातः शुक्लध्यानं प्राप्स्यसि २। विचित्रकोकिलातः द्वादशाङ्गीरूपं प्रवचनं कथयिष्यसि ३। पुष्पमालाद्वयस्वप्नविचारं न जानामि।" ततः सिद्धार्थेन प्रोक्तम्–"यति–श्रावकधर्मं प्ररूपयिष्यसि ४। गोवर्गतः चतुर्विधसंघस्थापनां करिष्यसि ५। सरोवरदर्शनात् सरोवरवत् देवजनहंससेव्यो भविष्यसि ६। सागरतः संसारसागरं तरिष्यसि ७। सूर्यात् केवलज्ञानं लप्स्यसे ८। अन्तरतो यशो लप्स्यसे ९। मेरुतो धर्मे मेरुवत् निष्प्रकम्पो भविष्यसि १०। ततः श्रीभगवान् मोराकसंनिवेशस्य वहिरुद्याने कायोत्सर्गे तस्थौ। ततः सिद्धार्थो भगवतः पूजानिमित्तं प्रभोः मुखे अवतीर्य, गोपानां अग्रे निमित्तं प्राह–"भो गोप! त्वया स्वप्ने अद्य मोदका भक्षिताः, पुनः प्रभाते कङ्कूरं भुक्त्वा क्षेत्रे गच्छता भवता सर्पो दृष्टः, क्षेत्रे च त्वं गमिष्यसि" इत्यादि बहु सत्यं ज्ञात्वा, गोपाः प्रभोर्महिमानं चक्रुः। लोकानां च पुरस्तात् वदन्ति स्म–"अयं ज्ञानी तपस्वी च।" ततः केनाऽपि पृष्टं–"अत्र अच्छन्दको निमित्ती वसति, तस्य कीदृशं ज्ञानं?।" ततः सिद्धार्थेन प्रोक्तं–"न किंचित्।" ततो अच्छन्दकेन पाखण्डिना जातद्वेषेण तृणं अंगुलीभ्यां गृहीत्वा पृष्टं–"भो सिद्धार्थ! इदं तृणं भङ्क्ष्यते न वा?।" सिद्धार्थेन प्रोक्तम्–"नेति"। ततः श्रीभगवतो वचनस्य अलीककरणार्थं भञ्जनाय उद्यतः। तदा शक्रेण अङ्गुली छिन्ना। अच्छन्दकश्च द्वेषं वहन् उपसर्गान् करोति। तदा सिद्धार्थेन लोकानां

पुरस्तात् प्रोक्तं–"अनेन अच्छन्दकेन वीरघोषस्य दशपलकं वट्टलकं छन्नं गृहीत्वा, महिषेन्दुवृक्षस्य श्रीआवश्यक-चूर्णिवचनात् खर्जूरीवृक्षस्य पूर्वस्यां दिशि हस्तात् अधः स्थापितं अस्ति। १ पुनः इन्द्रशर्माब्राह्मणस्य अनेन छागो भक्षितोऽस्ति, तस्य अस्थीनि एतस्य दक्षिणस्यां दिशि उत्कुरुडके गृहबदर्या अधः सन्ति २, तृतीयं तस्य भार्या कथयिष्यति। ततः तैर्लोकैः गत्वा तथैव सर्वं दृष्टं, भार्या पृष्टा प्राह–"मत्पतिः भगिनीपतिरस्ति।" ततो अच्छन्दो लज्जितः प्राह–"हे स्वामिन्! यूयं अन्यत्र यास्यथ, परं अहं कुत्र यामि?" इति अप्रीतिं ज्ञात्वा, 'अप्रीतिस्थाने च न स्थेयं' इति अभिग्रहं स्मृत्वा, भगवान् विहृतः। वर्धमानग्रामान्तराले द्वे नद्यौ–स्वर्ण-वालुका रूप्यवालुका च, उत्तरवाचालगमनाय मार्गद्वयं–एको वक्रः, द्वितीयः सरलः, तत्र सरलमार्गं त्यक्त्वा, वक्रमार्गेण यत्र कनकखलनामा तापसाश्रमः तत्र गतः यक्षगृहमंडपे स्थितश्च। तत्राश्रमे चण्डकौशिकनामा सर्पोऽस्ति, तस्य सम्बन्धो यथा–कस्मिंश्चिद् ग्रामे गुरवः स्थिताः। एकः साधुः क्षुल्लकसाधुं सहायीकृत्य, पारणार्थं गोचरचर्यायां गतो, वर्षाकालत्वेन समुत्पन्नां एकां भेकीं–मण्डूकीं साधुः चचम्प। तदा क्षुल्लकः प्राह–"भो साधो! त्वया मण्डूकी हता।" साधुः ईर्ष्यया प्राह–"एषा पूर्वं एव मृताऽभूत्, न मया मारिताऽस्ति, यदि अधिकं वक्ष्यसि तदा मुखं भङ्क्ष्यामि।" ततः क्षुल्लको मौनं कृत्वा स्थितः। ततः प्रतिक्रमणे आलोचनाप्रस्तावे क्षुल्लकेन पुनः प्रोक्तं–"भो साधो! मण्डूकी त्वया मार्गे चम्पिता, सा आलोचयितव्या।" ततो रुष्टः साधुः क्षुल्लकं हन्तुं समुत्थितो धावमानः स्तम्भे मस्तकं भग्नम्, मृत्वा ज्योतिष्कदेवेषु समुत्पन्नः। ततः च्युत्वा पञ्चशततापसपतिः

जातः, परं महाचण्डप्रकृतिः। एकदा राजकुमारान् स्वकीयस्य आश्रमस्य फलानि गृह्णतः दृष्ट्वा, कोपेन हस्ते परशुं गृहीत्वा तन्मारणाय धावन्, अन्धकूपे पतितो मृत्वा कनकखलतापसाश्रमे चण्डकौशिको जातः। स च सर्पो दृग्विषो रोषेण लोभेन च वनं सर्वतः प्रदक्षिणीकुर्वन्, पशुपक्षिमनुष्यादिकं यं पश्यति तं सूर्यसंमुखीभूय दृशा ज्वालयति। पूर्वं तापसाश्रमे तापसा एव ज्वालिताः, अर्धदग्धाश्च केचन नष्टाः, स मार्गो लोकैः मुक्तः, भगवान् लाभं ज्ञात्वा लोकैः निवारितोऽपि यत्र सर्पबिलं तत्पार्श्वे कायोत्सर्गेण स्थितः, सर्पेण निर्गत्य प्रभुर्दष्टः, रुधिरं च गोक्षीरसदृशं धवलं दृष्टं, सर्पेण ज्ञातं–"अन्यं अहं दशामि तदा स भस्मीभवति। अत्र तु रुधिरमपि रक्तं न निःसृतं।" स्वामिनापि प्रोक्तं–"रे चण्डकौशिक! बुध्यस्व रे वराक!" ततः सर्पस्य जातिस्मरणज्ञानं समुत्पन्नं, पूर्वभवो दृष्टः, ततः प्रतिबुद्धेन पक्षं यावत् अनशनं कृत्वा, कर्मक्षयाय बिलमुखे मुखं कृत्वा अस्थात्। प्रभुः तं प्रतिबुद्धं ज्ञात्वा ततश्चचाल। सर्पोऽपि लोकैराहन्यमानो वेदनां सम्यगधिसह्य श्रीप्रभोः ध्यानात् सहस्रारे अष्टमदेवलोके देवो जातः। श्रीभगवता च पारणं नागसेनगृहे कृतं। ततः श्वेताम्ब्यां नगर्यां प्रदेशिराजेन महिमा कृता। ततः श्रीभगवान् सुरभिपुरं गतः। तत्र गङ्गानद्यां नावं आरूढः श्रीभगवान्, तदा घूघूराजवासितं शब्दः श्रुत्वा खेमलिको विज्ञः प्राह–"मरणान्तकष्टं भविष्यति, परं अस्य मुनेः प्रभावात् टलिष्यति।" ततः सिंहजीवः सुदंष्ट्रनागकुमारो नावं बोलयति, तदा सम्बलकम्बलाभ्यां स निराकृतः। तयोरुत्पत्तिरियं मथुरानगर्यां जिनदासः श्रावकोऽभूत्,

स च आभीरस्य मित्रत्वात् विवाहावसरे खण्डखाद्यघृतादिकं पूरयामास। स च आभीरो हृष्टः तस्मै द्वौ वृषभौ कम्बलशम्बलनामानौ दत्तवान्। स च जिनदासो अष्टमीचतुर्दश्योः पौषधं सोपवासं करोति, बलीवर्दौ अपि स्वामिनं तथाविधं पुण्यं कुर्वाणं दृष्ट्वा, चतुर्दश्यां उपवासं चक्रतुः। एकदा जिनदासेन पौषधे गृहीते सति कोऽपि सुहृत् तौ बलीवर्दौ लात्वा, भाण्डीरयक्षयात्रायां अवाहयत्। तौ तथा निर्दयत्वेन वाहितौ, यथा अतीव पीडितौ रुधिरेण भृतौ पश्चादानीय मित्रगृहे मुक्तौ–क्रमात् मन्दौ जातौ, पानीयमपि न पिबतः। ततोऽनशनं गृहीत्वा, समाधिना मृतौ नागकुमारौ देवौ जातौ॥ इति कम्बलशम्बलोत्पत्तिः॥ ततः श्रीभगवान् द्वितीयचतुर्मासी राजगृहे नालिंदापाटके तन्तुवायं अनुज्ञाप्य, तन्तुवायशालायां एकदेशे मासक्षपणतपसा स्थितः, तत्र गोशालको मिलितः। तत्र विजयेन शुद्धान्नपारणं दत्तम्। ततो देवैः श्रीभगवतः पश्चदिव्यानि प्रकटितानि, तानि दृष्ट्वा गोशालो दध्यौ–"यदि एतस्य शिष्यो भवामि तदा ममाऽपि मृष्टान्नपानं लोका ददाति ममाऽपि मानयन्ति च, ततोऽहं तव शिष्योऽस्मि" इत्युक्त्वा श्रीभगवता समं विहरति स्म। एकदा स्वामी सुवर्णखलग्रामं याति, गोपैः पायसं पच्यमानं दृष्ट्वा, गोशालः प्राह–"भोजनं एषां भावि न वा?।" सिद्धार्थेन प्रोक्तं–"भङ्गो भावी।" ततो गोशालकवचनेन तैः विशेषतः सुरक्षिता स्थाली भग्ना। ततो गोशालेन मतं अङ्गीकृतं 'यत् भाव्यं तत् भवत्येव।' पुनरेकदा स्वामी सिद्धार्थपुरात् कूर्मग्रामं प्रस्थितो मार्गे सिद्धार्थेन बहुमिलितलोकानां अग्रे श्रीभगवन्मुखे अवतीर्य प्रोक्तं–"अयं तिलस्तम्भो महान् भावी, अस्य

शम्पायां सप्तपुष्पजीवास्तिलत्वेन निष्पत्स्यन्ते । ततः श्रीभगवतो वचनं कुपात्रत्वात् अन्यथाकर्तुं तिलस्तम्भं मूलत उन्मूल्य, अन्यत्र निक्षिप्तवान् । ततः कियद्दिनैः व्याघुट्यमानेन गोशालेन श्रीभगवतः पृष्टं—"क स तिलस्तम्भः ?।" ततः श्रीभगवान् यस्मिन् स्थाने स निक्षिप्तोऽभूत्, तत्र देवेन घनवृष्टिः कृता, गोक्षुर्या चम्पिते भूम्यन्तर्मूलानि प्रविष्टानि, तिलस्तम्भः फलितोऽस्ति तन्मार्गे गतः । ततो गोशालः तं तिलस्तम्भं तथाविधं फलितं दृष्ट्वा, विशेषतः स्वमतं दृढीकृत्य, तं उन्मूलयितुं लग्नः । तावता इन्द्रेण हक्कितः—"रे दुष्ट ! त्वं प्रभोः वचनं अन्यथा करिष्यसि? ।" तदा गोशालो रुष्टो विशेषत उपसर्गान् अकरोत् । ततो ब्राह्मणग्रामे श्रीभगवान् गतः । तत्र द्वौ पाटकौ—एको नन्दस्य, द्वितीय उपनन्दस्य, नन्देन स्वामी प्रतिलाभितः । उपनन्देन गोशालं परं कथितवासि कदन्नं दत्तम् । ततो रुष्टेन प्रोक्तं—"मम धर्माचार्यतपःप्रभावात् दह्यतां" एतद्गृहं तत् तथैव जातं ।२। ततः तृतीयचतुर्मास्यां द्विमासक्षपणेन चम्पायां स्थितः । ततः कालायां संनिवेशे शून्यगृहे सीहो ग्रामणीपुत्रो गोमतीदास्या सह रममाणो गोशालेन हसितः, तेन वाढं कुट्टितः, तदा प्राह—"हे आर्य ! किं न निवारयसि ? ।" प्रभुस्तु मौनावलम्बी न वक्ति । तदा सिद्धार्थः प्राह—"एवं कार्यं तव कुर्वत इदं अल्पं फलं, परलोके तु वहुदुःखभाक् भविष्यसि ।" अथ एकदा स्वामी कुमाराख्यं संनिवेशं गतः । तत्र श्रीपार्श्वनाथशिष्यो मुनिचन्द्रनामा अस्ति, तस्य साधून् दृष्ट्वा, गोशालः प्राह—"रे ! के यूयं ? ।" तदा तैः उक्तं—"वयं निर्ग्रन्थाः ।" गोशालः प्राह—"क यूयं निर्ग्रन्थाः ? क मे धर्माचार्यो निर्ग्रन्थः ! महदन्तरम् । यादृशः त्वं

तादृशस्ते धर्माचार्यो भविष्यति।" पुनर्भणितं–"स्वामितपसा युष्माकं उपाश्रयो दह्यताम्।" परं न दग्धः,
ततः स्वामिसमीपे प्रत्यागत्य प्रोक्तं–"हे स्वामिन्! अद्य श्वो वा तव प्रभावो न तादृग् दृश्यते।" सिद्धार्थेन
प्रोक्तं–"साधवो न दह्यन्ते।" ततो रात्रौ स मुनिचन्द्रो जिनकल्पतुलनां कुर्वन् कायोत्सर्गस्थः कुम्भकारेण
चौरभ्रान्त्या व्यापादितः, अवधिज्ञानं उत्पाद्य स्वर्गं जगाम, तन्महिमार्थं सुरैः आगत्य महान् उद्योतः कृतः।
तं दृष्ट्वा गोशालः प्राह–"अहो! अद्य तस्य स्वोहडं [उपाश्रयः] दह्यते, सत्यः स्वामिप्रभावः!।" ततः
सिद्धार्थेन यथा स्वरूपं प्रोक्तं। तथापि कुपात्रः तत्र गत्वा तस्य शिष्यान् निर्भर्त्सयामास। ततः स्वामी चौरायां
गतो हेरकाविति कृत्वा आरक्षका भगवन्तं कूपे क्षिपन्ति, तत्र पूर्वं गोशालः पश्चात् भगवान्। ततः
सोमा–जयन्त्यौ उत्पलभगिन्यौ संयमं दुष्करत्वेन परित्यज्य प्रव्राजिकीभूते उपसर्गं ज्ञात्वा, तं उपसर्गं उप-
शामयतः। ततो भगवान् पृष्ठचम्पायां गत्वा चतुर्थमासक्षपणेन चतुर्थचतुर्मासीं स्थितः। तत्र प्रतिदिनं
जीर्णश्रेष्ठिनिमन्त्रितेनापि श्रीभगवता अभिनवश्रेष्ठिगृहे पारणं कृतं, विस्तरसम्बन्धः आवश्यके। ततः श्रीभ-
गवान् कयङ्गले गतः। तत्र माघमासे दरिद्र–स्थविर–नामकाः पाखण्डस्थाः जागरणदिने गायन्ति। गोशालः
तान् हसन् तैः कुट्टितः, परं आर्यशिष्यत्वात् मुक्तः। ततः श्रावस्त्यां गतः, तत्र पितृदत्तस्य भार्या परं सन्तानं
न जीवति। तया शिवदत्तनैमित्तिकः पृष्टः। तेन प्रोक्तं–"गर्भमांसमिश्रं पायसं भोजनं दर्शनिनो देहि यथा
सन्तानं जीवति।" तस्मिन् समये गोशालेन स्वामी पृष्टः–"अहं अद्य कीदृशं भोजनं लप्स्ये?।" सिद्धार्थेनोक्तं–

"मांसमिश्रं।" तया गोशालो भोजितः। स च आगत्य भगवतः कथयामास—"मया पायसं भुक्तं।" भगवता प्रोक्तं—"तत् मांसमिश्रं अस्ति।" ततो भगवतो वचनेन वमने कृते तथैव पुष्पितसूक्ष्ममांसखण्डे दृष्टे। ततः रुष्टेन गोशालेन प्रोक्तं—"रे पापिष्ठे ! तव पाटको मम स्वामितपःप्रभावात् दह्यताम्" तथैव दग्धश्च। ततः एकदा बहुकर्मनिर्जरार्थं लाटदेशे गतः। अन्तरा द्वौ चौरौ मिलितौ, खड्गं उत्पाट्य मारणाय धावितौ, प्राणान्तं उपसर्गं ज्ञात्वा इन्द्रेण हतौ। पुनः स्वामी हरिद्रवृक्षस्य अधोऽवतस्थे। पथिकप्रज्वालिताग्निना कायोत्सर्गस्थस्य भगवतः पादौ दग्धौ। भगवान् न अपसरति स्म, गोशालस्तु नष्ट्वा गतः ४॥ ततो भद्रिकायां स्वामी चतुर्मासक्षपणेन पञ्चमचतुर्मासीं स्थितः। एकदा कूपिकसंनिवेशं गतः, चौरिक इति गृहीतो, विजयया श्रीपार्श्वशिष्यया स्वामी मोचितः। गोशालश्च पृथक् भूतः, परं यत्र यत्र याति तत्र तत्र मारिः मस्तके पतति। ततः पुनः विचारितं—"वरं स्वामिनैव सार्धं" ततो मार्गयितुं लग्नः, स्वामी वैशाल्यां गतः। तत्र लोहकारशालायां श्रीभगवान् कायोत्सर्गे स्थितः। ततः षण्मासान्ते एको लोहकारः षण्मासरोगविनिर्गमने नीरोगः सन् उपकरणानि लात्वा, शालायां आगतः स्वामिनं दृष्ट्वा अमङ्गलं इति ज्ञात्वा, घनेन हन्तुं प्रवृत्तः। तावता इन्द्रेण आगत्य लोहकारो हतः, षण्मासान्ते गोशालोऽपि मिलितः।५। ततः पुनर्भद्रिकायां षष्ठचतुर्मासीं स्थितः। तत्र अष्टमासीं यावत् श्रीभगवान् निरुपसर्गोऽभवत्।६। ततः सप्तमचतुर्मासीं आलभिकायां देवकुले स्थितो, गोशालो बलदेवमुखे लिङ्गं लगयति। ततः पूजकादिलोकैः कुट्टितः। एकदा नवपरिणीताया

दन्तुरवध्वा हसितः, तत्रापि कुट्टितः। एकदा बहुसालग्रामे सालवनोद्याने श्रीभगवान् कायोत्सर्गे स्थितः। तत्र त्रिपृष्ठभवे अपमानितया अन्तःपुर्या कटपूतनाव्यन्तर्या शीतोपसर्गाः कृताः, विघ्नोपशमे देवैः महिमा कृता ।७। ततोऽष्टमचतुर्मासीं राजग्रहे श्रीभगवान् स्थितः ।८। ततोऽनार्यदेशे नवमचतुर्मासीं स्थितः। तत्र बहवः उपसर्गाः जाताः। एकदा स्वामी मगधे राजगृहे चम्पायाः अन्तराले स्थितः। गूर्वरग्रामे कौशाम्बीकौटिकेन आसन्नभग्नग्रामात् बहिःपतितं अपत्यं दृष्ट्वा, अपुत्रत्वेन गृहीतं। तस्य माता च चौरैः चम्पायां विक्रीता वेश्या जाता। सोऽपि तत्र यौवने व्यापारार्थं गतः, तां वेश्यां गच्छन् गोवत्सरूपगोत्रदेवीप्रपञ्चेन मातरं ज्ञात्वा, प्रतिबुद्धः सन् प्राणायाम–दीक्षां जग्राह। स वेश्यायनर्षिनाम्ना प्रसिद्धः कूर्मग्रामे आतापनां करोति। गोशालेन पार्श्वे गत्वा "त्वं यूकाशय्यातरोऽसि" इति वचनैः हीलितः। ततः तेन रुष्टेन तेजोलेश्या मुक्ता, स्वामिना तस्य रक्षणार्थं शीतलेश्या मुक्ता। ततो गोशालेन सिद्धार्थपार्श्वे तेजोलेश्योपायः पृष्टः, तेनाऽपि कथितः ।९। ततो भगवान् दशमचतुर्मासीं श्रावस्त्यां स्थितः। तत्र गोशालेन तेजोलेश्या षण्मासान् यावत् सनखमुष्टि-मध्यस्थकुल्माषभक्षणेन चुलुकप्रमाणपानीयपानेन आतापनादिविधिना च साधिता, अष्टाङ्गनिमित्तं च शिक्षितं। ततोऽजिनोऽपि जिनप्रलापी जातः। एकदा स्वामी म्लेच्छदेशं गतः, तत्र श्वानाद्युपसर्गाः जाताः, ते सर्वेऽपि सोढाः। पुनः श्रीभगवान् दृढभूमौ[पोद्दाल]पेढालोद्याने पोलासचैत्ये अष्टमभक्तेन कायोत्सर्गे स्थितोऽस्ति, तदवसरे सौधर्मेन्द्रेण श्रीवीरप्रशंसा कृता। लोकत्रयं मिलित्वा उपसर्गान् यदा करोति तदापि श्रीवीरो

ध्यानात् न चलति, तद्वचनं श्रुत्वा इन्द्रस्य सामानिकदेवोऽभव्यः सङ्गमनामा 'अर्हन्तं चालयिष्यामि, कोऽयं धान्यकीटकोऽस्मदग्रे' इति अमर्षं कृत्वा, आगत्य एकस्यां रात्रौ विंशतिमुपसर्गान् अनुलोमप्रतिलोमान् अकरोत्। तथाहि–प्रथमं रजोवृष्ट्या अक्षिकर्णादिस्रोतःपूर्त्या स्वामी निरुच्छ्वासः कृतः १, वज्रतुण्डकीटिकाभिः स्वामिदेहः चालनीतुल्यः कृतः, तेन ताः एकेन स्रोतसा प्रविशन्ति, अन्येन निःसरन्ति २, पुनः वज्रमुखैः उद्दंशैः देहस्तुदितः ३, तीक्ष्णतुण्डिकाभिः घृतेल्लिकाभिः भक्षितः ४, एवं वृश्चिकैः ५, नकुलैः ६, सर्पैः ७, मूषकैः ८ च भक्षितः। पुनः हस्तिहस्तिनीभ्यां शुण्डया उल्लालितः ९, चरणयोरधो मर्दितश्च १०, पिशाचरूपं कृत्वा अट्टाट्टहासादिना भापितः ११, व्याघ्ररूपेण दंष्ट्रानखैः [विलूरितः] विदारितः १२, सिद्धार्थरूपं त्रिशलारूपं च कृत्वा करुणाविलापादिना उपसर्गितः १३, सूपकाररूपेण प्रभोः पादयोः मध्ये अग्निं प्रज्वाल्य स्थालीं उपस्थाप्य च अन्नं पचति स्म १४, चाण्डालरूपेण तीक्ष्णमुखपक्षिणां पञ्जराणि प्रभोः कर्णबाहुमूलादिषु लम्बितानि, ते च पक्षिणो मुखैः भक्षयन्ति स्म १५, खरवातो विकुर्वितो यः पर्वतान् अपि विकम्पयन्, प्रभुं उत्क्षिप्य उत्क्षिप्य पातयति स्म १६, कलकलिकावातेन श्रीभगवान् चक्रवत् भ्रामितः १७, पुनर्येन मेरुचूलापि चूर्णी स्यात् तादृशेन भारसहस्रलोहमयचक्रेण भगवान् आहतो भूमौ आजानुनिमग्नः १८, प्रान्ते प्रभातं विकुर्व्य भणितो–"भगवान् हे देवार्य! अद्यापि कथं तिष्ठसि?" प्रभातं जातं, स्वामी ज्ञानेन रात्रिं वेत्ति १९, ततो देवर्द्धिं विकुर्व्य, दर्शयित्वा च भणति–"हे महर्षे! अहं तुष्टोऽस्मि, त्वं वृणीष्व वरं, तव स्वर्गेण मोक्षेण वा प्रयोजनं स्यात् तदा

ददामि ।" तथापि अक्षुब्धं दृष्ट्वा, पुनः देवाङ्गनानाट्यगीतगानतानमानहावभावविभ्रमलीलाविलासादिभिः उपसर्गितः, परं श्रीभगवान् न कुत्रापि रोममात्रमपि क्षुब्धः २०, ततः स्वामिनो वालुकाख्यग्रामं[मे] गच्छतोऽन्तराले पञ्चशतचौरा विकुर्विता मातुल इति चटुनादादिना विडम्बितः । ततः सुभूमग्रामे स्वामिरूपं आवृत्य, स्त्रीणां प्रार्थनाञ्जलीः करोति स्म, काणाक्षि च दर्शयति स्म, पिशाचरूपं विकुर्व्य स्त्र्यादीन् भापयति स्म । पुनः हस्तिशीर्षग्रामे स्त्रीदर्शने त्वचं अपकृष्य विकृतिं लिङ्गं करोति स्म । ततः कुट्टनोपसर्गो जातः । स्वामिनापि चिन्तितं–"एष बाढं उड्डाहकारकोऽनेषणां च करोति, ततो ग्रामे प्रवेशो न युक्तो मम" इति ग्रामात् बहिरेव तिष्ठति श्रीभगवान्, तथापि कुशिष्यरूपं विकुर्व्य खात्रं पातयति, जनैः मार्यमाणो वक्ति–"नाऽहं जाने, गुरुणा प्रेषितः ।" ततो मोसलिग्रामे गृहान्तराणि विलोकयति । जनैः पृष्टः प्राह–"ममाचार्यो रात्रौ खात्रं खनिष्यति" इत्यादिकान् उपसर्गान् षण्मासीं यावत् अकरोत् सङ्गमः, ततो विषण्णः सन् स्वर्गमगात् । यावन्तं कालं सङ्गमेन उपसर्गाः कृताः, तावन्तं कालं सौधर्मवासिनः सुरा निरानन्दा निरुत्साहा उद्विग्नाः सन्तः स्थिताः । इन्द्रोऽपि मुक्तनेपथ्याङ्गरागोऽत्यन्तदुःखितः सङ्गीतकादिसुखविमुखः सन् स्थितः । ततः सङ्गमं आगच्छन्तं दृष्ट्वा, कोपात् पराङ्मुखीभूय वामपादेन हत्वा स्वर्गात् निष्कासितोऽग्रमहिषीयुतोऽन्यपरिवारवर्जितः मेरुचूलायां गत्वा स्थितः । तस्य सागरोपमायुः अस्ति, साम्प्रतं च तत्र वर्तते ॥ इति संगमोपसर्गाः ॥ ततो व्रजग्रामे गोकुले वत्सपाल्या–स्थविरया परमान्नेन षण्मासिकतपःपारणे प्रतिलाभितो, वसुधारावर्षणं जातं,

इन्द्राद्याः सुखसमाधिपृच्छार्थं समागताः ॥ १० ॥ ततः श्रीभगवान् वैशाल्यां नगर्यां एकादशचतुर्मासीं स्थितः। सुसमारग्रामे चमरोत्पातो जातः। इतश्च भगवता कौशाम्ब्यां नगर्यां पौषवदि १ दिने अभिग्रहो गृहीतो द्रव्यतः कुल्माषान् शूर्पकोणकस्थितान् १, क्षेत्रतो देहिल्यां एकं पादं मध्ये कृत्वा एकं पादं आरतः कृत्वा २, कालतो मध्याह्ने ३, भावतो राजसुता दासीत्वं प्राप्ता पादयोः निगडिता मस्तके मुण्डिता अष्टमभक्तिका, सापि रुदन्ती दास्यति, तदा भिक्षा ग्राह्या पारणं च कर्तव्यं, इत्येवं अभिग्रहं लात्वा, सर्वत्र भ्रमति स्म। इतश्च चम्पापुरी नगरी दधिवाहनो राजा धारिणी भार्या, तस्याः पुत्री वसुमती, द्वितीयनाम चन्दनबाला इति। तत्समये कौशाम्बीनगरी, तत्र शतानीको राजा, तेन शतानीकेन परस्परं विरोधभावात्, चम्पानगरी भग्ना, सेनाचरैः यथेच्छं लुण्टिता च निःस्वामितया। एवं सति केनचित्पदातिना मातृयुता चन्दना धृता आनीता च, कौशाम्ब्यां गत्वा गेहिनीं करोमीति श्रवणात् मार्गे धारिणी मृता, पश्चात् 'त्वं मम भगिनी' इति आश्वास्य चन्दनबाला जीवन्ती स्थापिता, स्वगृहे च आनीता, परं पत्न्या हक्कितः–'किं अन्यां इमां करिष्यसि ?।' ततः तत् भयात् तेन पदातिना चन्दना चतुष्पथे विक्रेतुं मण्डिता। तदा सुरूपत्वेन वेश्याभिर्ग्रहीतुं वाञ्छिता। तदा चन्दनया ताः पृष्टाः–'युष्माकं क आचारः ?' तदा ताः प्रोचुः–'अस्माकं गृहे मृष्टान्नपानाहारो भुज्यते, उत्तमप्रधानबहुमूल्यवस्त्राणि परिधीयन्ते, मनोमान्यः पुरुषः सेव्यते' परं चन्दनायाः स आचारो न रुचितः। ततस्ताभिः बलात्कारे क्रियमाणे शासनदेवतया कासांचित् नासिका छिन्ना, कासांचित् कर्णौ छिन्नौ। ततः

ताः भीताः नष्टा गताः। ततो जिनधर्मं क्रियमाणं धनावहश्रेष्ठिनं आकार्य, चन्दना प्रोचे–"मां त्वं गृहाण", ततो धनावहेन मूल्यं दत्त्वा गेहे आनीता। तस्य भार्या मूला तां दृष्ट्वा दध्यौ–"मम पतिः नवीनां भार्यां करिष्यति" ततो द्वेषं वहति। एकदा पादधावने चन्दना वेणीं भूमौ रुलन्तीं दृष्ट्वा, श्रेष्ठी तां उच्चैस्तरां नीतवान्। तदा तथाकुर्वन्तं पतिं दृष्ट्वा दध्यौ–"मम पतिः 'पुत्रीं पुत्रीं' (इति) वक्ति, परं रागग्रस्तः पत्नीं करिष्यति, मा मम सपत्नी भवतु" इति हेतोः कार्यार्थं गते ग्रामे श्रेष्ठिनि, मूलया मस्तकं मुण्डयित्वा, पादयोः निगडं क्षिप्त्वा, कौरकवस्त्रं परिधाप्य, अपवरकमध्ये कोष्ठिकायां क्षिप्ता। चन्दना च तत्रस्था नमस्कारान् गुणयन्ती स्वकर्म निन्दन्ती तिष्ठति। उपवासत्रयं च जातं। अत्रान्तरे श्रेष्ठिना आगत्य पृष्टं–"क्व गता चन्दना ?।" मूला प्रोचे–अहं न जानामि, सा सर्वत्र परिभ्रमति।" तदा श्रेष्ठी परिवारं पप्रच्छ–तदा मूला गृहद्वारं दत्त्वा, कुञ्चिकां रहसि मुक्त्वा, अन्यत्र गता। तदा वृद्धदास्या प्रोक्तं–"यदि चन्दना विलोक्यते तदा अस्मिन् अपवरके विलोकयत।" तदा श्रेष्ठी तत्र गत्वा, गृहद्वारं उत्घाट्य, कोष्ठिकामध्यात् बहिः निष्कासितवान्। चन्दना च एकं पादं उदम्बरात् बहिः, एकं पादं मध्ये कृत्वा स्थिताऽस्ति। तदा क्षुधितां दृष्ट्वा, गृहद्वारस्य जटितत्वात् रन्धनगृहे कुल्माषान् दृष्ट्वा, शूर्पे क्षिप्त्वा "हे पुत्रि ! पारणं कुरु" इत्युक्त्वा दत्तवान्। स्वयं श्रेष्ठी निगडभञ्जनार्थं लोहकाराकारणाय गतः। अत्रान्तरे गोचरीं कुर्वन् [गच्छन्] श्रीभगवान् तत्र आगतः। प्रभुं दृष्ट्वा, चन्दना हर्षिता सती प्रभुं प्राह–"हे स्वामिन्! शुद्धं आहारं गृहाण, पादौ [पाणौ] प्रसारय,

मां च निस्तारय।" ततः स्वामिना उपयोगो दत्तः, ममाऽभिग्रहश्चतुर्विधोऽपि पूर्णो जातो दृश्यते द्रव्यक्षेत्र-
कालभावैः, परं नो रोदितीति निवृत्तः प्रभुः, तदा चन्दना दुःखात् रोदितुं लग्ना। ततः श्रीभगवता कुल्मा-
षाहारो गृहीतः, देवैः पञ्चदिव्यानि प्रकटितानि। सार्धद्वादशस्वर्णकोटिवृष्टिः जाता। निगडाः स्वर्णमयी-
भूय पतिताः। मस्तके वेणी पूर्वावस्था जाता। राज्ञा आगत्य प्रोक्तं–"हे पुत्रि! इदं धनं वसुधारावर्षणरूपं
त्वं गृहाण, गृहं मण्डय।" चन्दना प्राह–"मम पत्या प्रयोजनं नास्ति, अहं दीक्षां ग्रहीष्ये।" तावता तत्र
संपुलो नाम दधिवाहनस्य कञ्चुकी चन्दनापादयोः निपत्य प्ररुदः–"कथं मृगावत्या भगिनी पद्मावती सा
दधिवाहनेन परिणीता?।" धारिणी च पद्मावत्याः सपत्नी इति हेतोः धारिण्यपि मृगावत्याः भगिन्येवेति, तयापि
मृगावत्या मम भगिनीसुता एषा इति उपलक्षिता। ततः इन्द्रेण आगत्य, चन्दना शतानीकस्य समर्पिता,
कथितं च–"भव्यरीत्या रक्षणीया। यावत् श्रीभगवतः केवलज्ञानं नोत्पद्यते। ततः एषा श्रीभगवत्पार्श्वे
दीक्षां लास्यति, केवलज्ञानमपि शीघ्रमेव भावि।" अत्र श्रीभगवता पञ्चदिनैः ऊनया षण्मास्या भिक्षा लब्धा
११, ततः श्रीभगवान् द्वादशचतुर्मासीं चम्पायां स्थितः १२, ततः त्रयोदशचतुर्मास्यां षड्ग्रामे बहिःकायो-
त्सर्गे स्थितस्य श्रीभगवतः कर्णयोः कांस्यशलाके गवां अदर्शने गोपः चिक्षेप, ते च मिथो मिलिते तदग्रे
छित्त्वा, अदृश्ये चकार। स गोपः पूर्वभवे शय्यापालकोऽभूत्, यस्य कर्णयोः त्रिपृष्ठवासुदेवेन महावीरजीवेन
तप्तं त्रपु क्षिप्तमासीत्। ततः श्रीभगवान् वेदनाक्रान्तोऽतिदुर्बलो मध्यमपापायां सिद्धार्थवणिग्गृहे गतः। तेन

कर्णकीलकस्वरूपं ज्ञात्वा, खरकवैद्याय प्रोक्तं। ततो द्वाभ्यां मिलित्वा, कर्णकीलकप्रान्ते अम्लिकावृक्षशाखायां च दुकूलदवरकौ बध्वा, समकालं मुक्तौ, कीलकौ निर्गतौ। क्वापि सण्डासकाभ्यां कर्षितौ इति लिखितमस्ति। क्वापि अन्यप्रकारेणापि। प्रभुणा च रार्टिर्मुक्ता, पर्वतो द्विधाऽभवत्। वडग्रामे श्राद्धौ द्वौ, ताभ्यां प्रभुपादुके चक्राते। ततः प्रभुः नीरोगो जातः। गोपः सप्तम्यां नारक्यां गतः, सिद्धार्थखरकौ देवलोकं गतौ। एषु उपसर्गेषु जघन्येषु कटपूतनाकृतं शीतं १, मध्यमेषु कालचक्रं २, उत्कृष्टेषु कर्णशल्योद्धारः ३॥

॥ इति उपसर्गाः संपूर्णाः ॥

अथ श्रीभगवतः तपोदिनमानं शिष्यव्यामोहटालनार्थं वार्तिक-संस्कृताभ्यां लिख्यते-छमासी १ तस्याः मासाः ६, चउमासी ९ तासां मासाः ३६, त्रिमासी २ तयोर्मासाः ६ बेमासी ६, तासां मासाः १२, एकमासी १२ तासां मासाः १२, अर्धमासी ७२ तासां मासाः ३६, दौढमासी २ तयोर्मासाः ३, अढाईमासाः २ तयोर्मासाः ५, छम्मासीपंचदिनोन १ तस्या मासाः ५ दिन २५, छठ २२९ तेषां मास १५ दिन ८, एकभद्रप्रतिमा तस्या दिन २, एकमहाभद्रप्रतिमा तस्या दिन ४, एक सर्वतोभद्रप्रतिमा तस्या दिन १०, एकरात्रिकीः प्रतिमाः=त्रिदिवसकीः प्रतिमाः १२ [अष्टमभक्तेन एकैकां चरमरजनीनिष्पन्नामिति] तासां मास १ दिनानि ६॥ अथ सर्वे तपोमासा १३७ दिन ५५ दिनानां मासकरणे मास १ दिन २५ सर्वतपो मासमीलने मास १३८ दिन २५ पारणानां मासा ११ दिनानि [दीक्षादिन १] २० तपसः पारणमासानां दिनानां च तपसो

मासदिनेषु प्रक्षेपे कृते मासा १४९ दिन ४५ दिनानां मासकरणे मासमध्ये प्रक्षेपे सर्वमास १५० दिन १५ मासदिनेषु प्रक्षेपे कृते मासा १४९ दिन ४५ दिनानां मासकरणे मासमध्ये प्रक्षेपे सर्वमास १५० दिन १५ एतावता द्वादशवर्षाणि १२ त्रयोदश-मासानां वर्षकरणे वर्षाणि द्वादश १२ मासाश्च षट् ६ दिनानि १५ एतावता द्वादशवर्षाणि त्रयोदशपक्षाश्च कथं मिलन्ति? पक्षाश्च १३ श्रीभगवतः छद्मस्थकालः। अत्राह शिष्यः—ननु द्वादशवर्षाणि त्रयोदशपक्षाश्च कथं मिलन्ति? श्रीभगवता दीक्षा गृहीता मार्गशीर्षवदि दशमीदिने, केवलज्ञानं तु वैशाखसुदि दशमीदिने उत्पन्नं। एवं च सति एकादशपक्षा एव वर्धन्ते न त्रयोदश, एतावता एको मासो हीयते। अत्रोच्यते—शृणु सावधानीभूय, सार्धद्वादशवर्षैः सार्धे द्वे युगे भवतः। अथ च युगे युगे मासद्वयं वर्धते, एवं सार्धे युगद्वये पञ्चमासा वर्धन्ते। अथ च प्रतिवर्षं षड्दिनानि हीयन्ते, एवं सार्धद्वादशवर्षैः पञ्चसप्ततिर्दिनानि हीयन्ते। एतावता सार्धमासद्वयं हीयते। एकमासस्तु पक्षद्वयसंबन्धी पूर्वोक्तो हीयते, एवं सार्धमासत्रयं हीयते। तत् पञ्चमासेभ्यः पात्यते, इत्थं त्रयोदश पक्षा भवन्ति, परं सार्धमासः पञ्चमासमध्ये वर्धते। तत्राऽयं परमार्थः श्रीआचाराङ्ग उपधानश्रुताख्ये नवमे अध्ययने चतुर्थोद्देशके एवं श्रीभगवतस्तपः प्रोक्तं अस्ति, तथाहि—"छट्ठेण एगया भुंजे अदुवा अट्ठमेण दसमेणं, दुवालसमेण एगया भुंजे" इति। ततः सर्वं मिलति। परं श्रीआवश्यकादौ छद्मस्थपर्यायः तपःसंकलनायां केनापि कारणेन आचाराङ्गोक्तषष्ठादितपःसंकलना न कृता, तत्परमार्थं ते एव जानन्ति। एवं सर्वतपसि श्रीभगवतो जघन्यं तपस्तु षष्ठं, न चतुर्थं, सर्वमपि तपो अपानकं सर्वछद्म-स्थावस्थामध्ये प्रमादस्तु अन्तर्मुहूर्तकालः। तथा भगवतो नन्दनभवसंबन्धि तपोऽप्येवं नन्दननृपेण २४ चतु-

विंशतिलक्षवर्षेभ्यः पश्चात् पोट्टिलाचार्यसमीपे दीक्षा गृहीता, तत्र लक्षवर्षदीक्षायां मासमासक्षपणेन पारणं चक्रे। ततो लक्षवर्षेषु ११ एकादश लक्षा ८०ऽशीति सहस्रषट् ६ शत ४५ पञ्चचत्वारिंशत्पारणानि उपरि दिन ५ वर्षलक्षस्य ३६६ गुणने दिनानि ३६००००००॥ जातानि, तेषां तपोदिन ३० पारणकदिन १ एवं ३१ दिनैर्भागे दत्ते ११ एकादशलक्षादि पूर्वोक्तं मानं स्यात् ॥

॥ इति श्रीवीरतपःसंकलना ॥

अथ श्रीभगवतो ज्ञानकल्याणकं प्राह—

तस्स णं भगवंतस्स अणुत्तरेणं नाणेणं अणुत्तरेणं दंसणेणं अणुत्तरेणं चरित्तेणं अणुत्तरेणं आलएणं अणुत्तरेणं विहारेणं अणुत्तरेणं वीरिएणं अणुत्तरेणं अज्जवेणं अणुत्तरेणं मद्दवेणं अणुत्तरेणं लाघवेणं अणुत्तराए खंतीए अणुत्तराए मुत्तीए अणुत्तराए गुत्तीए अणुत्तराए तुट्ठीए अणुत्तरेणं सच्चसंजमतवसुचरिअसोवचिअफलनिव्वाणमग्गेणं अप्पाणं भावेमाणस्स दुवालस संवच्छराइं विइक्कंताइं, तेरसमस्स संवच्छरस्स अंतरा वट्टमाणस्स जे से गिम्हाणं दुच्चे मासे चउत्थे पक्खे वइसाहसुद्धे, तस्स णं वइसाहसुद्धस्स दसमीपक्खेणं पाईणगामि-

णीए छायाए पोरिसीए अभिनिविट्टाए पमाणपत्ताए सुव्वएणं दिवसेणं विजएणं मुहुत्तेणं जंभियगामस्स नगरस्स वहिआ उज्जुवालियाए नईए तीरे वेयावत्तस्स चेइअस्स अदूरसामंते सामागस्स गाहावईस्स कट्ठकरणंसि, सालपायवस्स अहे गोदोहिआए उक्कुडुअनिसिज्जाए आयावणाए आयावेमाणस्स छट्ठेणं भत्तेणं अपाणएणं हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं झाणंतरिआए वट्टमाणस्स अणंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे समुप्पन्ने ॥ १२० ॥

व्याख्या–"तस्स णं त्ति" तस्य भगवतः अनुत्तरेण प्रधानेन ज्ञानेन–मतिज्ञानादिचतुष्टयेन दर्शनेन–चक्षुर्दर्शनादिना सम्यक्त्वेन वा। अनुत्तरपदं सर्वत्र पदेषु विशेषणीभूतं कार्यं, चारित्रेण–महाव्रतादिना आलयेन–स्त्र्याद्यसंसक्तवसत्यादिना, विहारेण–देशादिषु चंक्रमणादिना, वीर्येण=विशिष्टोत्साहेन, आर्जवेन=मायानिग्रहेण, मार्दवेन=माननिग्रहेण, लाघवेन–क्रियासु दक्षत्वेन, अथवा लाघवं=द्रव्यतोऽल्पोपधित्वं भावतो गौरवत्रयत्यागः तेन, क्षान्त्या=क्रोधनिग्रहेण, मुक्त्या=निर्लोभतया, गुप्त्या=मनोगुप्त्यादिकया, तुष्ट्या–मनःप्रह्लात्या [प्रसत्त्या] सत्यं=सूनृतं, संयमं=प्राणिदया, तपो–द्वादशभेदं, तेषां सुष्ठु–विधिना चरितं=आचरणं, उपचयनं=उपचितं सह

उपचितेन–उपचयेन वर्तते सोपचितं, सत्यसंयमतपः सुचरितेन सोपचितं–स्फीतं फलं मुक्तिलक्षणं यस्य सः। तथा स चासौ निर्वाणमार्गश्च–रत्नत्रयलक्षणः तेन आत्मानं भावयतो–वासयतः अनेन आत्मज्ञानमेव मोक्षस्य प्रधानं साधनमिति उक्तं। द्वादशवर्षाणि व्यतीतानि, त्रयोदशस्य वर्षस्य पक्षाधिकषण्मासलक्षणे वर्तमानस्य ग्रीष्मकालस्य द्वितीयो मासः, चतुर्थः पक्षः। एतावता वैशाखसुदि दशमीदिवसे प्राचीनगामिन्यां छायायां पौरुष्यां अभिनिवर्तमानायां प्रमाणप्राप्तायां प्रहरत्रये व्यतीते इत्यर्थः। सुव्रतनामदिवसे, विजयनाममुहूर्ते, जृम्भिकानाम नगर्या बहिः ऋजुवालिका नाम नद्यास्तीरे, व्यावृत्तचैत्यत्वात् व्यावृत्तचैत्यं तस्य जीर्णोद्यानस्य इत्यर्थः। जीर्णं व्यन्तरायतनस्य विजयावर्तनाम्नो वा चैत्यस्य अदूरसामन्ते–दूरासन्ने उचितप्रदेशे इत्यर्थः। श्यामाकनाम्नो गृहपतेः–कौटुम्बिकस्य "कट्ठकरणंसि" क्षेत्रे–धान्योत्पत्तिस्थाने, शालपादपस्याधः गोदोहिकायां–उत्कुटिकनिषद्यायां, तयोः लक्षणं–"पुतपार्ष्णिसमायोगे, प्राहुरुत्कुटिकासनम्। पार्ष्णिभ्यां तु भुवस्त्यागे, तत् स्याद्गोदोहिकासनम् ॥ १ ॥" आतपनां कुर्वतः १ षष्ठेन तपसा अपानकेन उत्तराफाल्गुनी-नक्षत्रे चन्द्रेण सह योगमुपागते, ध्यानान्तरिकायां वर्तमानस्य तत्र ध्यानं चतुर्धा, पृथक्–त्ववितर्कं सविचारं १ एकत्ववितर्कं अविचारं २ सूक्ष्मक्रियमप्रतिपाति ३ उच्छिन्नक्रियं अनिवर्ति ४ एषां आद्यभेदद्वये ध्याते शेषं भेदद्वयं अप्रतिपन्नस्य केवलज्ञानमुत्पन्नं, केवलज्ञानोत्पत्तौ श्रीभगवान् कीदृग् जातः?, तत्राह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे अरहा जाए, जिणे केवली सवन्नू सवदरिसी सदेवमणुआसुरस्स लोगस्स परिआयं जाणइ पासइ, सवलोए सवजीवाणं आगइं गइं ठिइं चवणं उववायं तक्कं मणो माणसिअं भुत्तं कडं पडिसेवियं आवीकम्मं रहोकम्मं, अरहा अरहस्सभागी, तं तं कालं मणवयकायजोगे वट्टमाणाणं सवलोए सवजीवाणं सवभावे जाणमाणे पासमाणे विहरइ ॥ १२१ ॥

व्याख्या—"तेणं कालेणं" ततश्च भगवान् महावीरः अर्हन् जातः=संपन्नः, अशोकादिमहापूजार्हत्वात् अर्हन् । क्वचित् "अरिहा" इति पाठः, तत्र अरीन्=रागादीन् हन्तीति अरिहा, अथवा अविद्यमानं रहः=एकान्तं प्रच्छन्नं सर्वज्ञत्वात् यस्य सः । "अरहा" इति, क्वचित्, "जाए" इत्यत्र "जाणए" इति पाठः, तत्र ज्ञायको=ज्ञाता रागादिभावसंबन्धिनां—स्वरूपकारणफलानां । पुनः कीदृशः जिनः ? । रागादिजेता, केवलानि—संपूर्णानि शुद्धानि अनन्तानि वा ज्ञानादीनि यस्य सन्ति स केवली । अत एव सर्वज्ञः—एकस्मिन् समये विशेषाववोधनात्, सर्वदर्शी—द्वितीयसमये सामान्याववोधनात्, सदेवमनुजासुरस्य लोकस्य पर्यायं, जातौ एकवचनं पर्यायान् उत्पादव्ययलक्षणान् जानाति केवलज्ञानेन पश्यति केवलदर्शनेन । न च पर्यायान् इत्युक्ते द्रव्यं न जानाति इत्याशङ्क्यं, उत्पादव्यययोः निराधारयोः अनुपपत्तेः । तयोर्ज्ञातयोः अविष्वग्भावेन वर्तिष्णु

अन्वयि द्रव्यमपि ज्ञातमेव स्यात्। अत एवाह–'सर्वलोके सर्वलोकवर्तिनां जीवानां आगतिं–यतः स्थानात् जीवा आगच्छन्ति विवक्षितं स्थानं। गतिं यत्र मृत्वा उत्पद्यन्ते, स्थितिं–कायस्थितिं भवस्थितिं च च्यवनं देवलोकात् देवानां मनुष्यतिर्यक्षु अवतरणं, उपपातं देवनारकाणां जन्म तेषां जीवानां, तर्कं=तदीयं, मनः=चित्तं, मानसिकं=चित्तगतं चिन्तारूपापन्नपुद्गलजातं, यद्यपि मनो–मनोगतयोः नास्ति वास्तवो भेदः, तथापि व्यवहारनया अनुसरणात् अस्त्येव भेदः। तथा च वक्तारो वदन्ति–"मम इदं मनसि वर्तते" इति। भुक्तं=अशनादि, कृतं=चौर्यादि, प्रतिसेवितं=मैथुनादि परिषेवितं वा, आविःकर्म प्रकटीकृतं रहःकर्म प्रच्छन्नकृतं जानाति=पश्यति चेति, 'डमरूकमणिन्यायेन' अत्रापि संबध्यते। "अरहा" प्राग्वत्, अरहस्यभागी–न रहस्यं–एकान्तं भजते, जघन्यतोऽपि देवकोटिसेव्यत्वात्, "तं तं कालं ति" तत्र तत्र काले मनोवचनकाययोगे वर्तमानानां सर्वजीवानां सर्वभावान्–गुणपर्यायान्, तत्र सहभाविनो गुणा ज्ञानादयः, क्रमभाविनः पर्याया हर्षादयः तान्, जानन् पश्यन् च विहरति–आस्ते॥

अथ श्रीभगवतः केवलज्ञाने उत्पन्ने देवैः समवसरणं कृतं, बहवो–जनाः कोटिशो–देवाश्च आगत्य उपविष्टाः। श्रीभगवता धर्मदेशना क्षणं दत्ता, परं न कोऽपि प्रतिबुद्धः, न केनापि प्रत्याख्यानादि अपि कृतम्, आश्चर्यभूतत्वात्। ततः श्रीभगवान् लाभाभावात्, ततो रात्रौ एव विहृत्य नवस्वर्णकमलेषु पादौ धरन्, अष्टमहाप्रातिहार्यविराजमानो देवकोटिपरिवृतो द्वादशयोजनैः मध्यमपापायां महसेनवने अगात्। तत्र नगरे

सोमिलो ब्राह्मणः तेन यज्ञार्थं एकादशद्विजोत्तमा आहूताः सन्ति, ते किंनामानः कियत्परिवाराश्च ?, तदाह— इन्द्रभूतिः १ अग्निभूतिः २ वायुभूतिः ३ व्यक्तः ४ सुधर्मा ५ मण्डितः ६ मौर्यपुत्रः ७ अकम्पितः ८ अचलभ्राता ९ मेतार्यः १० प्रभासश्चेति ११ पञ्चानां पञ्चशतपरिवारः, द्वयोः प्रत्येकं सार्धत्रिशतपरिवारः, द्वयोर्युगलयोः चतुर्णामित्यर्थः । प्रत्येकं त्रिशतपरिवारः, एवं सर्वेषां परिवारमीलनैः चतुश्चत्वारिंशत् शतानि ब्राह्मणानां एतेभ्योऽपि अन्येऽपि वाडवाः व्याकरणछन्दस्तर्कज्योतिःप्रमुखशास्त्रविदो मिलिताः सन्ति, तन्नामानि यथा— उपाध्याय १, शङ्कर २, ईश्वर ३, महेश्वर ४, धनेश्वर ५, सोमेश्वर ६, जानी ७, गङ्गाधर ८, गदाधर ९, विद्याधर १०, महीधर ११, धरणीधर १२, भूधर १३, श्रीधर १४, दामोदर १५, दवे १६, महादेव १७, शिवदेव १८, रामदेव १९, वामदेव २०, कामदेव २१, सहदेव २२, नरदेव २३, वासदेव २४, श्रीदेव २५, त्रिवाडी २६, विश्वपति २७, उमापति २८, प्रजापति २९, विद्यापति ३०, लीलापति ३१, गणपतिः ३२, भूपति ३३, महीपति ३४, लक्ष्मीपति ३५, देवपति ३६, गङ्गापति ३७, पण्डित ३८, जनार्दन ३९, गोवर्धन ४०, विष्णु ४१, कृष्ण ४२, मुकुन्द ४३, गोविन्द ४४, माधव ४५, केशव ४६, पुरुषोत्तम ४७, नरोत्तम ४८, जोसी ४९, त्रिवाडी ५०, हरिशर्म ५१, महाशर्म ५२, अग्निशर्म ५३, नागशर्म ५४, देवशर्म ५५, यज्ञशर्म ५६, नरहर ५७, हरिहर ५८, नारायण ५९, नीलकण्ठ ६०, वैकुण्ठ ६१, श्रीकुण्ठ ६२, स्वयंभू ६३, ब्रह्मभू ६४, प्रमुखाः सर्वेऽपि मिलित्वा, यज्ञकर्माणि कुर्वन्ति, तस्मिन् समये यज्ञपाटकस्य एकस्मिन् देशे श्रीवीरः समवसृतो देवैः समव-

सरणं मण्डितं। देवाश्च श्रीभगवतो वन्दनार्थं समागच्छन्तो वाद्यनिर्घोषं कुर्वन्ति। ब्राह्मणाश्च तं वाद्यनिर्घोषं श्रुत्वा, हर्षिताः प्रोचुः—"अहो! अस्माकं यज्ञकर्मणि यागहोममन्त्रादिना आकृष्टाः सन्तो देवा आगच्छन्ति, परं ते देवा चाण्डालपाटकमिव यज्ञपाटकं मुक्त्वा गताः! श्रीभगवत्समवसरणे। तत इन्द्रभूतिना अमर्षेण चिन्तितं—"अहो! मयि सति अन्योऽपि कोऽपि पण्डिताऽभिमानी आडम्बरकर्ता वर्तते?। अहो! लोका भ्रमन्ति, परं देवाः सर्वज्ञबुद्ध्या कथं तत्र गत्वा स्तुवन्ति?, वन्दन्ते अहो!। देवा यागं त्यक्त्वा, यान्ति ते किंवत्?, तीर्थपानीयं वायसा इव १, सरोवरं मण्डूका इव २, चन्दनं मक्षिका इव ३, सद्वृक्षं करभा इव ४, क्षीरान्नं शूकरा इव ५, सूर्योद्योतं घूका इव ६, निधानं निर्भाग्या इव ७, रत्नत्रयं पार्श्वस्था इव ८, स्वशीलं कुलटा इव ९, सुगुरुं कुशिष्या इव १०, अथवा सदृशो योगो यादृशा एते देवादयः तादृशो ज्ञानी इन्द्रजालिकः, तथाप्यहं न सहिष्ये एनं इन्द्रजालिकं। न च सूर्यद्वयं आकाशे १, नापि केसरिद्वयं गुहायां २, न च खड्गद्वयं कोशे तिष्ठेत् ३। ततः इन्द्रभूतिना केऽपि लोकाः पृष्टाः—"भो! अयं इन्द्रजालिकः कलाकुशलः सर्वज्ञतां धरन्, वाग्विलासेन देवानपि विप्रतारयन् कीदृक् वर्तते?।" लोकाः प्रोचुः—"अयं सर्वज्ञः, केन अस्य स्वरूपं कथयितुं शक्यते?।" ततः इन्द्रभूतिः प्राह—"अहमेनं सर्वज्ञं न सहे, किंवत्? तमःस्तोम सूर्यवत् १, करस्पर्शं अग्निवत् २, श्वापदशब्दं सिंहवत् ३, रिपुं क्षत्रियवत् ४। मया वादीन्द्रा अपि तूष्णीं स्थापिताः, तदा कोऽयं ममाग्रे गेहे शूरः?। येन अग्निना शैला दग्धाः, के तदग्रे वृक्षाः?। १ येन वातेन गजा उत्पाटिताः, का तदग्रे

कृतगुम्भिका ?। २, अग्निभूतिः प्राह–"हे भ्रातः! तव एतदुपरि पराक्रमचालनं किम् ?। कीटकोपरि काकटकी १, पङ्कशोषणे सूर्यस्य कः आदरः ? २, कमलनालछेदने किं खड्गोत्पाटनं ?। ३, मृगोपरि किं सिंहस्य फालदानं ? ४। ततो गौतमः प्राह–"भो! मया सर्वेऽपि वादिनो जिताः, तथापि अयं तिष्ठति, किंवत् ? मुद्गपाके करडूकणवत् १, पीलितेषु तिलेषु अखण्डतिलवत् २, दलितेषु गोधूमेषु अखण्डगोधूमकणवत् ३, सूडितेषु क्षेत्रेषु अखण्डतृणवत् ४, अगस्तिपीते समुद्रे पानीयबिन्दुवत् ५, सबलस्त्रीसूर्पछडिते तण्डुले तुषवत् ६। तथा अजितेऽस्मिन् मया न किमपि जितं, स्वल्पमपि छिद्रं विनाशाय, यतः स्वल्पमपि वेध्यं समुद्रे पोतमज्जनाय, दुर्गांशपातोऽपि दुर्गग्रहणाय स्यात्।" पुनः गौतमः प्राह–"ममाग्रे लाटा वादिनो दूरे गताः। कर्णाटास्तु अदृश्यतां गताः। मालवाः मौनमाश्रिताः, मागधा मूका जाताः, गौर्जरा गर्वं मुक्तवन्तः, काश्मीरा आगत्य प्रणताः, तिलङ्गाः पलायिताः। न कः अपि अस्ति यो मया सह वादं करोति, चेत् अयं कर्तुमिच्छति, ततो मण्डूकः कृष्णसर्पस्य चपेटां दातुं उद्यतः, अथवा उन्दिरो भुजङ्गमस्य दंष्ट्रा पाताय उत्थितः, अथवा वृषभः शृङ्गैः ऐरावणं प्रहर्तुं काङ्क्षति, अथवा हस्ती पर्वतपाताय उत्सुको जातः, शशको वा केसरिस्कन्धकेशान् आकृष्टुं इच्छति। अथवा अत्रागमनेन यदहं कोपितः तत् किं कृतं ?, वायुसंमुखं स्थित्वा दावाग्निः ज्वालितः, सौख्याय कपिकच्छूलता देहेन आलिङ्गिता, शेषनागस्य मस्तके स्थितं मणिं लातुं हस्तः प्रसारितः। अपि च–"तावद्गर्जति खद्योतः, तावद्गर्जति चन्द्रमाः। उदिते च सहस्रांशौ, न खद्योतो न चन्द्रमाः॥ १॥"

हस्ती तावद्गर्जति यावत् सिंहस्य नादं न शृणोति। अथवा यामि तस्य पार्श्वे "यमस्य मालवो दूरे नास्ति," वचनचातुरीवतां अपोषितो रसो नास्ति। न हि चक्रिणोऽजेयं किमपि, सुधियां किं अज्ञेयं ?, योगिनां किं न अस्वाद्यं ?, क्षुधितस्य किं न खाद्यं ?, कल्पवृक्षाणां किं न देयं ?, निर्विण्णानां किं अत्यजं ?। गच्छामि तर्हि तस्य समीपे तत्पराक्रमं पश्यामि, लक्षणे मम दक्षत्वं, साहित्ये मम संहिता मतिः, तर्के मम कर्कशता अस्ति, कस्मिन् शास्त्रे मम श्रमो नास्ति ?, अपितु सर्वत्र। ततः तत्र गत्वा इन्द्रजालिकं हतप्रतापं कृत्वा सर्वज्ञाडम्बरं दूरीकरोमि।" इत्युक्त्वा वादं कर्तुं पञ्चशतच्छात्रैः पठ्यमानबिरुदः चलितः। बिरुदावली यथा–सरस्वतीकण्ठाभरण, वादिविजयलक्ष्मीशरण, ज्ञातसर्वपुराण, वादिकदलीकृपाण, जितवादिवृन्द, वादिगरुडगोविन्द, वादिघूकदिवाकर, अज्ञानतिमिरनिशाकर, वादिमुखभञ्जन, राजसभारञ्जन, कुवादिप्रस्तरखण्डन, पण्डितसभामण्डन, वादिगोधूमघरट्ट, मर्दितवादिमरट्ट, वादिमृगसिंहशार्दूल, वचोवात्याविक्षिप्तवादिशूल, षड्भाषावल्लिमूल, परवादिमस्तकशूल, वादिकन्दकुद्दाल, रञ्जितानेकभूपाल, वादिवेश्याभुजङ्ग, शब्दलहरीतरङ्ग, सरस्वतीभण्डार, चतुर्दशविद्यालङ्कार, सर्वशास्त्राधार, [द्वासप्तति] वहुत्तरिकलाभर्तार, महाकवीश्वर, प्रत्यक्षपरमेश्वर, कूर्चालसरस्वती, प्रत्यक्षभारती, जितानेकवाद, लब्धसरस्वतीप्रसाद इत्यादि। अग्रे गत्वा श्रीमन्महावीरं दृष्ट्वा, सोपाने स्थितो दध्यौ–"किमयं ब्रह्मा ?, किंवा ईश्वरः ?, किंवा विष्णुः ?। अयं सूर्य इव दुःप्रेक्षः ! समुद्र इव दुर्लङ्घ्यो दृश्यते। अस्याऽग्रे कथं पुरार्जितं महत्त्वं रक्षणीयं ?, कीलिकानिमित्तं प्रसादं को भङ्क्तुं

वाञ्छति ?, सूत्रार्थी को हारं त्रोटयेत् ?, लोहार्थं समुद्रे को नौभङ्गं कुर्यात् ?, भस्मनिमित्तं कः चन्दनं दहेत् ?, ठिक्करीकृते कः कामकुम्भभङ्गं कुरुते ?। तत अत्यासन्नगमने श्रीभगवता गौतमो भाषितः–"हे इन्द्रभूते ! स्वागतं तव वर्तते।" ततो गौतमेन चिन्तितम्–"अहो अयं मम नामाऽपि जानाति, अथवा जगति प्रसिद्धस्य मम नाम को न जानाति ?। परं अयं जानाति मृष्टैः वाक्यैः संतोषयामि, यथा वादं न करोति। परं नाऽहं तुष्यामि, इत्थं तत् न कपित्थं यद्वातेन आन्दोलितं पतेत्। परं यदि मम मनोगतं संशयं जानाति छिनत्ति तदा मे विस्मयो भवेत्, सर्वज्ञं च जानामि।" ततः श्रीभगवता प्रोक्तं–"हे गौतम ! तव संशयो वर्तते– "जीवोऽस्ति न वा ?। परं त्वं वेदपदानामर्थं न जानासि।" इत्युच्यमाने श्रीवीरध्वनिः कीदृक् शुशुभे ?। समुद्रो मथ्यमान इव, वहन् गङ्गाप्रवाहो वा, आदिब्रह्मणो ध्वनिर्वा, वेदपदानि इमानि "विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय पुनस्तान्येव अनुविनश्यति, न प्रेत्यसंज्ञाऽस्तीति" जीवाभावः त्वया स्थाप्यते, परं काका व्याख्यानेन प्रेत्यसंज्ञास्ति, अपि तु अस्त्येव इति जीवसत्ता। पुनरपि "स वै अयमात्मा ज्ञानमयः चैतन्यमयो वै आत्मा मनोमयो वै आत्मा वाङ्मयः चक्षुर्मयः श्रोत्रमयः प्राणमय आकाशमयो वायुमयः तेजोमयो अपोमयः पृथ्वीमयः क्रोधमयो हर्षमयो धर्ममयोऽधर्ममयो वै आत्मा ददद"इति दकारत्रयो वेत्ति। दानं दया दमं चेति स वै आत्मा यथाचारी तथा भवति, साधुकारी साधुः भवति, पापकारी पापो भवति, पुण्यः पुण्येन कर्मणा, पापः पापेन कर्मणा भवति।" इति यजुर्वेदोपनिषदि ऋक् इति जीवसत्ता। पुनः इदं शरीरं

विद्यमानभोक्तृकं भोग्यत्वात्, ओदनादिवत्, यथा–क्षीरे घृतं, तिलेषु तैलं, काष्ठे अग्निः, पुष्पे सौरभ्यं, चन्द्रकान्ते सुधा, तथा जीवोऽपि देहान्तर्गतो ज्ञेयः, शरीरात् पृथक्" इति श्रीवीरमुखात् वेदपदानां अर्थं ज्ञात्वा जीवसत्तां च अङ्गीकृत्य, संशयं छित्त्वा, श्रीभगवतः समीपे पञ्चशतनिजशिष्यब्राह्मणैः सह दीक्षां जग्राह, त्रिपदीं लात्वा द्वादशाङ्गीं निर्ममे ॥ इति गौतमदीक्षा ॥ इति प्रथमो गणधरः ॥ १ ॥

अथ अग्निभूतिः द्वितीयो भ्राता गौतमं प्रव्रजितं श्रुत्वा चिन्तयति–"इदं कथं भवति ? न हि पर्वतो द्रवेत्, न हि जलं ज्वलेत्, न हि चन्द्रो वह्निं वर्षेत्, न हि वह्निः शीतलो भवेत्, नाऽपि अमृतात् मृत्युः, न च विषभक्षणे जीविताशा । तथापि तत्र गत्वा इन्द्रजालिकं हतप्रहतं कृत्वा बान्धवं लात्वा आगमिष्यामि । ततो गतः श्रीभगवत्समीपे, तथैव स्वागतप्रश्नानन्तरं मनोगतः संशयो भग्नः, नवरं तस्येति संशयः । "कर्म अस्ति न वा ?, तत्र 'पुण्यः पुण्येन, पापः पापेन कर्मणा इति कर्मसत्ता ॥' पुनः भुवनोदरवर्ति सौभाग्यदौर्भाग्यविरूपतादरिद्रतादि वस्तु समस्तमपि अविकलकारणजन्यं कार्यत्वात् । यद् यत् कार्यं तत् तदविकलकारणजन्यं यथा घटपटादिः एवं अनुमानसिद्धापि कर्मसत्ता स्फुटैव ।" एवं वीरमुखात् वेदार्थं श्रुत्वा छिन्नसंशयः प्रव्रजितः ॥ इति द्वितीयो गणधरः ॥ २ ॥ एवं तृतीयोऽपि तथैव प्रतिबुद्धो दीक्षां जग्राह । नवरं तस्य संशयस्तु–'अयं जीवः शरीरात् भिन्नो न, किंतु शरीरमेव जीवः ॥३॥' एवं चतुर्थो व्यक्तोऽपि तस्य संशयः–'पञ्चभूतानि सन्ति न वा ?' ॥४॥ एवं पञ्चमः सुधर्मा गणधरोऽपि तस्य संदेहः–'पुरुषो मृत्वा पुरुष एव जायते, स्त्री मृत्वा स्त्री एव जायते ॥५॥'

एवं षष्ठोऽपि मण्डितः तस्य संदेहः—'कर्मणां बन्धमोक्षौ वर्तेते न वा? ॥ ६ ॥' एवं सप्तमो मौर्यपुत्रः, तस्य संदेहः—'देवाः सन्ति न वा? ॥७॥' एवं अष्टमोऽकम्पितः, तस्य संदेहः—'नारकाः सन्ति न वा? ॥८॥' एवं नवमः अचलभ्राता, तस्य सन्देहः—'पुण्यपापानि वर्तेते न वा? ॥९॥' एवं दशमो मेतार्यः, तस्य संदेहः—'परलोकोऽस्ति न वा? ॥१०॥' एवं एकादशोऽपि प्रभासः, तस्य सन्देहः—'निर्वाणं अस्ति न वा? ॥ ११ ॥' एवं एकादशापि गणधराः श्रीवीरमुखात् वेदपदानां अर्थं श्रुत्वा, भग्नसंशया उत्पन्नवैराग्याः प्रतिबुद्धाः सन्तो निजनिजपरिवारसहिताः दीक्षां जगृहुः। सर्वेऽपि गणधराः त्रिपदीं लात्वा, द्वादशाङ्गीं रचयामासुः। विस्तरगणधरवादस्तु श्रीआवश्यकतत्परिकरादिभ्यो ज्ञेयः, मया तु अतिविस्तरभिया न लिखितोऽस्ति ॥

॥ इति गणधरवादः समाप्तः ॥

अथ श्रीभगवतः सर्वचतुर्मासीसङ्ख्यामाह, तत्राह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे अट्ठियगामं नीसाए पढमं अंतरावासं वासावासं उवागए १, चंपं च पिट्ठचंपं च नीसाए तओ अंतरावासे वासावासं उवागए ४, वेसालिं नगरिं वाणियगामं च नीसाए दुवालस अंतरावासे वासावासं उवागए १६, राय-

गिहं नगरं नालंदं च बाहिरियं नीसाए चउद्दस अंतरावासे वासावासं उवागए ३०, छ मिहिलाए ३६ दो भद्दिआए ३८ एगं आलंभियाए ३९ एगं सावत्थीए ४० एगं पणिअभूमीए ४१ एगं पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुगसभाए अपच्छिमं अंतरावासं वासावासं उवागए ४२ ॥ १२२ ॥ तत्थ णं जे से पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुगसभाए अपच्छिमं अंतरावासं वासावासं उवागए ॥ १२३ ॥

व्याख्या-"तेणं कालेणं" तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरोऽस्थिग्रामस्य निश्रया प्रथमं अन्तरावासं वर्षारात्रं "वासावासंति" वर्षासु उपवसनं उपागतः। अन्तरावास इति वर्षारात्रस्य आख्या, यदुक्तं-"अंतरघण सामलो भयवं," वर्षारात्रघनश्यामल इत्यर्थः १, चम्पा च पृष्ठिचम्पा च निश्रया अवलम्ब्य त्रयो वर्षा रात्राः ४। एवं वैशालीं वाणिज्यग्रामं च निश्रया द्वादश १६। नालन्दाबाहिरिकाः राजगृहात् उत्तरस्यां शाखापुरविशेषः। तत्र चतुर्दश ३०। षट् मिथिलायां ३६। द्वौ भद्रिकापुर्यां ३८। एक आलंभिकायां ३९। एकः श्रावस्त्यां ४०। एकः प्रणितभूमौ वज्रभूमाख्ये अनार्यदेशे ४१। एकः पापायां-मध्यमायां हस्तिपालस्य राज्ञो रिज्जुका-लेखकाः तेषां सभा अपरिभुज्यमाना करणशाला-जीर्णशुल्कशाला तस्यां प्राक् किल तस्या अपापेति नाम। देवैस्तु पापेत्युक्तं कथं? श्रीभगवतः तत्र निर्वृतत्वात् छद्मस्थत्वे जिनत्वे च द्विच-

त्वारिंशद्वर्षारात्राः । "पच्छिमे अंतरावासे वा०" पश्चिमशब्दः पर्यन्तवाची, मङ्गलार्थं च अपश्चिम इत्युक्तं २८ श्रीभगवान् अन्त्य-वर्षावासं उपागतः ।

अथ भगवतो निर्वाणकल्याणकं प्राह—

तस्स णं अंतरावासस्स जे से वासाणं चउत्थे मासे सत्तमे पक्खे कत्तिअवहुले, तस्स णं कत्तियवहुलस्स पन्नरसीपक्खेणं जा सा चरमा रयणी, तं रयणिं च णं समणे भगवं महावीरे कालगए विइक्कंते समुज्जाए छिन्नजाइजरामरणवंधणे सिद्धे वुद्धे मुत्ते अंतगडे परिनिवुडे सव्वदुक्खप्पहीणे, चंदे नामं से दुच्चे संवच्छरे, पीइवद्धणे मासे, नंदिवद्धणे पक्खे, अग्गिवेसे नामं से दिवसे, उवसमित्ति पवुच्चइ, देवाणंदा नामं सा रयणी, निरतित्ति पवुच्चइ, अच्चे लवे मुहुत्ते पाणू थोवे सिद्धे नागे करणे सव्वट्ठसिद्धे मुहुत्ते साइणा नक्खत्तेणं जोगमुवागएणं कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ १२४ ॥ जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे सा णं रयणी वहूहिं देवेहिं य देवीहि य ओवयमाणेहि य उप्पयमाणेहि य उज्जोविया आविहुत्था ॥ १२५ ॥ जं रयणिं च णं समणे

भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे सा णं रयणी बहूहिं देवेहिं य देवीहि य ओवयमाणेहिं उप्पयमाणेहि य उप्पिंजलगमाणभूआ कहकहगभूआ आविहुत्था ॥ १२६ ॥

व्याख्या—"तस्स णं" तत्र च "जे से त्ति" यस्मिन् अन्तरावासे वर्षारात्रे वर्षाकालस्य चतुर्थे मासे सप्तमे पक्षे एतावता कार्तिकवदि अमावसीदिवसे या सा चरमा—रजनी दिनापेक्षया पश्चाद्भाविनी रात्रिः, यद्वा अमावस्या रात्रेः पर्यन्तः तस्यां रजन्यां=रात्रौ तत्र भगवान् कालगतः कायस्थितिभवस्थित्योः कालाद् गतः व्यतिक्रान्तः=संसारात् समुद्यातः सम्यक् ऊर्ध्वं यातः, न सुगतादिवत्, ते हि ब्रुवते—

"ज्ञानिनो धर्मतीर्थस्य, कर्तारः परमं पदम् । गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥ १ ॥"

छिन्नं जात्यादीनां जरामरणबन्धनहेतुभूतं कर्म येन सः, सिद्धः=साधितार्थः, बुद्धो=ज्ञः मुक्तो—भवोपग्राहि-कर्मांशेभ्यः, अन्तकृत् सर्वदुःखानां, परिनिर्वृतः—कर्मकृतसकलसंतापविरहात् । किमुक्तं भवति—सर्वाणि दुःखानि शारीरमानसानि च प्रहीणानि यस्य । युगे हि पञ्च संवत्सराणि भवन्ति । तत्र तृतीयं पञ्चमं च अभि-वर्धिताख्यं, शेषाणि त्रीणि चन्द्राख्यानि । स च द्वितीयः चन्द्रसंवत्सरः तत्प्रमाणं—त्रीणि—शतानि चतुःपञ्चाशत् अधिकानि अहोरात्राणि द्वादश च द्विषष्टिभागा दिवसस्य दिन ३५४ भा० $\frac{12}{62}$ ततः चन्द्रनाम्नि द्वितीये संवत्सरे, प्रीतिवर्धननाम्नि मासे, नन्दिवर्धने पक्षे, अग्निवेशे दिवसे "उवसमेत्ति" इति शब्दो वाक्यालङ्कारे,

उपशम इत्यपि तस्य नामेत्यर्थः । देवानन्दा नाम सा अमावास्या–रजनी निर्ऋतिरित्यप्युच्यते । तस्यां अर्च्चनाम्नि लवे, मुहूर्त्तनाम्नि प्राणे प्राणापाने क्वचित्तस्य मुक्तेति नाम, सिद्धनाम्नि स्तोके एकादशकरणान्तर्वर्तिशकुन्यादिस्थिरकरणचतुष्टयमध्ये तृतीये नागनाम्नि करणे अमावास्या उत्तरार्धे हि तन्नागकरणं भवति । सर्वार्थसिद्धनाम्नि मुहूर्ते, स्वातिनक्षत्रे चन्द्रेण सह योगं वर्तमाने "जे से वासाणं चउत्थे मासे" इत्यत आरभ्य सूत्रे सर्वत्र प्रथमा अस्ति । फलितार्थकरणेन परमार्थतोऽत्राऽधिकरणत्वात् सप्तमी लिखिता अस्ति २६ ॥ अथ यस्यां रात्रौ श्रीभगवान् कालगतः तत्र देवदेवीभिः किं कृतं ?, इत्याह–"जं रयणिं च णं" आलापकद्वयं सुगमं, पूर्वं व्याख्यातं च ।

अथ श्रीभगवति मोक्षं गते गौतमस्य किं जातं ?, तत्राह—

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे तं रयणिं च णं जिट्ठस्स गोअमस्स इंदभूइस्स अणगारस्स अंतेवासिस्स नायए पिज्जबंधणे वुच्छिन्ने, अणंते अणुत्तरे जाव केवलवरनाणदंसणे समुप्पन्ने ॥ १२७ ॥

व्याख्या–"जं रयणिं च णं" यस्यां रात्रौ भगवान् मोक्षं गतः, तदा ज्येष्ठस्य अन्तेवासिनः शिष्यस्य

गौतमस्य गोत्रेण इन्द्रभूतेर्नाम्नः ज्ञातज्ञे-श्रीमहावीरविषये "पिज्जबंधणेत्ति" स्नेहबंधने व्यवच्छिन्ने सति= त्रुटिते सति केवलं उत्पन्नं, शेषं सुगमं २९। अत्रायं गौतमसंबन्धः—

भगवता स्वनिर्वाणसमये देवशर्मणः प्रतिबोधार्थं क्वापि गौतमो मुक्तः, तं प्रतिबोध्य पश्चादागच्छन् देवसंनिपातं दृष्ट्वा उपयोगेन स्वामिनिर्वाणं ज्ञात्वा वज्राहत इव शून्यचित्तः क्षणं तस्थौ। अब्रवीच्च–"हे वीर! त्वयि सूर्येऽस्तमिते अद्य मिथ्यात्वरूपं तिमिरं प्रसरति, कुतीर्थिकघूकाः गर्जन्ति, दुर्भिक्षडमरवैरादिनिकराः प्रादुर्भवन्ति। हे वीर! त्वं विना भरतक्षेत्रं राहुग्रस्तं चन्द्रं आकाशमिव विध्यातप्रदीपं गृहमिव जातं!। हा हा! वीर, त्वया किं कृतं?। यत ईदृशे अवसरे अहं दूरीकृतः, किमहं आडकं मण्डयित्वा, बालकवत् तवाञ्चले अलगिष्यम्, अथवा केवलज्ञानभागं अमार्गयिष्यम्, किंवा त्वयि अहं कृत्रिमरागः अभविष्यम्, किंवा मुक्तौ सांकीर्ण्यं, किंवा तव अणखकरोऽभवं, किंवा तव भारोऽभवम्?। हे वीर! कथं विसारितोऽहम्? अथ कस्याग्रे संदेहान् संप्रक्ष्ये?। को मां गोयमा इति वादयिष्यति?। हे वीर! विरहं कुर्वाणेन त्वया महान् विरामः कृतः!, कस्याग्रे कथयामि?। वीर वीर! वीची मे लग्ना।" पुनः विचारितं–"हुं हुं ज्ञातं, वीतरागा अस्नेहा भवन्ति, धिक् मम एकपाक्षिकं स्नेहं! अलं स्नेहेन! एकोऽस्मि, नास्ति मे कोऽपि द्वितीयः" एवं ध्यातवतः केवलज्ञानं उत्पन्नं। प्रातः इन्द्राद्यैः महिमोत्सवपूर्वं पट्टाभिषेकः कृतः। सर्वश्रीसङ्घस्य प्रमोदो जातः। पुनः तस्यां रात्रौ किं जातं?, तत्राह—

जं रयणिं च णं समणे भयवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे तं रयणिं च णं नव मल्लई नव लेच्छई कासीकोसलगा अट्ठारसवि गणरायाणो अमावासाए पाराभोयं पोसहोववासं, पट्ठविंसु, गए से भावुज्जोए, दव्वुज्जोअं करिस्सामो ॥ १२८ ॥

व्याख्या—"जं रयणिं च णं समणे" तस्यां रात्रौ काशिदेशस्य राजानो मल्लकिज्ञातीयाः नव, तथा कोशलदेशस्य राजानो लेच्छकिज्ञातीयाः नव, ते कार्यवशात् गणमेलापकं कुर्वन्ति, इति गणराजानो अष्टादश ये चेटकमहाराजस्य श्रीभगवन्मातुलस्य सामन्ताः ते तस्यां अमावास्यां पारं पर्यन्तं भवस्य आभोगयति आलोकयति=पश्यति यः सः पारालोकः—संसारसागरपारप्रापणप्रवणः तं, अथवा पारं पर्यन्तं यावदालोको विस्तारो यस्य सः पारालोको अष्टप्राहरिकः, प्रभातं यावत् संपूर्णं इत्यर्थः, तं तथाविधं पौषधोपवासं पौषधयुक्तोपवासं "पट्ठविंसु त्ति" प्रस्थापितवन्तः=कृतवन्तः। क्वचित् "वाराभोए" इति पाठः, तत्र द्वारं आभोग्यते=अवलोक्यते यैस्ते द्वाराभोगाः=प्रदीपाः तान् कृतवन्तः। आहारत्यागपौषधरूपं उपवासं अकार्षुः इति च व्याचक्षते। एतदर्थानुपाति च उत्तरसूत्रं—गतः स भावो ज्ञानरूपो—ज्ञानज्ञानिनोः कथंचित् अभेदात् ज्ञानमयो उद्योतो भगवान् गतो—निर्वाणं, अतो द्रव्योद्योतं प्रदीपरूपं करिष्यामः इति हेतोः तैः प्रदीपाः प्रवर्तिताः ततः प्रभृति दीपोत्सवः संवृत्तः। कार्तिकशुक्लप्रतिपदि च देवैः केवलमहिमा चक्रे, अतः तत्रापि

जनप्रमोदः । नन्दिवर्धननृपश्च श्रीभगवन्निर्वाणं श्रुत्वा शोकार्तः सन्, सुदर्शनया भगिन्या संबोध्य, सादरं स्वगृहे आकार्य भोजितः । ततो "भ्रातृद्वितीया पर्व" प्रवृत्तं । पुनः निर्वाणसमये किं जातं ?, तत्राह—

जं रयणिं च णं समणे भगवं महावीरे जाव सव्वदुक्खप्पहीणे तं रयणिं च णं खुद्दाए भासरासी नाम महग्गहे दोवाससहस्सठिई समणस्स भगवओ महावीरस्स जम्मनक्खत्तं संकंते ॥ १२९ ॥ जप्पभिइं च णं से खुद्दाए भासरासी महग्गहे दोवाससहस्सठिई समणस्स भगवओ महावीरस्स जम्मनक्खत्तं संकंते तप्पभिइं च णं समणाणं निग्गंथाणं निग्गंथीण य नो उदिए २ पूआसक्कारे पवत्तइ ॥ १३० ॥ जया णं से खुद्दाए जाव जम्मनक्खत्ताओ विइक्कंते भविस्सइ तया णं समणाणं निग्गंथाणं निग्गंथीण य उदिए २ पूआसक्कारे भविस्सइ ॥ १३१ ॥

व्याख्या-"जं रयणिं च णं समणे" यस्यां रात्रौ भगवान् सर्वदुःखप्रहीणो जातः तस्यां रात्रौ क्षुद्रात्मा क्रूरस्वभावो भस्मराशिनामा त्रिंशत्तमो महाग्रहः, द्विवर्षसहस्रस्थितिः एकराशौ एतावन्तं कालमवस्थानात् श्रीभगवतो जन्मनक्षत्रं संक्रान्तः । यदा च जन्मनक्षत्रं संक्रान्तः तदा तस्य फलमिदं—यत्प्रभृति श्रमणानां

निर्ग्रन्थानां निर्ग्रन्थीनां च उदित उदितः–स्फीतः स्फीतः पूजा–अभ्युत्थाना–हारदानादिभिः सत्कारो–वस्त्रादिभिः नो प्रवर्तते। यदा च अयं भस्मराशिग्रहो जन्मनक्षत्राद् व्यतिक्रान्तो भविष्यति, तदा पुनरपि निर्ग्रन्थानां निर्ग्रन्थीनां च पूजासत्कारो भविष्यति। अत एव इन्द्रेण तत्समये स्वामी विज्ञप्तः–"हे स्वामिन्! त्वयि मोक्षे गते तव सन्तानस्य वर्षसहस्रद्वयं यावत् पीडां करिष्यति। ततः क्षणमायुर्वर्धनेन भस्मग्रहमुखं विफलय।" ततः स्वामिना प्रोक्तं–"हे इन्द्र! त्वं मत्तीर्थभक्तः एवं वदसि? परं नैवं भूतं भविष्यति भवति वा। यत् कोऽपि तीर्थङ्करो वा चक्रवर्त्यादिर्वा स्वकीयं त्रुटितं आयुः सन्धातुं समर्थो भवति। भवितव्यतानुसारेण भस्मकग्रहस्योदयो जातः। पुनः कल्कि–कुनृपे मगदरपुत्रे षडशीतिवर्षायुषि सङ्घस्य उपप्लवं कुर्वति वर्षसहस्रद्वये संपूर्णे जाते, त्वया तस्मिन् हते भस्मकगृहे व्यतिक्रान्ते कल्किनृपे पुत्रस्य धर्मदत्तस्य त्वया स्थापितस्य राज्यात् आरभ्य तीर्थस्य पूजासत्कारो भविष्यति।

अथ श्रीभगवति कालं गते किं जातं?, तत्राह—

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे तं रयणिं च णं कुंथू अणुद्धरी नामं समुप्पन्ना, जा ठिया अचलमाणा छउमत्थाणं निग्गंथाणं निग्गंथीण य नो चक्खुफासं हव्वमागच्छति जा अठिआ चलमाणा छउमत्थाणं निग्गंथाणं निग्गंथीण य

चक्खुफासं हव्वमागच्छइ ॥ १३२ ॥ जं पासित्ता बहूहिं निग्गंथेहिं निग्गंथीहि य भत्ताइं पच्चक्खायाइं, से किमाहु भंते !?, अज्जप्पभिई संजमे दुराराहे भविस्सइ ॥ १३३ ॥

व्याख्या-"जं रयणिं च णं" यस्यां रात्रौ भगवान् मोक्षं गतः, तस्यां रात्रौ कौ=भूमौ तिष्ठतीति कुन्थुः प्राणिजातिः, नोद्धर्तुं शक्यते इति अनुद्धरी नाम समुत्पन्ना । "अणुं-सूक्ष्मं देहं धरतीति अणुधरी" इति चूर्णिः । स्थिता इत्यस्या व्याख्यानं-या-अचलमाना सती छद्मस्थानां निर्ग्रन्थानां निर्ग्रन्थीनां च नो=नैव चक्षुःस्पर्शं= दृष्टिपथं "हव्वंति" शीघ्रं आगच्छति । या च अस्थिता चलमाना सा निर्ग्रन्थानां निर्ग्रन्थीनां च चक्षुःस्पर्शं समायाति, यां अणुधरीं दृष्ट्वा, बहुभिः निर्ग्रन्थैः बह्वीभिः निर्ग्रन्थीभिश्च भक्तानि प्रत्याख्यातानि—अनशनं कृतमित्यर्थः । अत्र शिष्य आह-"किमाहुः भदन्ता-गुरवः ? किं कारणं अणुधर्या उत्पत्तौ भक्तप्रत्याख्याने वा ?।" इति शिष्येण पृष्टे गुरुः आह-"अद्यप्रभृति दुराराध्यः संयमो भविष्यति, जीवाकुलत्वात् पृथिव्याः संयमयोग्यक्षेत्राभावात्, पाखण्डिकसङ्कराच्च ३७।

अथ श्रीभगवतः चतुर्विधसङ्घसंपदं आह—

तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स इंदभूइपामुक्खाओ चउद्दस समणसाहस्सीओ उक्कोसिआ समणसंपया हुत्था ॥ १३४ ॥ समणस्स भगवओ महावीरस्स

अज्जचंदणापामुक्खाओ छत्तीसं अज्जियासाहस्सीओ उक्कोसिया अज्जियासंपया हुत्था ॥ १३५ ॥ समणस्स भगवओ महावीरस्स संखसयगपामुक्खाणं समणोवासगाणं एगा सयसाहस्सी अउणट्ठिं च सहस्सा उक्कोसिया समणोवासगाणं संपया हुत्था ॥ १३६ ॥ समणस्स भगवओ महावीरस्स सुलसारेवईपामुक्खाणं समणोवासिआणं तिन्नि सयसाहस्सीओ अट्ठारस सहस्सा उक्कोसिआ समणोवासियाणं संपया हुत्था ॥ १३७ ॥ समणस्स णं भगवओ महावीरस्स तिन्नि सया चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खरसन्निवाईणं जिणोविव अवितहं वागरमाणाणं उक्कोसिआ चउद्दसपुव्वीणं संपया हुत्था ॥ १३८ ॥ समणस्स णं भगवओ महावीरस्स तेरस सया ओहिनाणीणं अइसेसपत्ताणं उक्कोसिया ओहिनाणी संपया हुत्था ॥ १३९ ॥ समणस्स णं भगवओ महावीरस्स सत्तसया केवलनाणीणं संभिण्णवरनाणदंसणधराणं उक्कोसिया केवलनाणि संपया हुत्था ॥ १४० ॥ समणस्स णं भगवओ महावीरस्स सत्तसया वेउव्वीणं अदेवाणं देविड्ढिपत्ताणं उक्कोसिया वेउव्वियसंपया हुत्था

॥ १४१ ॥ समणस्स णं भगवओ महावीरस्स पंच सया विउलमईणं अड्ढाइज्जेसु दीवेसु दोसु अ समुद्देसु सन्नीणं पंचिंदियाणं पज्जत्तगाणं मणोगए भावे जाणमाणाणं उक्कोसिआ विउलमईणं संपया हुत्था ॥ १४२ ॥ समणस्स णं भगवओ महावीरस्स चत्तारि सया वाईणं सदेवमणुआसुराए परिसाए वाए अपराजियाणं उक्कोसिया वाइसंपया हुत्था ॥ १४३ ॥ समणस्स णं भगवओ महावीरस्स सत्त अंतेवासिसयाइं सिद्धाइं जाव सव्वदुक्खप्पहीणाइं, चउद्दस अज्जियासयाइं सिद्धाइं ॥ १४४ ॥ समणस्स णं भगवओ महावीरस्स अट्ठ सया अणुत्तरोववाइयाणं गइकल्लाणाणं ठिइकल्लाणाणं आगमेसिभद्दाणं उक्कोसिआ अणुत्तरोववाइयाणं संपया हुत्था ॥ १४५ ॥ समणस्स णं भगवओ महावीरस्स दुविहा अंतगडभूमी हुत्था, तं जहा—जुगंतगडभूमी य परियायंतगडभूमी य, जाव तच्चाओ पुरिसजुगाओ जुगंतगडभूमी, चउवासपरियाए अंतमकासी ॥ १४६ ॥

व्याख्या—"तेणं कालेणं" तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य इन्द्रभूतिप्रमुखाः

चतुर्दशसहस्राः (१४०००) उत्कृष्टाः श्रमणानां संपदोऽभवन् १। श्रीमहावीरस्य आर्यचन्दनाप्रमुखाः (३६०००) षट्त्रिंशत्सहस्राः आर्याणां संपदोऽभवन् २। श्रीमहावीरस्य शङ्खशतकादीनां श्रावकाणां एकं लक्षं एकोनषष्टिसहस्राश्च (१,५९०००) संपदोऽभवन् ३। श्रीमहावीरस्य सुलसा नागभार्या द्वात्रिंशत् पुत्रजननी, रेवती मङ्खलिपुत्रमुक्ततेजोलेश्या जातातिसारस्य श्रीभगवतः तथाविधौषधदानेन आरोग्यकर्त्री, तथाविधसुलसारेवतीप्रमुखाणां श्राविकाणां—त्रीणि लक्षाणि अष्टादशसहस्राः (३,१८०००) श्राविकासं० ४। श्रीवीरस्य त्रीणि शतानि (३००) चतुर्दशपूर्वधराणां संपदः। किंविशिष्टानां ?। अजिनानामपि असर्वज्ञानामपि सतां सर्वाक्षरसंनिपाता वर्णसंयोगा ज्ञेयतया विद्यन्ते येषां ते तेषां अतो जिन इव अवितथं सत् भूतार्थं व्याकुर्वाणानां केवलिश्रुतकेवलिनोः प्रज्ञापनायां तुल्यत्वप्रतिपादनात् ५। श्रीमहावीरस्य त्रयोदशशतानि (१३००) अवधिज्ञानिनां संपदः। किंविशिष्टानां ?। अतिशेषा—अतिशया आमर्षौषध्यादयः तान् प्राप्तानां ६॥ श्रीमहावीरस्य सप्तशतानि (७००) केवलज्ञानिनां संपदः। किंविशिष्टानां ?। संभिन्ने सिद्धसेन—दिवाकरमतेन अन्योन्यं मिलिते एकसमयभाविनी, जिनभद्रगणिक्षमाश्रमणमतेन तु सं सम्यक् भिन्ने पृथक् समयभाविनि संपूर्णे वा संभिन्ने वरज्ञानदर्शने धरन्ति ये ते तेषां० ७। श्रीमहावीरस्य सप्त शतानि (७००) वैक्रियलब्धिधराणां संपदः। किंविशिष्टानां ?। अदेवानामपि देववत् ऋद्धिधराणां ८। श्रीमहावीरस्य पञ्चशतानि (५००) विपुलमतिधराणां संपदः, किंविशिष्टानां ?। विपुला घटोऽनेन चिन्तितः स च सौवर्ण इति द्रव्यतः १, पाटलिपुत्रकीय इति क्षेत्रतः २, शारद-

इति कालतः ३, कृष्ण इति भावतः ४, इत्यादि विशेषणोपेतमन्यमानवस्तुग्राहित्वेन विस्तीर्णा मतिः=मनः-पर्यायज्ञानं येषां ते विपुलमतयः तेषां। तथा किं कुर्वतां ?। संपूर्णेषु अर्धतृतीयद्वीपेषु द्वयोः समुद्रयोश्च स्थितानां संज्ञिनां पर्याप्तानां पञ्चेन्द्रियाणां मनोगतभावान् दर्शनाभावात् जानानां। ऋजुमतयस्तु सामान्यत एव तेषां अर्धतृतीयाङ्गुलन्यूनमनुष्यक्षेत्रे व्यवस्थितानां संज्ञिनां मनोमात्रग्राहकत्वं, ततो "न पासमाणाणं" इत्युक्तं यच्च क्वचित्। श्रीऋषभचरित्रादौ उभयं दृश्यते, तत्र पश्यतामिव पश्यतां साक्षात्करणात् इति व्याख्येयम् ९। श्रीमहावीरस्य चत्वारि शतानि वादिनां (४००) संपदः। किंविशिष्टानां ?। सदेवमनुजासुरायां सभायां अजेयानां=जेतुं अशक्याणाम् १०। श्रीमहावीरस्य सप्तशतानि (७००) अन्तेवासिनां=शिष्याणां सिद्धानि सर्वदुःखप्रहीणानि ११। श्रीमहावीरस्य चतुर्दशशतानि (१४००) आर्याणां सिद्धानि १२। श्रीमहावीरस्य अष्ट-शतानि (८००) अनुत्तरोपपातिनां शिष्याणां जातानि। किंभूतानां शिष्याणां ?। गतिः देवगतिरूपा कल्याणं येषां ते तेषां पुनःस्थितिः देवायुरूपा कल्याणी उत्कृष्टा येषां, अथवा गतौ=प्राणगमनेऽपि स्थितौ जीवितेऽपि कल्याणं येषां "तवनियमसुट्ठिआणं" कल्याणं इत्यादिवचनात्। अत एव आगमिष्यद्भद्राणां आगामिभवे सेत्स्यमानत्वाद् अभयकुमारादीनामिव १३। श्रीमहावीरस्य द्विविधा अन्तकृत् भूमिः, अन्तकृतो—भवान्तकृतो निर्वाणयायिनः तेषां भूमिः=कालः एकयुगान्तकृद्भूमिः। युगानि=कालमानविशेषाः तानि च क्रमवर्तीनि, तत्साधर्म्या ये क्रमवर्तिनो गुरुशिष्यप्रशिष्यादिरूपाः पुरुषाः तेऽपि युगानि तैः प्रमिता अन्तकृद्भूमिः या सा

युगान्तकृद्भूमिः १, द्वितीया पर्यायान्तकृद्भूमिः २, पर्यायः=तीर्थङ्करस्य केवलित्वकालः तं आश्रित्य अन्तकृत् भूमिः, तथा "तचाओ त्ति" पञ्चमी द्वितीयार्थे। यावत् तृतीयं पुरुष एव युगं पुरुषयुगं, श्रीवीरादारभ्य तृतीयं पुरुषयुगं यावत् साधवः सिद्धाः, श्रीवीरः १, श्रीसुधर्मस्वामी २, जम्बूश्च ३, ततः सिद्धिगतिच्छेदः चतुर्वर्षपर्याये केवलपर्यायापेक्षया भगवति जिने सति अन्तं=भवान्तं अकार्षीत्, तत्तीर्थे साधुः न आरात् कश्चित् अपीति केवलोत्पत्तेः चतुर्वर्षेषु सिद्धे गमनारम्भः।

अथ श्रीभगवतः सर्वायुर्वर्षसङ्कलनामाह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे तीसं वासाइं अगारवासमज्झे वसित्ता साइरेगाइं दुवालस वासाइं छउमत्थपरियागं पाउणित्ता देसूणाइं तीसं वासाइं केवलिपरियागं पाउणित्ता बायालीसं वासाइं सामण्णपरियागं पाउणित्ता बावत्तरि वासाइं सव्वाउयं पालइत्ता खीणे वेयणिज्जाउयनामगुत्ते इमीसे ओसप्पिणीए दूसमसुसमाए समाए बहुविइक्कंताए तीहिं वासेहिं अद्धनवमेहि य मासेहिं सेसेहिं पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुयसभाए एगे अबीए छट्ठेणं भत्तेणं अपाणएणं साइणा नक्खत्तेणं जोगमुवागएणं पच्चूसकालसमयंसि संपलि-

अंकनिसण्णे पणपन्नं अज्झयणाइं कल्लाणफलविवागाइं पणपन्नं अज्झयणाइं पावफलविवागाइं छत्तीसं च अपुट्ठवागरणाइं वागरित्ता पहाणं नाम अज्झयणं विभावेमाणे २ कालगए विइक्कंते समुज्जाए छिन्नजाइजरामरणबंधणे सिद्धे बुद्धे मुत्ते अंतगडे परिनिवुडे सव्वदुक्खप्पहीणे ॥१४७॥

व्याख्या—"तेणं कालेणं" तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः त्रिंशद्वर्षाणि आगारवासे उषित्वा, सार्धषण्मासाधिकानि द्वादशवर्षाणि छद्मस्थपर्यायं प्रतिपाल्य, सार्धषण्मासन्यूनानि त्रिंशद्‌वर्षाणि केवलपर्यायं प्रतिपाल्य, द्विचत्वारिंशद्वर्षाणि दीक्षां प्रतिपाल्य, द्वासप्ततिवर्षाणि (७२) सर्वमायुः प्रतिपाल्य, "खीणे सति" वेदनीयायुर्नामगोत्रे अस्यां अवसर्पिण्यां दुषमसुषमायां बहुव्यतिक्रान्तायां त्रिषु वर्षेषु सार्धाष्टमासेषु च शेषेषु नवाशीतिपक्षेषु अवशिष्टेषु इत्यर्थः। मध्यमपापायां नगर्यां हस्तिपालस्य राज्ञो रज्जुसभायां, एकः कर्मसहायविरहात् अद्वितीयः एकाकी न ऋषभादिवत् दशसहस्रादिवृतः, अपानकेन षष्ठेन तपसा स्वातिनक्षत्रे चन्द्रेण सह योगं उपगते प्रत्यूषकाललक्षणो योऽवसरः समयः तस्मिन्, पद्मासनस्थः संगतः पर्यंकः—पद्मासनं तत्र निषण्णः—उपविष्टः। पञ्चपञ्चाशद् अध्ययनानि कल्याणफलविपाकानि। पञ्चपञ्चाशद् अध्ययनानि च पापफलविपाकानि, षट्त्रिंशद् अपृष्टव्याकरणानि प्ररूपयित्वा—कथयित्वा पुण्यफलविपाकाध्ययने प्रधानं नाम अध्ययनं मरुदेवाध्ययनं विभावयन्=प्ररूपयन् कालगतः इति। सर्वदुखप्रहीणः शेषं सुगमम्॥

अथ श्रीभगवति निर्वाणं प्राप्ते पश्चात् कियति काले लोकसमक्षं कल्पवाचना जाता ?, तत्राह—

समणस्स भगवओ महावीरस्स जाव सव्वदुक्खप्पहीणस्स नव वाससयाइं विइक्कंताइं दस-मस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ, वायणंतरे पुण अयं तेणउए संवच्छरे काले गच्छइ इइ दिसइ ॥ १४८ ॥ २४ ॥ इति ॥

व्याख्या—"समणस्स भगवओ" श्रीवीरनिर्वृतेः नवसु वर्षशतेषु अशीत्यधिकेषु इयं वाचना जाता इत्यर्थे व्याख्यायमानेन तथा, चतुराणां प्रीतिः अस्य सूत्रस्य श्रीवीरनिर्वाणात् [१७०] सप्तत्यधिकवर्षशतोत्पन्नश्री-भद्रबाहुना प्रणीतत्वात्। तस्मात् इयति काले इयं वाचना पुस्तकेषु न्यस्तेति संभाव्यते। देवर्द्धिगणिक्षमा-श्रमणैर्हि व्यवच्छित्तिं दृष्ट्वा, इयति काले सर्वे ग्रन्थाः पुस्तकेषु न्यस्ता, इत्यत एव तत्र ग्रन्थे वक्ष्यमाणस्थवि-रावलीप्रान्ते देवर्द्धिगणिनमस्कारं वक्ष्यति। पूर्वं तु गुरुशिष्याणां श्रुताध्ययनाध्यापनव्यवहारः पुस्तकनिर-पेक्ष एव प्रवर्तते। केचित्तु इदं आहुः—यदि यत्कालातिक्रमे ध्रुवसेननृपस्य पुत्रमरणार्तस्य समाधये आनन्द-पुरे सभायां अयं ग्रन्थो वाचयितुं आरब्धः इति। बहुश्रुता एव यथावत् विदन्ति। त्रिनवतियुतवर्षनवशत-पक्षेषु इयता कालेन पञ्चम्याः चतुर्थ्यां पर्युषणापर्व प्रवर्तते। तेणउअनवसएहिं, समइक्कंतेहिं वद्धमाणाओ। पज्जोसवणचउत्थी, कालगसूरीहिंतो ठविआ ॥ १ ॥ वीसहिं दिणेहिं कप्पो, पंचगहाणीइ कप्पठवणा य।

नवसयतेणउएहिं, वुच्छिन्ना संघआणाए ॥ २ ॥ सालाहणेन रन्ना, संघाएसेण कारिओ भयवं । पज्जोसवणचउत्थी, चाउम्मासं च चउदसीए ॥ ३ ॥ चउमासयपडिकमणं, पक्खिअदिवसंमि चउविहो संघो । नवसयतेणउएहिं, आयरणं तं पमाणंति ॥ ४ ॥" इति तीर्थोद्गारादिषु भणनात् ।

॥ इति श्रीमहावीरचरित्रम् ॥

*इयं पंचमी वाचना अतिविस्तरा जाता अस्ति, परं यदा कल्पसूत्रस्य एकादशवाचनाः त्रयोदशवाचनाः पंचदशवाचनाः सप्तदशवाचना वा भवन्ति, तदा पंचमीवाचनायाः वाचनाद्वयं कार्यं । नववाचनासु च—भोजनाविच्छित्ति १, विप्रयाचना २, आदयोऽधिकाराः सत्यां वेलायां वाच्या, नो चेत् नहि ॥*

व्याख्यानं कल्पसूत्रस्य, पञ्चमं सुगमं स्फुटम् । शिष्यार्थं पाठकाश्चक्रुः, समयादिमसुन्दराः ॥ १ ॥

इति श्रीकल्पसूत्रस्य पञ्चमं व्याख्यानं श्रीसमयसुन्दरोपाध्यायविरचितं सम्पूर्णम् ॥

# अथ षष्ठं व्याख्यानम् ॥

॥ अर्हम् ॥ अथ षष्ठं व्याख्यानं व्याख्यायते ॥ तत्र प्रथमवाचनायां पञ्चपरमेष्ठिनमस्कारः, पुनरपि श्रीमहावीरदेवस्य संक्षेपवाचनया षट्कल्याणकानि व्याख्यातानि १। द्वितीयवाचनायां श्रीमहावीरदेवस्य च्यवनकल्याणकं दशाश्चर्यसहितं गर्भापहारकल्याणकं च व्याख्यातम् २। तृतीयवाचनायां श्रीमहावीरस्य मात्रा त्रिशलाक्षत्रियाण्या ये चतुर्दश स्वप्नाः दृष्टाः ते व्याख्याताः ३। चतुर्थवाचनायां श्रीमहावीरदेवस्य जन्मकल्याणकं व्याख्यातम् ४। पञ्चमवाचनायां श्रीमहावीरदेवस्य दीक्षा १ ज्ञान २ निर्वाण ३ कल्याणकानि व्याख्यातानि ५ ॥

अथ षष्ठवाचनायां पश्चानुपूर्व्या श्रीपार्श्वनाथस्य श्रीनेमिनाथस्य च पञ्चकल्याणकानि व्याख्यायन्ते। तत्र पूर्वं श्रीपार्श्वनाथस्य, तत्रापि पूर्वं श्रीपार्श्वनाथस्य दश भवाः, तथाहि—

पोतनपुरं नाम नगरं, तत्र अरविन्दो राजा, तस्य पुरोहितस्य द्वौ पुत्रौ भ्रातरौ, ज्येष्ठः–कमठः, लघुः–मरुभूतिः, तत्र कमठः प्रकृत्या शठो दुराचारी, मरुभूतिश्च धार्मिकः। कमठस्य स्त्री वरुणा, मरुभूतेश्च स्त्री

वसुन्धरा, परं सा स्त्री जातिस्वभावेन चपलस्वभावा। एकदा कमठो वृद्धभ्राता प्रच्छन्नवृत्त्या प्रधानभूषण-फलादिप्रदानेन अनुकूलां कृत्वा वसुन्धरां प्रार्थयामास। जातः संबन्धः। ततः कमठस्त्रिया वरुणया तत्स्व-रूपे ज्ञाते असहिष्णुतया देवरस्य मरुभूतेः प्रोक्तं—"हे देवर! मम भर्ता तव भार्यया समं लुब्धोऽस्ति, न मन्यसे (चेत्) तदा परीक्षां कुरु।" ततो मरुभूतिः कपटेन ग्रामान्तरं गत्वा आगत्य प्रच्छन्नं वेषान्तरं गुटि-काप्रयोगेण स्वरभेदं च कृत्वा, रात्रौ स्वगृहद्वारे जाग्रन् सुप्तः सन् सर्वं स्वभ्रातृदुराचारं ददर्श। ततः क्रुद्धः सन् प्रभाते राजसभायां गत्वा, राज्ञोऽग्रे भ्रातृदुराचारं कथयति स्म। ततो रुष्टेन राज्ञा मयूरबन्धनेन बध्वा विडम्बनां कृत्वा नगरमध्ये भ्रामयित्वा कमठो बहिः निष्कासितः। ततः तापसो भूत्वा, पर्वते तपस्यां कुर्वन् तिष्ठति, नगरमध्ये नायाति। ततो नगरलोकाः तपस्विनं ज्ञात्वा, तत्र गत्वा भोजनादिना भक्तिं कुर्वन्ति प्रशंसन्ति च। तदा मरुभूतिरपि अचिन्तयत्—"अहमपि भ्रातृसमीपे गत्वा स्वापराधं क्षामयामि, चरणकमले पतामि।" इति विमृश्य, तत्र गत्वा अधोभूय यावत् पादयोः पतितः तावत् तेन कमठेन कोपात् शिला मस्तके मुक्ता, मृतो मरुभूतिः ॥ इति प्रथमो भवः ॥ १ ॥ ततः कमठो भ्रातृघातकः संमेतशिखरपर्वते कुर्कुटसर्पो जातः। मरुभूतिरपि तत्रैव स्थाने हस्ती जातः। अथ एकदा अरविन्दराजेन संध्यासमये पञ्च-वर्णाभ्रपटलस्वरूपं दृष्ट्वा वैराग्येन दीक्षा गृहीता। पश्चात् अरविन्दसाधुः संमेतशिखरं तीर्थयात्रार्थं व्रजन्

अटवीमध्ये सरोवरतीरे तपस्यां कुर्वन् कायोत्सर्गे स्थितः। मरुभूतिजीवोऽपि हस्ती सरोवरे नीरपानार्थं आगतः, तं हस्तिनं मदोन्मत्तं क्रुद्धं दृष्ट्वा, यात्रार्थं आगतः, तत्र स्थितः सङ्घः पलायितः। ततोऽरविन्देन राजर्षिणा अवधिज्ञानेन उपलक्ष्य हस्ती प्रतिबोधित उपशमं गतः, । जातिस्मरणं ज्ञानं उत्पन्नं, श्रावकव्रताभिलाषी सन् मुनिं प्रणम्य, हस्ती स्वस्थानं गतः। मुनिरपि यात्रार्थं चलितः। अथ एकदा मरुभूतिजीवो हस्ती उष्णकाले तृषार्तः सरोवरे पानीयपानार्थं प्रविष्टः। तदवसरे कमठजीवेन कुर्कुटसर्पेण कुम्भस्थले दष्टो मृतः ॥ इति द्वितीयो भवः ॥ २ ॥ ततो जैनधर्मवासनया मरुभूतिजीवो हस्ती सहस्रारे अष्टमे देवलोके देवो जातः। कुर्कुटसर्पो हस्तिघातपापेन पञ्चमे नरके नारकी जातः ॥ इति तृतीयो भवः ॥ ३ ॥ ततो मरुभूतिजीवः ततः च्युत्वा किरणवेगनामा विद्याधरो राजपुत्रो जातः, स च रूपलावण्यादिगुणसुन्दरः प्राप्तराज्योऽपि वैराग्यात् कुलक्रमागतं राज्यं त्यक्त्वा, दीक्षां जग्राह। स च प्रतिग्रामं विहरन् एकदा पर्वतगुहायां स्थितः। तदानीं कमठजीवोऽपि पञ्चमनरकात् निःसृत्य, तत्र सर्पः समुत्पन्नोऽभूत्। स सर्पो मुनिं दृष्ट्वा पूर्ववैरात् क्रोधेन दशति स्म, मुनिः विषाक्रान्तोऽपि समाधिना मृतः ॥ इति चतुर्थो भवः ॥ ४ ॥ ततो मरुभूतिजीवो द्वादशे अच्युतनाम्नि देवलोके देवो जातः। सर्पो मृत्वा पुनः पञ्चमे नरके नारकी जातः ॥ इति पञ्चमो भवः ॥ ५ ॥ ततो मरुभूतिजीवो द्वाविंशतिसागरोपमायुःक्षयात् द्वादशदेवलोकात् च्युत्वा, पश्चिममहाविदेहे वज्रनाभनामा राजा जातः। सोऽपि वैराग्यात् कुलक्रमागतं राज्यं परित्यज्य, दीक्षां ललौ। ग्रामनगरादिषु

विचरन् भिल्लपल्ल्यां गतः। तत्र कमठजीवोऽपि संसारं भ्रान्त्वा भिल्लत्वेन उत्पन्नोऽस्ति। संसारभ्रमणं विना पञ्चसागरोपमान्तरं न मिलति। यतः श्रीपार्श्वनाथचरित्रेऽपि भवक्रमादिति हि प्रोक्तं, तथाहि—

"अहिजीवोऽपि नरका-दुद्धृत्याभूद्भवक्रमात् [भवं भ्रमन्]। ज्वलनाद्रौ सुकच्छस्थे-भिल्लो नाम्ना कुरङ्गकः ॥ १०९५ ॥" [स० ३] इति तेन भिल्लेन आखेटकार्थं गच्छता निजगृहात् निर्गतेन प्रथमं स साधुः सम्मुखं आगच्छन् दृष्टः, "अपशकुनं" इति विचार्य, बाणेन हतो मृतः ॥ इति षष्ठो भवः ॥ ६ ॥ ततः साधुः समाधिना मृत्वा, मध्यमग्रैवेयके देवो जातः। भिल्लोऽपि महापापी सप्तमनरके उत्पन्नः ॥ इति सप्तमो भवः ॥ ७ ॥ अथ मरुभूतिजीवो देवो मध्यमग्रैवेयकात् च्युत्वा, महाविदेहक्षेत्रे सुवर्णबाहुनामा चक्रवर्ती जातः। षट्खण्डराज्यं पूर्वं भुक्त्वा, प्रान्ते वैराग्यात् राज्यं त्यक्त्वा दीक्षां जग्राह। चतुर्थषष्ठाष्टमादितपः कुर्वन् विंशतिस्थानकानि सेवित्वा, गिरिगहने विहरति स्म। तत्र तदवसरे कमठजीवोऽपि यो भिल्लः अभूत् स नरकात् निःसृत्य, सिंहो जातोऽस्ति। स सिंहः तं साधुं दृष्ट्वा पूर्ववैरात् क्रोधेन विदारितवान् ॥ इति अष्टमो भवः ॥ ८ ॥ ततः साधुः समाधिना मृत्वा प्राणते दशमे देवलोके देवो जातः। साधुविदारकः सिंहस्तु चतुर्थे नरके नारकी जातः ॥ इति नवमो भवः ॥ ९ ॥ अथ मरुभूतिजीवो दशमदेवलोकात् च्युत्वा, श्रीपार्श्वनाथो जातः। कमठजीवः कठो नाम तापसो जातः। द्वयोः संबन्धः सूत्रे वृत्तौ च अग्रे कथयिष्यते इति दशमो भवः ॥ १० ॥

अथ पार्श्वनाथस्य संक्षेपेण पञ्च कल्याणकानि कथयति, तथाहि—

तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए पंचविसाहे हुत्था, तं जहा—विसाहाहिं चुए चइत्ता गब्भं वक्कंते १, विसाहाहिं जाए २, विसाहाहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए ३, विसाहाहिं अणंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे समुप्पन्ने ४, विसाहाहिं परिनिव्वुए ५ ॥ १४९ ॥

अर्थलेशो यथा—"तेणं कालेणं त्ति" तस्मिन् काले तस्मिन् समये श्रीपार्श्वोऽर्हन् पुरुषादानीयः=पुरुषाणां प्रधानः पुरुषाणां वा मध्ये आदानीय=आदेयो ग्राह्यनामा पञ्चविशाखोऽभवत्, पञ्चापि कल्याणकानि विशाखानक्षत्रे जातानि। तथाहि—विशाखानक्षत्रे देवलोकात् च्युत्वा गर्भे व्युत्क्रान्तः १। विशाखानक्षत्रे जातः २। विशाखानक्षत्रे मुण्डो भूत्वा, अगारात् अनगारतां प्रपन्नः ३। विशाखानक्षत्रे केवलज्ञानं समुत्पन्नम् ४। विशाखानक्षत्रे परिनिर्वृतो मोक्षं गतः इति ५ ॥

अथ च्यवनकल्याणकं विस्तरतया आह—

तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए जे से गिम्हाणं पढमे मासे पढमे

पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स चउत्थीपक्खे णं पाणयाओ कप्पाओ वीसंसागरोवमट्ठिइयाओ अणंतरं चयं चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे वाणारसीए नयरीए आससेणस्स रण्णो वामाए देवीए पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं नक्खत्तेणं जोगमुवागएणं आहारवक्कंतीए (७००) भववक्कंतीए सरीरवक्कंतीए कुच्छिंसि गब्भंताए वक्कंते ॥ १५० ॥

अथ—अर्थलापनिका—"तेणं कालेणं तेणं समएणं" तस्मिन् काले तस्मिन् समये श्रीपार्श्वनाथः अर्हन् पुरुषादानीय उष्णकाले प्रथमे मासे प्रथमे पक्षे, एतावता चैत्रवदि—चतुर्थीदिने विंशतिसागरोपमानि यत्र स्थितिः वर्तते, ईदृशात् प्राणतदेवलोकात् च्युत्वा अस्मिन्नेव जम्बूद्वीपे भरतक्षेत्रे वाणारसीनगर्यां अश्वसेनो नाम राजा, तस्य वामानाम्नी पट्टराज्ञी, तस्याः—वामायाः कुक्षौ अर्धरात्रिसमये विशाखानामनक्षत्रे चन्द्रेण समं योगं वर्तमाने गर्भत्वेन अवतीर्णः । तदा श्रीभगवतः कीदृशं ज्ञानमासीत् ?, तत्राह—

पासे णं अरहा पुरिसादाणीए तिन्नाणोवगए आविहुत्था, तं जहा—चइस्सामित्ति जाणइ, चयमाणे न जाणइ, चुएमित्ति जाणइ, 

अर्थः—पूर्वं श्रीमहावीरदेवाधिकारे व्याख्यातोऽस्ति, तथापि अर्थलेशो यथा—देवलोकस्थो भगवान् अवधि-

ज्ञानेन जानाति–'यदहं इतः स्थानात् सांप्रतं च्यविष्यामि' १ च्यवनसमयं न जानाति, तस्य अतिसूक्ष्मत्वात् २ च्यवनानन्तरं जानाति, यदहं ततः स्थानात् च्युत्वा अत्रस्थाने समागतः ॥

अथ गर्भस्थे भगवति किं जातं ?, तत्राह—

तेणं चेव अभिलावेणं सुविणदंसणविहाणेणं सव्वं जाव निअगं गिहं अणुपविट्ठा, जाव सुहं-सुहेणं तं गब्भं परिवहइ ॥ १५१ ॥

अर्थलापनिका यथा–"तेणं चेव अभिलावेणं" श्रीमहावीरदेवाधिकारे यथा चतुर्दशस्वप्नदर्शनप्रमुखाधिकारो जातः, तथाऽत्रापि ज्ञेयः। वामा राज्ञ्यापि चतुर्दशस्वप्ना दृष्टाः, स्वप्नलक्षणपाठकान् आकार्य विचारः पृष्टः। तैरप्युक्तं–"त्रैलोक्यनायकः पुत्रो भावी।" पुनः ये ये दोहदाः प्रधाना उत्पन्नाः ते ते सर्वेऽपि राज्ञा पूरिताः।

अथ सुखेन वामा गर्भं वहति, ततः कदा जन्मकल्याणकं जातं ?, तत्राह—

तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए जे से हेमंताणं दुच्चे मासे तच्चे पक्खे पोसबहुले, तस्स णं पोसबहुलस्स दसमीपक्खे णं नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठ-माणं राइंदिआणं विइक्कंताणं पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं नक्खत्तेणं जोगमुवागएणं

आरोग्गा आरोग्गं दारयं पयाया ॥ १५२ ॥ जं रयणिं च णं पासे० जाए सा रयणी बहूहिं देवेहिं देवीहि य जाव उप्पिंजलगभूया कहकहगभूया याविहुत्था ॥ १५३ ॥ सेसं तहेव, नवरं जम्मणं पासाभिलावेणं भाणिअव्वं, जाव तं होउ णं कुमारे पासे नामेणं ॥ १५४ ॥

अर्थलेशो यथा–"तेणं कालेणं तेणं" तस्मिन् काले तस्मिन् समये श्रीपार्श्वनाथः शीतकाले द्वितीयमासे तृतीयपक्षे एतावता पौषवदि दशमीरात्रौ नवसु मासेषु संपूर्णेषु गतेषु, पुनरपि सार्धेषु सप्तसु दिनेषु उपरिगतेषु सत्सु, विशाखानामनक्षत्रे चन्द्रयोगेन समं वर्तमाने वामा राज्ञी पुत्रं अजीजनत्। तस्मिन् समये श्रीमहावीरदेवाधिकारवत् षट्पञ्चाशत् (५६) दिक्कुमारीभिः मेरौ इन्द्रैश्च जन्मोत्सवो यथा कृतः तथा अत्रापि वाच्यः। पुनः स्थितिपतिकामहोत्सवकरणानन्तरं द्वादशे दिने "पार्श्व" इति नाम सार्थकं दत्तं। यतो गर्भस्थे भगवति शयनस्था वामा राज्ञी माता अन्धकारे महाघोरे गच्छन्तं कृष्णसर्पं पश्यति स्म, इति निरुक्तिवशात् पार्श्वः।

अथ कीदृशः श्रीभगवान्?, तत्राह–नीलकमलवत् नीलछविः, सर्पलाञ्छनः, नवहस्तप्रमाणोच्चशरीरः, पञ्चभिः धातृमातृभिः पाल्यमानः क्रमात् यौवनं प्राप। तस्मिन् प्रस्तावे कुशस्थलनगरस्वामी प्रसेनजित् राजा स्वपुत्रीं प्रभावतीं लात्वा, अश्वसेनराजसमीपे समागत्य प्राह–"एषा मत्पुत्री मया श्रीपार्श्वाय दत्ता।" ततोऽश्वसेनेन अनिच्छतोऽपि पार्श्वस्य बलात्कारेण परिणायिता। यतो "भोग्यं कर्म न अभुक्तं क्षीयते"। एकदा गवाक्ष-

स्येन श्रीभगवता बहवो नगरलोका गच्छन्तो दृष्टाः, पृष्टं–"भो ! किं ?" इति । ततः कोऽप्याह–"दरिद्रकुले कोऽपि द्विजसुतोऽभूत्, लोकैः कृपया जीवितः, कठ इति नाम्ना प्रसिद्धिं गतः ।" अन्यदा व्यवहारिपुत्रान् आभरणालङ्कारभूषितान् दृष्ट्वा, 'ईदृशा देवा' इति जातिस्मरणं समुत्पन्नं, ततो वैराग्यात् तापसव्रतं ललौ । सांप्रतं वाणारसीबहिरुद्याने पञ्चाग्नितपः तपति, कन्दमूलादिभोजी महामहाकष्टं करोति । तत् वन्दनार्थं नगरलोका इमे यान्ति । ततः कौतुकात् स्वाम्यपि गजारूढः तत्र जगाम । दृष्टः कठतापसः पञ्चाग्नितपः कुर्वन् । ततो ज्ञानेन काष्ठमध्ये सर्पं ज्वलन्तं दृष्ट्वा भगवान् माह–"अहो ! अज्ञानकष्टं अज्ञानकष्टं, अहो तपस्विन् ! तव मूढता, धर्मस्य तत्त्वं दया, त्वं तु दयां न वेत्सि, दया–कष्टयोः अन्तरं महत्, यथा मेरु-सर्षपयोः, समुद्र-कूपयोः, सौवर्ण-रूप्यनाणकयोः, राम-रावणयोः, हस्ति-गर्दभयोः, सिंह-शृगालयोः, काञ्चन-लोहयोः, राज-रङ्कयोः, राज्ञी-दास्योः, सूर्य-खद्योतयोः, सज्जन-दुर्जनयोः, कस्तूरी-खलयोः, कर्पूर-लवणयोः, साधु-गृहस्थयोः वा अन्तरं ।" ततः कठतापसेन प्रोक्तं–"कथं जीवदया नास्ति ?, कथं च अज्ञानकष्टं मम ? ।" ततः श्रीभगवान् अग्निकुण्डात् एकं काष्ठं निष्कास्य, कुठारेण द्वेधा कारयित्वा, तन्मध्ये ज्वलन्तं सर्पं अदर्शयत् । सर्पस्य पञ्चपरमेष्ठिनमस्कारान् श्रावयन् सर्पोऽपि नमस्कारप्रभावेन श्रीभगवतो दर्शनेन समाधिना मृत्वा धरणेन्द्रो जातः । स्वामी स्वगृहे समागतः । कठतापसस्तु तैः एव लोकैः निन्द्यमानः अज्ञानकष्टतपः कृत्वा भवनवासी मेघकुमारमध्ये मेघमालीनामा देवो जातः ।

अथ श्रीभगवतो दीक्षाकल्याणकं कथ्यते, तत्राह—

पासे णं अरहा पुरिसादाणीए दक्खे दक्खपइन्ने पडिरूवे अल्लीणे भद्दए विणीए तीसं वासाइं अगारवासमज्झे वसित्ता पुणरवि लोगंतिएहिं जीअकप्पेहिं देवेहिं ताहिं इट्ठाहिं जाव एवं वयासी ॥ १५५ ॥—"जय जय नंदा ! जय जय भद्दा !, भद्दं ते" जाव जय जय सद्दं पउंजंति ॥ १५६ ॥ पुव्विंपि णं पासस्स णं अरहओ पुरिसादाणीयस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे आभोइए तं चेव सव्वं जाव दाणं दाइयाणं परिभाइत्ता जे से हेमंताणं दुच्चे मासे तच्चे पक्खे पोसबहुले, तस्स णं पोसबहुलस्स इक्कारसीदिवसे णं पुव्वण्हकालसमयंसि विसालाए सिबिआए सदेवमणुआसुराए परिसाए, तं चेव सव्वं नवरं वाणारसिं नगरिं मज्झं—मज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव आसमपए उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छइ, उवागच्छित्ता, असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुअइ, सय० ओमुइत्ता सयमेव पंचमुट्ठियं

लोअं करेइ, करित्ता अट्ठमेणं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय तीहिं पुरिससएहिं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ १५७ ॥

अस्य आलापकस्य व्याख्या पूर्ववत् ज्ञेया । अर्थलापनिका तु इयं, तथाहि—"पासे णं अरहा" श्रीपार्श्वनाथो दक्षो दक्षप्रतिज्ञो विनीतश्च जातः । त्रिंशत् वर्षाणि गृहस्थवासे स्थितः, ततो लोकान्तिकदेवैः प्रतिबोधितः सन् वार्षिकदानं दत्त्वा, शीतकालस्य द्वितीये मासे तृतीये पक्षे, एतावता पौषस्य एकादशीदिवसे पूर्वाह्णकाले विशालायां-शिबिकायां स्थितो, देवमनुष्यासुरपर्षदा समनुगम्यमानो वाणारसीनगरमध्ये भूत्वा यत्रैव आश्रमपदं नाम उद्यानं, यत्रैव अशोकनामा वृक्षः तत्रैव आगच्छति, आगत्य च शिबिकां स्थापयति, स्थापयित्वा शिबिकातः उत्तरति, उत्तीर्य च स्वयं एव आभरणालङ्कारं मुञ्चति मुक्त्वा च स्वयं एव पञ्चमुष्टिकं लोचं करोति, कृत्वा च चतुर्विधाहारेण अष्टमेन तपसा विशाखानक्षत्रे चन्द्रेण समं योगं वर्तमाने एकं देवदूष्यवस्त्रं स्कन्धे समारोप्य, त्रिभिः पुरुषशतैः सार्धं मुण्डो भूत्वा अगारात् अनगारतां अङ्गीकृतवान्, दीक्षां जग्राह इत्यर्थः ॥

अथ दीक्षाग्रहणानन्तरं श्रीभगवान् कीदृशः सन्, किं करोति ?, तत्राह—

पासे णं अरहा पुरिसादाणीए तेसीइं राइंदियाइं निच्चं वोसट्ठकाए चियत्तदेहे जे केई उव-

सग्गा उप्पज्जंति, तं जहा—दिव्वा वा माणुस्सा वा तिरिक्खजोणिआ वा अणुलोमा वा पडिलोमा वा, ते उप्पन्ने सम्मं सहइ खमइ तितिक्खइ अहियासेइ ॥ १५८ ॥

"पासे णं अरहा" शब्दार्थः पूर्ववत्, संबन्धलापनिका तु इयं—श्रीपार्श्वनाथो दीक्षानन्तरं त्र्यशीतिदिनानि ८३ यावत् देहममतां मुक्त्वा, ये केचन देवसंबन्धिनो मनुष्यसंबन्धिनः तिर्यक्संबन्धिनो वा अनुकूलाः प्रतिकूला वा उपसर्गा उत्पन्नाः तान् उपसर्गान् सम्यक् सहते। तत्र पूर्वं दीक्षां गृहीत्वा विचरन्, द्वितीये दिवसे श्रीभगवान् कोपकटनाम्नि संनिवेशे धन्यस्य गृहिणो गृहे 'पायसेन' पारणं अकरोत्। देवैः वसुधारावृष्टिः कृता। अन्यदा स्वामी छद्मस्थः सन् विहरन् कादम्बर्यां अटव्यां गतः। तत्र कलिङ्गिरिपर्वतस्य अधस्तात् कुण्डनामसरोवरतीरे कायोत्सर्गे स्थितः। तत्र महीधरो नामा हस्ती पानीयपानार्थं समागतः, श्रीभगवन्तं दृष्ट्वा जातिस्मरणं ज्ञानं प्राप। स्वकीयपूर्वभवो दृष्टः। स पूर्वभव एवं—'हेमलनामा कुलपुत्रको वामनः अभूवं, स्वजनैः हस्यमानः सुप्रतिष्ठनाम्ना मित्रेण गुरुपार्श्वे नीतः। तस्य पार्श्वे श्रावकधर्मो गृहीतः, परं अन्त्यावस्थायां स्वकीयं लघुं देहं निन्दन् महादेहनिदानं कृत्वा मृत्वा अहं अत्र हस्ती महाकायो जातः' इति। ततो हस्तिना कमलैः भगवतः पूजा कृता। ततः तस्य हस्तिनो वृत्तान्तं ज्ञात्वा, चम्पावासी करकण्डूराजा तत्रागतः। परं करकण्डूः भगवन्तं अदृष्ट्वा प्रभूतं खेदं कृतवान्। ततः तस्य भक्त्या इन्द्रेण नवहस्तप्रमाणा श्रीपार्श्वनाथप्रतिमा

तत्र स्थाने प्रकटीकृता, करकण्डूनृपेण भक्त्या पूजिता, चैत्यमपि तत्र कारितं। तत्र स्थाने 'कलिकुण्डनाम तीर्थं' जातं। स हस्ती मृत्वा तत्र चैत्ये व्यन्तरोऽधिष्ठायकोऽभूत् १। अथ एकदा राजपुरनगरस्वामी ईश्वरनामा राजा अभूत्, तेन श्रीपार्श्वनाथं कायोत्सर्गस्थं दृष्ट्वा मूर्च्छा प्राप्ता, जातिस्मरणं ज्ञानं उत्पन्नं। मन्त्रिणा पृष्टं स्वकीयं पूर्वभवं प्राह—"वसन्तपुरनगरे एकः कुष्ठी ब्राह्मणोऽभूत्, स च दुःखात् गङ्गानद्यां मरणार्थं पतन् चारणेन ऋषिणा रक्षितः प्रतिबोधितश्च। एकदा स कुष्ठी चैत्ये गत्वा प्रत्यहं प्रणमन् पुष्कलिश्रावकेण दृष्टः। ततो मुनिपार्श्वे गत्वा पुष्कलिश्रावकेण पृष्टं—"एतस्य कुष्ठिनः चैत्यागमने दोषो न वा ?।" मुनिना प्रोक्तं—"दूरात् जिनं प्रणमतो न कोऽपि दोषः। पुनरपि अयं कुष्ठी ब्राह्मण आगामिभवे राजपुरे नगरे ईश्वरनामा राजा भविष्यति। पुनरपि श्रीपार्श्वनाथं कायोत्सर्गस्थं दृष्ट्वा जातिस्मरणज्ञानं प्राप्स्यति। स कुष्ठी ब्राह्मणोऽहं जातः।" ततः ईश्वरनृपेण भक्त्या प्रभोः प्रसादः कारितः, मध्ये प्रतिमा च स्थापिता। ततः तत्र 'कुक्कुटेश्वरनाम' तीर्थं प्रसिद्धं जातम्।

अथ श्रीभगवतो मेघमालिदेवेन कृत उपसर्गो व्याख्यायते। अथ एकदा श्रीभगवान् विहरन् नगरपार्श्ववर्तिनं तापसाश्रमं समाजगाम। तस्मिन् प्रस्तावे सूर्यश्च अस्तं गतः। भगवान् वटवृक्षस्य अधस्तात् कूपस्य समीपे मेरुवत् निष्प्रकम्पः कायोत्सर्गे स्थितः, रात्रौ तदवसरे मेघमाली अधमदेवः पूर्ववैरं स्मरन् कोपाक्रान्तो भगवन्तं उपसर्गयितुं समागतः। पूर्वं तेन वेताला विकुर्विताः, ततः सिंहाः, ततो वृश्चिकाः, ततः सर्पाः, ततो

हस्तिनः, परं भगवान् न क्षोभं प्राप्तः, मर्यादां समुद्र इव नाऽमुञ्चत् । ततो विशेषेण क्रुद्धः सन् चतुर्दिक्षु कालरात्रिसदृशान् मेघान् विकुर्वितवान् । ततो महावातान्, ततो विद्युज्झात्कारान्, ततो गर्जारवान्, ततः प्रलयकालवत् वर्षितुं लग्नो मुसलधाराभिः, क्षणात् पानीयपूरो भगवतः कण्ठं यावत् समागतः, तथापि श्रीपार्श्वो नासिकाग्रे दत्तदृष्टिः मनागपि न चचाल । तस्मिन् प्रस्तावे कम्पितासनो धरणेन्द्रो पद्मावतीप्रमुखाभिः अग्रमहिषीभिः सार्धं समागत्य प्रणम्य च श्रीपार्श्वनाथं स्वकीयमस्तकोपरि कृत्वा प्रभोरुपरि फणान् विस्तारयामास । प्रभोरग्रे आकाशे पद्मावतीप्रमुखा अग्रमहिष्यो वेणुवीणादिबन्धुराणि गीतनृत्यानि चक्रुः । ततो धरणेन्द्रोऽवधिज्ञानेन मेघमालिनं वर्षन्तं ज्ञात्वा कुपितोऽब्रवीत्—“अरे ! किमिदं त्वया आरब्धं?, रे दुर्मते ! अनन्तशक्तिरपि श्रीभगवान् कृपावान् सहिष्यते, परं अहं तद्भक्तो न सहिष्ये । रे पापिष्ठ ! श्रीभगवतः सदुपदेशोऽपि तव वैराय जातः !, उषरपृथिव्यां मेघवर्षणं लवणाय यथा स्यात् !। ततो मेघमाली भयभ्रान्तः प्रभोः शरणे प्रविष्टः । प्रभुं प्रणम्य स्वापराधं क्षामयित्वा ‘न पुनः करिष्यामि’ इत्युक्त्वा च स्वस्थानं गतः । इन्द्रादयोऽपि स्वस्थानं जग्मुः । शिवापुर्यां इन्द्रो दिनत्रयं प्रभोः शीर्षे फणाछत्रं दधौ । ततः सा नगरी “अहिच्छत्रा” इति प्रसिद्धिं गता ।

अथ कीदृशस्य सतो भगवतः केवलज्ञानं समुत्पन्नं?, तत्राह—

**तएणं से पासे भगवं अणगारे जाए ईरियासमिए भासासमिए जाव अप्पाणं भावेमाणस्स**

तेसीइं राइंदियाइं विइक्कंताइं, चउरासीइमे राइंदिए अंतरा वट्टमाणे जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स चउत्थीपक्खेणं पुव्वण्हकालसमयंसि धायईपायवस्स अहे छट्ठेणं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं झाणंतरिआए वट्टमाणस्स अणंते अणुत्तरे निव्वाघाए निरावरणे जाव केवलवरनाणदंसणे समुप्पन्ने जाव जाणमाणे पासमाणे विहरइ ॥ १५९ ॥

अथ अर्थलापनिका—"तएणं से पासे" ततः श्रीपार्श्वनाथो भगवान् ईर्यासमितो जातो भाषासमित एषणासमित एवं पञ्चसमितिभिः समितः, तिसृभिः गुप्तिभिः गुप्तो जातः । एवं श्रीमहावीराधिकारे यः साधुवर्णकः प्रोक्तः सः अत्रापि ज्ञेयः । तथा श्रीभगवतो दीक्षानन्तरं त्र्यशीतिदिनानि (८३) व्यतिक्रान्तानि । चतुरशीतितमस्य दिनस्य अन्तरा वर्तमानस्य ग्रीष्मकाले प्रथमे मासे प्रथमे पक्षे एतावता चैत्रवदिचतुर्थीदिने पूर्वाह्नकालसमये धातकीवृक्षस्य अधः षष्ठेन तपसा, क्वचित् अष्टमेन तपसा अपानकेन विशाखानामनक्षत्रे चन्द्रेण सह योगं वर्तमाने ध्यानान्तरे वर्तमानस्य केवलज्ञानं केवलदर्शनं च समुत्पन्नं । तेन सर्वं भगवान् जानन् पश्यन् विहरति । देवैः समवसरणं विरचितं, चतुर्विधसङ्घस्य स्थापना कृता ।

अथ भगवतो गणधरादि-परिवारमाह—

पासस्स णं अरहओ पुरिसादाणीयस्स अट्ठ गणा अट्ठ गणहरा हुत्था, तं जहा—सुभे य १ अज्जघोसे य २ वसिट्ठे ३ बंभयारि य ४। सोमे ५ सिरिहरे ६ चेव, वीरभद्दे ७ जसेऽविय ८॥ १६०॥ पासस्स णं अरहओ पुरिसादाणीयस्स अज्जदिण्णपामुक्खाओ सोलससमणसाहस्सीओ उक्कोसिआ समणसंपया हुत्था ॥ १६१ ॥ पायस्स णं अ० पुप्फचूलापामुक्खाओ अट्ठत्तीसं अज्जियासाहस्सीओ उक्कोसिआ अज्जियासंपया हुत्था ॥ १६२ ॥ पासस्स० सुव्वयपामुक्खाणं समणोवासगाणं एगा सयसाहस्सीओ चउसट्ठिं च सहस्सा उक्कोसिआ समणोवासगाणं संपया हुत्था ॥ १६३ ॥ पासस्स० सुनंदापामुक्खाणं समणोवासियाणं तिण्णि सयसाहस्सीओ सत्तावीसं च सहस्सा उक्कोसिआ समणोवासियाणं संपया हुत्था ॥ १६४ ॥ पासस्स० अद्धुट्ठसया चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सवक्खर जाव चउद्दसपुव्वीणं संपया हुत्था ॥ १६५ ॥ पासस्स णं० चउद्दस सया ओहिनाणीणं, दस सया केवलनाणीणं,

इक्कारस सया वेउव्वियाणं, छसया रिउमईणं, दस समणसया सिद्धा, वीसं अज्जियासया सिद्धा, अद्धट्ठमसया विउलमईणं, छसया वाईणं, बारस सया अणुत्तरोववाइयाणं ॥ १६६ ॥

पासस्स णं अरहओ पुरिसादाणीयस्स दुविहा अंतगडभूमी हुत्था, तं जहा—जुगंतगडभूमी परियायंतगडभूमी य, जाव चउत्थाओ पुरिसजुगाओ जुगंतगडभूमी, तिवासपरिआए अंतमकासी ॥ १६७ ॥

एतस्य आलापकस्य अर्थस्तु सुगम एव, पूर्वमपि व्याख्यातश्च । परं अर्थयोजनामात्रत्वं प्रदर्श्यते—"पासस्स णं अरहओ" श्रीपार्श्वनाथस्य अष्टौ गणा एकवाचनिकायतिसङ्घा अभूवन्, अष्टौ च गणधराः, तेषां गणानां नायकाः सूरयोऽभूवन् । आवश्यके तु दश गणधरा उक्ताः, इह स्थानाङ्गे च अष्टौ, ततो द्वौ सप्तमाष्टमगणधरौ अल्पायुष्कत्वात् नोक्तौ इति संभाव्यते । यतः श्रीपार्श्वनाथचरित्रे दशगणधरसम्बन्धेषु सप्ताष्टमगणधरौ जय १ विजय २ नामानौ श्रावस्तीनृपपुत्रौ, रात्रौ तथाविधस्वप्नविशेषोपलम्भनेन स्वकीयं आयुः अल्पं ज्ञात्वा, दीक्षां जगृहतुरिति । गणधरनामानि यथा—शुभः १ आर्यघोषः २ वाशिष्ठः ३ ब्रह्मचारी ४ सोमः ५ श्रीधरः ६ वीरभद्रः ७ यशः ८ इति । पुनः श्रीपार्श्वनाथस्य आर्यदिन्नप्रमुखाः षोडशश्रमणसहस्राः (१६०००) अभूवन् । पुनः श्रीपार्श्वनाथस्य पुष्पचूलाप्रमुखा अष्टत्रिंशत् आर्यासहस्राः (३८०००) अभूवन् । पुनः श्रीपार्श्वनाथस्य

सुव्रतप्रमुखाः श्रमणोपासकाः श्रावका एकं लक्षं चतुःषष्टिश्च सहस्राः (१,६४०००) अभूवन्। पुनः श्रीपार्श्वनाथस्य सुनन्दाप्रमुखाः श्राविकाः त्रीणि लक्षाणि सप्तविंशतिश्च सहस्राः (३,२७०००) अभूवन्। पुनः श्रीपार्श्वनाथस्य सार्धानि सप्तशतानि (७५०) चतुर्दशपूर्विणः केवलिन इव अभूवन्। पुनः श्रीपार्श्वनाथस्य चतुर्दशशतानि (१४००) अवधिज्ञानिनः। पुनः दशशतानि (१०००) केवलज्ञानिनः। पुनः एकादशशतानि (११००) वैक्रियलब्धिधराः। पुनः षट्शतानि (६००) ऋजुमतयः साधवः। पुनः दशशतानि (१०००) सिद्धानि साधूनां। पुनः विंशतिशतानि (२०००) साध्वीनां सिद्धानि। सार्धानि सप्तशतानि (७५०) विपुलमतीनां सिद्धानि। ऋजुमति-विपुलमतीनां विशेषः पूर्वं उक्तोऽस्ति। षट्शतानि (६००) वादिनां। पुनः द्वादशशतानि (१२००) अनुत्तरोपपातिनां साधूनां। पुनः श्रीपार्श्वनाथस्य द्विविधा अन्तकृतां केवलिनां भूमिः, स्थानं=युगान्तकरभूमिः पर्यायान्तकरभूमिश्च। तत्र श्रीपार्श्वनाथात् आरभ्य चतुर्थं पुरुषयुगं यावत् सिद्धिगमः प्रवृत्तः स युगान्तकरभूमिः। अथ च श्रीभगवतः केवलज्ञानोत्पत्तेः पश्चात् त्रिषु वर्षेषु सिद्धिगमारम्भो जातः, स पर्यान्तकरभूमिः॥

अथ च श्रीभगवतः कदा निर्वाणकल्याणं जातं?, तत्राह—

तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए तीसं वासाइं अगारवासमज्झे वसित्ता

तेसीइं राइंदिआइं छउमत्थपरिआयं पाउणित्ता देसूणाइं सत्तरि वासाइं केवलिपरिआयं पाउणित्ता पडिपुण्णाइं सत्तरि वासाइं सामण्णपरिआयं पाउणित्ता एक्कं वाससयं सव्वाउयं पालइत्ता खीणे वेयणिज्जाउयनामगुत्ते इमीसे ओसप्पिणीए दूसमसुसमाए समाए बहुविइक्कंताए जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स अट्ठमीपक्खे णं उप्पिं संमेअसेलसिहरंसि अप्पचउत्तीसइमे मासिएणं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं पुव्वण्हकालसमयंसि वग्घारियपाणी कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ १६८ ॥

अर्थालापनिका यथा—"तेणं कालेणं तेणं समएणं" तस्मिन् काले तस्मिन् समये श्रीपार्श्वनाथः त्रिंशद्वर्षाणि गृहे स्थित्वा, त्र्यशीति(८३)दिनानि छद्मस्थपर्यायं पालयित्वा, त्र्यशीतिदिनैः न्यूनानि सप्तति(७०)वर्षाणि केवलपर्यायं पालयित्वा, प्रतिपूर्णानि-संपूर्णानि सप्तति(७०)वर्षाणि दीक्षापर्यायं पालयित्वा एकं वर्षशतं (१००) सर्वायुः प्रतिपाल्य क्षीणे वेदनीयायुर्नामगोत्रे कर्मणि, अस्यां अवसर्पिण्यां दुःषमसुषमायां बहुव्यतिक्रान्तायां वर्षाकाले प्रथमे मासे द्वितीयपक्षे एतावता श्रावणसुदि अष्टमीदिवसे संमेतशिखरपर्वतस्य उपरि त्रयस्त्रिंशत्(३३)साधुभिः सह मासिकभक्तेन अपानकेन तपसा विशाखानक्षत्रे चन्द्रेण समं योगं वर्तमाने पूर्वाह्णकालसमये "पुव्वरत्तावरत्तकालसमयंसि" इति पाठस्तु लेखकदोषात् मतभेदाद्वा ज्ञातव्यः।

"वग्घारिअपाणि त्ति" कायोत्सर्गे स्थितत्वात् प्रलम्बितभुजद्वयः सन् कालं गतो व्यतिक्रान्तो यावत् सर्वदुःखैः प्रहीणो जातः, मोक्षं जगाम इत्यर्थः ॥

अथ श्रीपार्श्वनिर्वाणात् पुस्तकारूढसिद्धान्तस्य कियदन्तरं?, तत्र आह—

पासस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स दुवालस वाससयाइं विइक्कंताइं, तेरसमस्स य अयं तीसइमे संवच्छरे काले गच्छइ ॥ १६९ ॥ २३ ॥ इति ॥

"पासस्स णं अरहओ" अयं परमार्थः—श्रीपार्श्वनाथनिर्वाणात् श्रीमहावीरसार्धशतद्वयेन ( २५० ) सिद्धः । श्रीमहावीरनिर्वाणात् नवशतैः अशीत्यधिकैः (९८०) वर्षैः श्रीसिद्धान्तः पुस्तकारूढो जातः । इति हेतोः द्वादशशतानि त्रिंशदधिकानि (१२३०) वर्षाणि ज्ञेयानि । इत्यनेन श्रीपार्श्वनाथस्य पञ्चकल्याणकानि व्याख्यातानि ॥

→ इति श्रीपार्श्वनाथचरित्रम् ←

अथ श्रीनेमिनाथस्य पश्चानुपूर्व्या पञ्चकल्याणकानि व्याख्यायन्ते—

तत्रापि पूर्वं यादवानां उत्पत्तिः कथ्यते—तत्र पूर्वं वृषभस्वामी, ततः कुरुनृपः, ततो वीर्यनृपः, ततः सुभूमचक्रवर्ती, ततो बहुषु राजसु गतेषु शान्तनराजा अभूत् । तस्य द्वे भार्ये—गङ्गा सत्यवती च, गङ्गायाः पुत्रो गाङ्गेयः, येन कुमारावस्थायामपि स्वयं शीलव्रतं गृहीतं, स्वकीयः पिता शान्तनो राजा रत्नशेखरविद्याधरस्य

पुत्रीं नाविकगृहे वर्धितां सत्यवतीं परिणायितः । शान्तनस्य सत्यवत्या द्वितीयभार्यायाः पुत्रद्वयं–चित्राङ्गदः चित्रवीर्यश्च । चित्रवीर्यस्य भार्यात्रयं–अम्बिका १ अम्बालिका २ अम्बा ३ च, तासां च तिसृणां अनुक्रमेण एते त्रयः पुत्राः–अम्बिकाया धृतराष्ट्रः परं जात्यन्धः, अम्बालिकायाः पुत्रः [पण्डुः] पाण्डुः, अम्बायाः पुत्रो विदुरो जातः । धृतराष्ट्रस्य गान्धारीयसुबलो राजा, तस्य पुत्रः शकुनिनामा राजा, तस्य सप्त पुत्र्यो गान्धारीप्रमुखाः परिणायिताः । गान्धार्याः पुत्रो युद्धकरण–जनमारणादि–अशुभस्वप्नसूचितो दुर्योधनो जातः । परं स्वमात्रा अनिष्पन्नो बलात् पातितः त्रिंशन्मासान् गर्भे स्थितो मासषट्कं च पेटिकायां वर्धितः । एवं धृतराष्ट्रस्य पुत्रशतं जातं । पण्डोः भार्याद्वयं–कुन्ती माद्री च । कुन्ती शौर्यपुरस्वामिनः अन्धकवृष्णेः पुत्री समुद्रविजयादीनां दश-दशार्हाणां भगिनी गान्धर्वविवाहेन परिणायिता । तस्या एकः पुत्रः कर्णः, स प्रच्छन्नं जातमात्र एव कांस्यपेटी-मध्ये प्रक्षिप्य, गङ्गायां वाहितः, हस्तिनापुरवासिना सूतनाम्ना सारथिना गृहीतः, स्वपुत्रीकृत्य स्वगृहे वर्धितः । पुनः कुन्त्याः पुत्रत्रयं–मेरु १ क्षीरसमुद्र २ सूर्य ३ चन्द्र ४ श्रीः ५ स्वप्नपञ्चकसूचितः प्रथमो युधिष्ठिरः १, द्वितीयो भीमः २, तृतीयो गजारूढशक्रस्वप्नसूचितोऽर्जुनः ३ एवं कुन्त्याः पुत्रचतुष्टयं । द्वितीया भार्या पण्डोः माद्री सा मद्रकराजस्य पुत्री स्वयंवरे परिणीता तस्याः पुत्रद्वयं–नकुलः सहदेवश्च । अथ अम्बिकायाः यः पुत्रो विदुरोऽभूत्, स देवकराजपुत्रीं कुमुदिनीं परिणीतवान् । हरिवंशे अथ यदुनामा राजाऽभूत्, तस्य पुत्रः सूरनामा जातः । तस्य द्वौ पुत्रौ जातौ–शौरी सुवीरश्च । सूरराजा शौरिनामपुत्रस्य मथुराराज्यं, सुवीरनामपुत्रस्य च

युवराज्यं दत्त्वा स्वयं दीक्षां ललौ। शौरिनृपोऽपि समये स्वकीयं मथुराराज्यं लघुभ्रातरि सुवीरे स्थापयित्वा, स्वयं कुशावर्तदेशे गत्वा, स्वनाम्ना शौरिपुरं नाम नगरं अस्थापयत्। अथ शौरिपुरे शौरिनृपो राज्यं करोति, सुवीरो मथुरायां राज्यं करोति। द्वावपि सगीनौ भ्रातरौ। अथ शौरिनृपस्य अन्धकवृष्णिनामा पुत्रो जातः। सुवीरस्य मथुरास्वामिनो भोजकवृष्णिनामा पुत्रो जातो। भोजकवृष्णिनृपस्य उग्रसेनः पुत्रो यस्य कंसः पुत्रो यस्य च सत्यभामा–राजीमतीप्रमुखाः पुत्र्यः। अथ च शौरिपुरनगरस्वामिनोऽन्धकवृष्णिनामभूपस्य दश पुत्राः समुद्रविजय १ अक्षोभ्य २ स्तिमित ३ सागर ४ हिमवन्त ५ अचल ६ धरण ७ पूरण ८ अभिचन्द्र ९ वसुदेवनामानो १० दश पुत्रा जाताः। दशापि दशार्हा इति कथ्यन्ते। अथ अन्धकवृष्णिनामा राजा स्वकीयं शौरिपुरराज्यं ज्येष्ठपुत्रस्य समुद्रविजयस्य दत्त्वा, दीक्षां ललौ। एवं भोजकवृष्णिनामा राजापि स्वस्य पुत्रस्य उग्रसेनस्य मथुराराज्यं दत्त्वा, चारित्रं अग्रहीत्। एवं सति मथुरायां नगर्यां उग्रसेनो राजा राज्यं करोति, शौरिपुरनगरे च समुद्रविजयो राजा राज्यं करोति ॥

अथ श्रीनेमिनाथस्य पञ्चकल्याणकानि संक्षेपवाचनया आह—

**तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी पंचचित्ते हुत्था, तं जहा–चित्ताहिं चुए चइत्ता गब्भं वक्कंते, तहेव उक्खेवो जाव चित्ताहिं परिनिव्वुए ॥ १७० ॥**

अयमर्थः—"तेणं कालेणं तेणं समएणं" तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमिः पञ्चचित्रोऽभवत् । चित्रानक्षत्रे चन्द्रेण सह योगं वर्तमाने देवलोकात् च्युत्वा गर्भे भगवान् व्युत्क्रान्तः १ एवमुक्खेवओ त्ति" पूर्वं उक्तस्य आलापकस्य उच्चारणं श्रीपार्श्वनाथाधिकारे विशाखानक्षत्रेण कृतं, तथाऽत्र चित्राभिलापेन कार्यमित्यर्थः । तथाहि—चित्रानक्षत्रे जातः २, चित्रानक्षत्रे दीक्षा गृहीता ३, चित्रानक्षत्रे केवलज्ञानं उत्पन्नं ४, चित्रानक्षत्रे निर्वाणकल्याणकं जातं ५ इति ॥

अथ विस्तरवाचनायां श्रीनेमिनाथस्य च्यवनकल्याणकं कथ्यते, तत्राह—

तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी जे से वासाणं चउत्थे मासे सत्तमे पक्खे कत्तिअबहुले, तस्स णं कत्तियबहुलस्स बारसीपक्खे णं अपराजिआओ महाविमाणाओ बत्तीससागरोवमठिइआओ अणंतरं चयं चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे सोरियपुरे नयरे समुद्दविजयस्स रण्णो भारिआए सिवाए देवीए पुव्वरत्तावरत्तकालसमयंसि जाव चित्ताहिं गब्भत्ताए वक्कंते, सव्वं तहेव सुमिणदंसणदविणसंहरणाइअं इत्थ भाणियव्वं ॥ १७१ ॥

अर्थस्तु सुगम एव, तथापि लापनिका प्रदर्श्यते—"तेणं कालेणं तेणं समएणं" तस्मिन् काले तस्मिन् समये

अर्हन् अरिष्टनेमिः वर्षाकालस्य चतुर्थमासे सप्तमे पक्षे, एतावता कार्तिकवदि द्वादश्यां अपराजितनामविमानात् चतुर्थानुत्तरविमानात् यस्मिन् द्वात्रिंशत्सागरोपमस्थितिः वर्तते । क्वचित् त्रयस्त्रिंशत्सागरोपमानीति, तस्मात् च्युत्वा, अस्मिन् जंबूद्वीपे अस्मिन् भरतक्षेत्रे शौरिपुरनामनगरे समुद्रविजयो राजा, तस्य भार्या शिवादेवी, तस्याः कुक्षौ अर्धरात्रिसमये चित्रानक्षत्रे चन्द्रेण सह योगं वर्तमाने भगवान् गर्भत्वेन अवतीर्णः । अत्रापि स्वप्नदर्शनं, स्वप्नलक्षणपाठकपार्श्वे स्वप्नानां पृच्छा, तत्फलं श्रीसमुद्रविजयनृपस्य गृहे द्रविणसंहरणं च इत्यादिकं सर्वं महावीरवत् वाच्यम् ॥

अथ कदा भगवतो जन्मकल्याणकं जातं ?, तत्राह—

तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स पंचमीपक्खे णं नवण्हं मासाणं जाव चित्ताहिं नक्खत्तेणं जोगमुवागएणं जाव आरोग्गा आरोग्गं दारयं पयाया ॥ जम्मणं समुद्दविजयाभिलावेणं नेयव्वं, जाव तं होउ णं कुमारे अरिट्ठनेमी नामणं ॥

अर्थलेशः—"तेणं कालेणं" तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमिः वर्षाकालस्य प्रथमे मासे द्वितीये

पक्षे एतावता श्रावणसुदि पञ्चम्यां नवमासेषु प्रतिपूर्णेषु सार्धसप्तदिनाधिकेषु व्यतिक्रान्तेषु चित्रानक्षत्रे चन्द्रेण समं योगं वर्तमाने आरोग्या–कष्टरहिता शिवा आरोग्यं पुत्रं अजीजनत्। जन्मोत्सवः सर्वोऽपि दिक्कुमारी–चतुःषष्टीन्द्रकृतः श्रीमहावीरदेवाधिकारवत् अत्रापि वाच्यः। पुनः स्थितिपतिकादिकर्तव्यता समुद्रविजयाभिलापेन वाच्यः। रिष्टरत्नमयं नेमिचक्रं आकाशे उत्पतन् माता शिवादेवी स्वप्ने अद्राक्षीत् इति रिष्टनेमिः। ततो अपश्चिमशब्दवत् नञ्पूर्वत्वे अरिष्टनेमिरिति नाम दत्तं। कुमारस्तु अपरिणीतत्वात्। अथ एकदा पालनस्थे भगवति इन्द्रेण नेमेः बलस्य वर्णनं कृतं, तदा असहमानाः केऽपि सुरा बलं परीक्षितुं आगत्य, पालनस्थं भगवन्तं अपजह्रुः। योजनानां सपादलक्षे अतिक्रान्ते श्रीभगवान् अवधिज्ञानेन सुरविकारं ज्ञात्वा, बलं प्रयुङ्क्ते स्म। ततः ते सुराः श्रीभगवतो बलं असहमाना अधस्तात् पेतुः, शतयोजनीं धरित्रीमध्ये गताश्च। तत्र इन्द्र आगत्य, अनुकम्पया सुरान् मोचयित्वा, प्रभुं पालने मुक्त्वा स्तुत्वा अपराधं च क्षामयित्वा स्वर्गं गतः। अथ एकदा मथुरायां उग्रसेनो राजा बहिः क्रीडार्थं गतोऽभूत्। तेन तत्र कोऽपि तापसो दृष्टः, पारणार्थं निमन्त्र्य, राजा स्वगृहे गतः। परं राज्ञो बहुराजकार्यव्यग्रत्वेन पारणा–कारापणं विस्मृतं, पुनरपि द्वितीयमासक्षपणे तथैव निमन्त्रितः, तथैव विस्मृतं। पुनः तथैव तृतीयवारेऽपि निमन्त्रितः, तथैव विस्मृतं। ततः तापसेन कोपाक्रान्तेन निदानं चक्रे—"यदुत चेत् मत्तपः [फलं] प्रमाणं तदा अस्य उग्रसेनराजस्य दुःखदायको अहं स्याम्" इति। ततः स तापसो मृत्वा, उग्रसेनराजस्य भार्या धारिणी तस्याः कुक्षौ अवतीर्णः।

धारिण्याश्च स्वपतिहृदयमांसभक्षणदोहदो जातः। स दोहदः मन्त्रिभिः यथाकथञ्चित् पूरितः। जन्मानन्तरं नाम-मुद्रिका-पत्रिकाभ्यां सहितं पुत्रं कांस्यपेटायां प्रक्षिप्य, राज्ञा यमुनायां पेटा वाहिता। सा कांस्यपेटी वहन्ती शौरिपुरनगरे गता। तस्मिन् समये प्रातःकाले शौचार्थम् अगतेन रसवणिजा सुभद्रनाम्ना सा पेटा आगच्छन्ती गृहीता। बहिरानीय उद्घाटिता। मुद्रिकां पत्रिकां च भव्यस्थाने रक्षयित्वा, मध्यस्थं बालकं स्वप्रियायाः समर्पयामास। तस्य नाम 'कंस' इति दत्तं, स च कंसः प्रवर्धमानो राजवीर्यत्वात् रममाणो डिम्भान् कुट्टयति। ततो डिम्भमातृपित्रादयः कंसमातापित्रोः उपालम्भं ददति। कंसश्च शिक्षां न मन्यते। ततः सुभद्रेण च वसुदेवकुमारस्य सेवार्थं समर्पितः। अथ कंसो वसुदेवसेवां कुर्वन् तिष्ठति। अस्मिन् प्रस्तावे राजगृहनगरे जरासन्धनामा प्रतिवासुदेवो राज्यं पालयति। तस्य सर्वेऽपि यादवराजानः सेवकाः सन्ति। तस्य जरासंधस्य जीवयशानाम्नी पुत्री वर्तते, सा राज्ञो जीववत् प्रिया। एकदा राज्ञो नैमित्तिकस्य जीवयशाजन्मपत्रिका दर्शिता—"एषा कीदृशी भविष्यति?" इति पृष्टं च। ततो नैमित्तिकेन प्रोक्तं—"सत्यं वक्ष्यामि, न रोषः कार्यः। एषा परिणीता सती उभयकुलक्षयकारिणी भविष्यति।" ततो राज्ञा प्रच्छन्ना वार्ता रक्षिता। तस्मिन् समये यादवराजानो दीप्तिमन्तः सन्तः जरासन्धस्य आज्ञां सम्यक् न मन्यन्ते। ततो जरासन्धेन समुद्रविजयनृपस्य आज्ञा दत्ता—"यदुत वैताढ्यपर्वतपार्श्वे सिंहपुरे नगरे सिंहनामा राजास्ति। सः अस्मदाज्ञां न मन्यते, तं बध्वा यः समानयति तस्मै अहं जीवयशापुत्रीं नगरमेकं च ददामि।" ततः तद्बन्धनार्थं चटन्तं समुद्रविजयं

निवार्य, वसुदेवः कंसेन सहसैन्यः चचाल। तत्र गत्वा अग्रेगामिना कंसेन सिंहराजा बध्वा वसुदेवाय सम-
पितः। वसुदेवेन च जरासन्धप्रतिवासुदेवाय समर्पितः। ततो वसुदेवाय दीयमाना जीवयशा, ज्ञातपरमार्थेन
वसुदेवेन कंसेन स सिंहराजा बद्ध इति कंसाय परिणायिता। अथ कंसो जीवयशां भार्यां परिणीय पितृवैरं स्मरन्
मथुराराज्यं लात्वा, प्रबलसेनया सह मथुरायां गत्वा, स्वपितरं उग्रसेनं काष्ठपञ्जरे निःक्षिप्य स्वयं राज्यं करोति
स्म। तस्मिन् समये अतिमुक्तकः कंसस्य लघुभ्राता पितृदुःखात् वैराग्येण दीक्षां ललौ। अस्मिन् प्रस्तावे वसु-
देवः शौरिपुरनगरे स्त्रीवल्लभः कुमारपदवीं भजमानः तिष्ठति। स्त्रीवल्लभत्वं कथं उपार्जितं? तत्र पूर्वभवो
यथा—नन्दिषेणनामा कोऽपि एकः कुलपुत्रक आसीत्। स कीदृक्?। कुतीर्थी इव कुदर्शनः, स्थालीबुध्नमिव
श्यामः, बिडालवत् पिङ्गरनेत्रः, गणेश इव लम्बोदरः, हस्ती इव दन्तुरः, उष्ट्र इव लम्बोष्ठः, वानर इव शूर्पकर्णः,
कुष्ठरोगी इव चिपिटघ्राणः, त्रिकवत् त्रिकोणमौलिः। किं बहुना, कुरूपाणां दृष्टान्तीभूतः तस्य मातापितरौ
मृतौ। ततो मातुलगृहे कार्याणि कुर्वन् युवा जातः, ततः परगृहभञ्जिना लोकेन तस्य मनो भग्नं,—"भो! किं
वृथा दासवत् कार्याणि कुरुषे? परं मातुलः त्वां परिणाययति अपि न?।" ततो भग्नः रुष्टः सन् कार्याणि न
करोति, न परिणायित इति हेतोः। ततो मातुलेन बहुस्थानेषु कन्या मार्गिताः, परं नन्दिषेणं न कापि परिण-
यति, कुरूपत्वात्, ततो निजपुत्र्योऽनुक्रमेण अभ्यर्थिताः, परं ताः सर्वा अब्रुवन्—"विषभक्षण-पाशीग्रहण-
प्रमुखं करिष्यामः, परं न चैनं परिणयिष्यामः।" ततो वैराग्यात् नन्दिषेणेन दीक्षा गृहीता। सर्वसाधूनां मया

नन्दिषेणेन दीक्षाग्रहणं

वैयावृत्यं कार्यं इति अभिग्रहो गृहीतः। देवेन परीक्षा कृता, तत्र परीक्षामपि प्राप्तः। ततो नेमिचरित्रसंमत्या द्वादशसहस्रवर्षाणि, वसुदेवहिण्डिसम्मत्या च पञ्चपञ्चाशत् ५५ वर्षसहस्राणि दीक्षां पालयित्वा, प्रान्तावस्थायां 'स्त्रीवल्लभो भूयासं' इति निदानं चक्रे। ततो मृत्वा देवलोके सुखं भुक्त्वा च्युत्वा वसुदेवो जातः। स पूर्वभवाभ्यस्ततपःप्रभावनिदानेन स्त्रीवल्लभो जातः। यत्र यत्र नगरे भ्रमति तत्र तत्र नगरस्त्रियो गृहकार्याणि अर्धकृतानि मुक्त्वा, पृष्ठतः परिभ्रमन्ति। तत उद्विग्नैः नागरिकैः समुद्रविजयो विज्ञप्तः। ततो राज्ञा नागरिकाणां सन्तोषं कृत्वा वसुदेवस्य कथितं–"त्वया राजलोके एव कलाभ्यासादिक्रीडा कर्तव्या। नगरमध्ये बहिर्वा भ्रमणं न कार्यं, अद्य श्वो वैरिभीतिः श्रूयते।" ततो वसुदेवेनापि वृद्धभ्रातृवचनं पितृवत् मान्यमिति तथैव कृतं। अन्यदा ग्रीष्मकाले शिवादेव्या विलेपनार्थं चन्दनादि कच्चोलकं दासीहस्ते समुद्रविजयाय स्वभर्तुर्मुक्तं। प्रतोल्यां अन्तरास्थितेन वसुदेवेन गच्छन्ती दासी दृष्टा, पृष्टं–"किं लात्वा यासि?, देहि मम" सा न ददाति। वसुदेवेन उत्थाय बलात् हस्तात् गृहीत्वा स्वदेहे विलेपितं। ततो रुष्टया नीचजातित्वात् दास्या मर्मवाक्यं प्रोक्तं–"भो! ईदृशोऽसि तदा राज्ञा गृहमध्ये क्षिप्तोऽसि।" वसुदेवेन पृष्टं–"कथं ततो दास्या सर्वं स्वरूपं कथितं?।" ततो वसुदेवोऽमर्षं कृत्वा, रात्रौ शौरिपुरनगरात् निर्गत्य, चितां वन्हिना प्रज्वाल्य, तन्मध्ये एकं मृतकं दग्ध्वा, स्वां जङ्घां विदार्य, तद्रुधिरेण प्रतोल्यां लिलेख–"वसुदेवः चितायां प्रविष्टोऽस्ति।" ततो वसुदेवः प्रतिदेशं प्रतिग्रामं प्रतिनगरं वर्षसहस्रं यावत् भ्रमन् विद्याधरप्रमुखनरेश्वराणां द्वासप्तति(७२)सहस्रकन्यानां

पाणिग्रहणं चक्रे । नानाविधाश्च रूपपरावर्तनादिविद्याः शिक्षिताः । ततः पुनः व्याघुट्य शौरिपुरनगरे समागतः, परं वामनं कुब्जं न रूपं कृतं । तस्मिन् समये च तत्र रोहिणीस्वयंवरः प्रारब्धोऽस्ति । अनेकेषु राजसु तत्र स्थितेषु प्रान्तस्थाने वामनोऽपि मर्दलं वादयन् स्थितः, रोहिणी मौलं वसुदेवरूपं पश्यति, अन्ये वामनमेव । ततो रोहिणी सर्वभूपान् अवगणय्य वामनस्य कण्ठे वरमालां चिक्षेप । वामनो रोहिणीं लात्वा निःसृतः । समुद्रविजयादयो रुष्टाः–"कथं अस्मासु सत्सु अयं वामनः कन्यां लात्वा याति ? ।" परस्परं युद्धं लग्नं । ततो वसुदेवेन विमृष्टं–"न युक्तं भ्रात्रा समं युद्धकरणं ।" ततः समुद्रविजयाय बाणो मुक्तः । तत्र बाणे लिखितमस्ति–"वसुदेवः प्रणमति" इति । ततोऽक्षरवाचनानन्तरं समुद्रविजयेन ज्ञातं–"अयं मम भ्राता, परं केनापि कारणेन वामनरूपं कृतमस्ति ।" ततः सर्वेऽपि मिलिताः, वसुदेवस्य रोहिणी परिणायिता । कालेन गज १ सिंह २ चन्द्र ३ समुद्र ४ स्वप्नचतुष्टयसूचितः पुत्रो जातः, तस्य 'राम' इति नाम । ततः कंसेन स्वमित्रस्नेहात् वसुदेवः स्वपुर्यां–मथुरायां समानीतः । पश्चात् वसुदेवस्य मृतिकावतीनामनगरीस्वामिनो देवकराजस्य पुत्रीं देवकीं कंसेन परिणायिता, गोकोटिसहितं नन्द–यशोदाप्रदानं करमोचने कृतं । एकदा जीवयशा कंसपत्नी स्वस्कन्धे देवकीं स्थापयित्वा गर्वेण नृत्यन्ती क्रीडति । तस्मिन् समये कंसस्य लघुभ्राता अतिमुक्तको मुनिः समेतः, जीवयशा प्राह–"एहि देवर ! आवाभ्यां रम्यते ।" कण्ठे लगित्वा उन्मत्ता सती उपसर्गं कुर्वती न निवर्तते । तदा अतिमुक्तकेन तस्या गर्वोत्तारणार्थं प्रोक्तं–"रे मूर्खे ! किं नृत्यसि ?, अस्याः–देवक्या सप्तगर्भमध्ये एको गर्भः

तव भर्तृहन्ता भविष्यति ।" [ इति श्रुत्वा-सर्वो वृत्तान्तः कंसस्याग्रे प्रोक्तः ] तेन हेतुना कंसेन वसुदेवपार्श्वे सप्त गर्भा याचिताः, वसुदेवेन अङ्गीकृतं दास्यामि ।

अथ देवक्या ये षट् पुत्रा अनुक्रमेण जाताः, ते भद्दिलपुरे नागो नाम श्रेष्ठी, तस्य भार्या सुलसा, तया पुत्रार्थं हरिणैगमैषी देव आराधितः । तेन प्रोक्तं-"त्वं अङ्गजान् पुत्रान्-मृतानेव जनयिष्यसि, परं देवकी पुत्रान् जातमात्रान् आनीय प्रच्छन्नं तव दास्यामि ।" इति सुलसाया देवकीपुत्रा दत्ताः । यतो देवक्याः पूर्वभवे सपत्न्याः सप्त रत्नानि अपहृतानि आसन्, परमेकं रत्नं रुदन्त्याः तस्याः समर्पितं, तेन कृष्णस्य सुखं किमपि प्राप्तं । अथ सुलसापुत्राः षडपि मृता एव देवकीपार्श्वे मुक्ताः, ते सर्वेऽपि कंसेन शिलायां आस्फाल्य मारिताः । सप्तमे गर्भे जाते देवक्या सिंह १ सूर्य २ वह्नि ३ गज ४ ध्वज ५ विमान ६ पद्मसरोवराणि इति सप्त ७ स्वप्ना दृष्टाः । तेन देवक्याः यशोदायाः प्रोक्तं-"तवाऽपत्यं मम देयं, मम पुत्रः त्वया प्रच्छन्नं रक्षणीयः" इति ।

अथ कृष्णजन्मसमये कंसेन प्राहरिका विशेषतो मुक्ता अभूवन् । परं तेषां निद्रा समागता गर्भप्रभावात् । खरः शब्दं चकार, तदा खरमेषोऽपि तव पुत्र इति श्रवणात् न शब्दं चकार । वसुदेवः कृष्णं लात्वा निर्गच्छन् प्रतोलीकपाटोद्घाटने उग्रसेनेन "कोऽसि ?" इति पृष्टः । वसुदेवेन प्रोक्तं-"मौनं कुरु, यः काष्ठपञ्जरात् त्वां निष्कास्य राज्ये स्थापयिष्यति, सोऽयं ।" ततो वसुदेवः कृष्णं यशोदाया दत्तवान् । यशोदा पुत्रीं च देवकीपार्श्वे मुमोच । प्रभाते कंसः तां सुतामपि छिन्ननासां चकार । अथ कृष्णो नन्दगोकुलीगृहे वर्धते देवकी पुत्रस्नेहात्

अवसरे अवसरे यशोदापार्श्वे पर्वमिदं कृत्वा याति। अथ वत्सबारसि १ काजलीत्रीज २ गोपूज ३ गोत्राट ४ इत्यादिमिथ्यात्वपर्वाणि जातानि। एकादशे वर्षे जाते कृष्णस्य बालक्रीडावर्णनं–किवारइ कृष्ण पाणीना घडा ढोलइ, किवारइ यैसइ मानइ खोलइ, किवारइ दहीनी गोली घोलइ, किवारइ तरतउ माखण छासिमांहे बोलइ, किवारइ माता सांड कांन झाली आणइं, किवारइ जसोदानउ कंचुय उताणइ, किवारइ जातउ साप साहइ, किवारइ आगिनइ हाथ वाहइ, किवारइ हसीनइ मा साम्हओ जोयइ, किवारइ रूसणउ मांडिनइ रोयइ, किवारइ सूतउ उठाडतां आलस मोडइ, किवारइ रीसणउ उत्रेवड फोडइ इत्यादि।

अथ षोडशवार्षिके कृष्णे जाते गोचारणं गोवर्धनपर्वतोत्पाटनं गोपाङ्गनारमणं च लोकप्रसिद्धं सर्वं वाच्यम्।

अथ तदवसरे पुनः कंसेन नैमित्तिकः पृष्टः–"पूर्वोक्तं तव निमित्तं तु विघटितं, अथ पुनः वद–मम कस्मादपि भयं वर्तते?।" ततो नैमित्तिकः प्राह–"भो कंस! यः कोऽपि तव अरिष्टनामानं वृषभं १, केशिनामानं हयं २, खर–मेषनामानौ खरौ हनिष्यति ३-४, पुनः कालिनामानं सर्पं वश्यं करिष्यति ५, शार्ङ्गनाम धनुः आरोपयिष्यति ६, पुनः मल्लयुद्धाऽवसरे चाणूर ७, मौष्टिकनामानौ मल्लौ जयिष्यति ८, पुनः गोपुरे तिष्ठन्तौ चम्पक–पद्मोत्तरनामानौ ९-१० गजौ यो हनिष्यति स तव हन्ता ज्ञेयः।" ततः कंसः तस्य पुरुषस्य शुद्धिकृते अरिष्टादीन् वने मुमोच। कृष्णेन सर्वेऽपि ते हताः। पुनः धनुरारोपणावसरं श्रुत्वा कृष्णेन बलभद्रसहितेन वसुदेववारितेनाऽपि रथं आरुह्य तत्रागत्य धनुः आरोपितं। पुनः मल्लयुद्धोत्सवं द्रष्टुं रामकृष्णौ समागतौ,

द्वारे चम्पक-पद्मोत्तरनामानौ गजौ हतवन्तौ। ततः कंसेन प्रोक्तं–"यः चाणूर–मौष्टिकनामानौ मल्लौ जयति तस्मै अहं स्वकीयां–स्वसारं सत्यभामां ददामि।" ततः तद्वचनश्रवणेन उत्कण्ठिताभ्यां ताभ्यां सह युद्धं कुर्वाणाभ्यां–तौ मल्लौ हतौ। ततो भीतेन कोपं कृत्वा कंसेन प्रोक्तं–"अरे! एतौ कृष्णसर्पौ केन पोषितौ?।" केनापि प्रोक्तं–"नन्देन।" कंसः प्राह–"अरे! आनीयतां स नन्दः यथा शिक्षां ददामि।" ततः कृष्णेन कंसो मञ्चात् भूम्यां पातयित्वा हतः। उग्रसेनेन स्वपुत्री सत्यभामा त्रिंशतवर्षीया ३०० षोडशवार्षिकाय कृष्णाय परिणायिता। श्रीसमुद्रविजयरामकृष्णैः उग्रसेनो राजा काष्ठपञ्जरात् निष्कास्य, मथुराराज्ये स्थापितः। जीवयशा कंसपत्नी च रुदन्ती राजगृहनगरे स्वपितृश्रीजरासन्धपार्श्वे गत्वा जरासन्धनृपाय सर्वोऽपि कंस-मारणवृत्तान्तः कथितः। जरासन्धप्रतिवासुदेवेन प्रोक्तं–"हे वत्से! स्वस्था भव, दुःखं मा कुरु, सर्वं भव्यं भविष्यति।" ततो जरासन्धनृपेण सोमकनृपो निजदूतो यादवपार्श्वे मुक्तः, कथापितं च–"भो यादव–राजानः! भव्यं कृतं, मम जामाता कंसो हतः, मम पुत्र्या वैधव्यं दत्तं, अथ ज्ञास्यते ततो यादवभूपाः सर्वेऽपि भयभ्रान्ता जाताः। ततः समुद्रविजयो राजा कृष्ण–बलभद्र–श्रीनेमिकुमारादिसहितः शौरिपुरनगरात् एकादशकुलकोटीः, उग्रसेनो राजा सप्तकुलकोटीः मथुरात एवं अष्टादशकुलकोटीः यादवानां लात्वा, पश्चिम-दिशि गन्तव्यं, यत्र सत्यभामा भानु–भ्रमरनामकं पुत्रयुगलं जनयति तत्र स्थातव्यं। तत्र भवतां जयो भावी।" इति नैमित्तिकवचनं श्रुत्वा, चलिताः पश्चिमां दिशमुद्दिश्य। तस्मिन् प्रस्तावे कोपाक्रान्तं

यादवमारणार्थं चटन्तं जरासन्धं नृपं निवार्य, कालककुमारः पञ्चशतकुमारसहितः प्रतिज्ञां कृत्वा, यादवकेटके चटितः। अत्यासन्नमागतं कालककुमारं ज्ञात्वा, यादवानां रक्षणाय यादवकुलदेवी स्थविरारूपं कृत्वा मार्गे चितानां सहस्रं कृत्वा मार्गे उपविष्टा सती रोदितुं लग्ना। कालककुमारेण प्रोक्तं—"हे स्थविरे! काऽसि त्वं?, किं तव दुःखं?, कथं च रोदिषि?।" ततः सा स्थविरा प्राह—"अहं यादवानां कुलदेवी, यादवाश्च कालककुमारागमनं श्रुत्वा अग्रे गन्तुं असमर्था एतासु चितासु प्रविश्य ज्वलिता मृताः। अथ मम कः पूजां करिष्यति? इति हेतोः रोदिमि। अहमपि चितायां प्रविक्ष्यामि! किं दुःखदग्धया स्थितया मया?।" ततः कालककुमारोऽपि अज्ञानात् तान् कर्पितुं रोपात् चितायां प्रविष्टो मृतश्च। ततो यादवा निर्भयाः सन्तः चलिताः, यत्र स्थाने सत्यभामा पुत्रयुग्मं प्रसूता, तत्र सर्वेऽपि स्थिताः। श्रीकृष्णेन सुस्थितनामा लवणसमुद्राधिपतिः देव आराधितः, उपवासत्रयेण स देव आगत्य, कौस्तुभरत्नं पाञ्चजन्यशङ्खं च प्राभृतीकृतवान्। ततः कृष्णेन प्रोक्तं—"भो! देहि नवमवासुदेवाय भग्नाय आगताय स्थानं पूर्वरीतिव्यवस्थां च पालय।" ततः 'ओम्' इति भणित्वा इन्द्रो विज्ञप्तः। इन्द्रेण च धनदपार्श्वात् नवीनां द्वारकां कृत्वा, कृष्णाय समर्पिता। कीदृशी सा द्वारका?। द्वादशयोजनानि दीर्घा, नवयोजनानि पृथुला, यस्याः वप्रो नवहस्तोच्चो नवहस्तो भूमिगतो द्वादशहस्तः पृथुलः सर्वस्वर्णमयो रत्नकपिशीर्षः सार्धदिनत्रयं यावत् रत्नसुवर्णमणिमाणिक्यविविधवस्त्रविविधाभरणविविधधान्यादिसर्ववस्तुवृष्टिकरणेन धनदेन भृता नगरी, सप्तभौमिकाऽष्टादशभौमिकैकविंशतिभौमिकैः आवासैः

विराजमाना साक्षात् स्वर्गपुरीवत् दृश्यते । अथ सर्वेऽपि यादवा निर्भयाः सन्तो मुदिताः सन्तः तिष्ठन्ति । श्रीसमुद्रविजयादिभिः भाविनं वासुदेवं मत्वा कृष्णो राज्ये स्थापितः । अथ गते कियति काले रत्नकम्बल-व्यवहारिणो वणिजो द्वारकायां रत्नकम्बलानि विक्रीय राजगृहे गताः। तत्र जीवयशां रत्नकम्बलं अल्पमूल्येन मार्गयन्तीं प्रति ते प्राहुः—"वरं द्वारका यत्र कृष्णो राजा, यत्र अस्माकं रत्नकम्बलानां बहुमूल्यं समागतं" इति व्यतिकरेण—वृत्तान्तेन यादवजीवनस्वरूपं ज्ञात्वा, कोपं कृत्वा जरासन्धः सर्वं सैन्यं लात्वा, समागतः । ततः कृष्णोऽपि जरासन्धं समागच्छन्तं श्रुत्वा द्वारकातो निर्गत्य, पञ्चचत्वारिंशद्योजनानि अतिक्रम्य सम्मुखः समागतः। पाडला—पञ्चासराग्रामसीम्नि चतुर्योजनान्तरे सैन्यद्वयमपि स्थितं, परस्परं युद्धं लग्नं, लक्षशो मनुष्या मृताः। ततो युद्धे कृष्णं अजेयं ज्ञात्वा, जरासन्धभूपेन जराविद्या मुक्ता । तया कृष्णस्य सैन्यं रुधिरं वमन् भूमौ पपात ॥ ततः श्रीनेमिनाथवचनेन श्रीकृष्णेन उपवासत्रयं कृत्वा पद्मावती आराधिता । तया प्रत्यक्षी-भूय, धरणेन्द्रस्य देवालयात् भावितीर्थङ्करस्य "श्रीपार्श्वनाथस्य" प्रतिमा आनीय दत्ता। तदा मङ्गलनिमित्तं हृष्टेन कृष्णेन शङ्खो वादितः, तत्रैव स्थाने बिम्बं स्थापितं । शङ्खपूरणात् "शङ्खेश्वर" इति तीर्थं जातं ॥ पुनः श्रीनेमिनाथेन इन्द्रेण मातलिसारथिना समं मुक्तो यो रथः तमारुह्य, शङ्खनादः कृतः । तेन जरासन्धसैन्यं निष्प्रतापं जातं ॥ ततो दिनत्रयं श्रीशङ्खेश्वरपार्श्वनाथप्रतिमास्नात्रोदकेन श्रीकृष्णस्य सैन्यं सज्जं जातं । पुनः जरासन्धेन कृष्णाय स्वकीयं चक्रं मुक्तं, परं न प्रभवितं, ततः तदेव चक्रं गृहीत्वा, कृष्णेन मुक्तं । तेन

जरासन्धस्य मस्तकं छिन्नं, मृतो जरासन्धः। देवैः कृष्णस्योपरि पुष्पवृष्टिः कृत्वा, उच्चैः प्रोक्तं—"रे रे ! श्रीकृष्णो नवमो वासुदेवो जातः। अत एनमेव सर्वेऽपि श्रयध्वं।" ततः सर्वमपि जरासन्धसम्बन्धि सैन्यं श्रीकृष्णस्य मिलितम्।

अथ श्रीकृष्णवासुदेवो द्वारकां आगत्य, त्रिखण्डराज्यं भुञ्जानः तिष्ठति। अथ द्वारकायां द्वासप्तति ७२ कुलकोट्यो, द्वारकातो बहिश्च षष्टिकुलकोट्यो यादवानां वसन्ति। पुनः द्वारकायां के के महापुरुषा वसन्ति ?, तान् आह—श्रीसमुद्रविजयादयो दश दशार्हाः १, बलदेवादयः पञ्चमहावीराः २, श्रीउग्रसेनादयः षोडश (१६) सहस्राः राजानः ३, प्रद्युम्नादयः सार्धत्रिकोट्यः कुमाराः ४, शाम्बादयः षोडशसहस्राः दुर्दान्त-कुमाराः ५, वीरसेनादय एकविंशति (२१) सहस्राः वीराः ६, महासेनादयः षट्पञ्चाशतसहस्राः बलवन्तो राजानः ७ रुक्मिणीप्रमुखा द्वात्रिंशतसहस्राः ३२ राज्यः ८, अनङ्गसेनादयो अनेकसहस्राः गणिकाः ९ एवं प्राज्यं राज्यं कुर्वाणेषु यादवेषु सत्सु। एकदा इन्द्रमहाराजेन श्रीनेमेः बलवर्णनं कृतं। ततो मिथ्यादृष्टिदेवा असहमानाः आगत्य, श्रीगिरिनारस्य मेखलायां सुरधारानाम नगरं स्थापयित्वा, मर्त्यरूपाः सन्तः तस्थुः। बहून् द्वारका-लोकान् उपद्रवयन्ति-पीडयन्ति। तदा श्रीवसुदेवस्य पुत्रः श्रीनेमिनाथस्य भ्राता वीरमानी अनादृष्टिः तेषां निर्घाटनार्थं गतः, तैः मायामानवैः जित्वा, स्वकीयनगरमध्ये नीतः। तं वृत्तान्तं श्रुत्वा, श्रीसमुद्रविजयं गच्छन्तं निवार्य श्रीरामकृष्णौ गतौ। तौ अपि सङ्ग्रामे जित्वा स्वपुरीमध्ये क्षिप्तौ। ततो द्वारकायां कोलाहलो जातः—

"यदुत रामकृष्णौ अपहृतौ।" ततः सत्यभामाप्रमुखनारीभिः श्रीनेमिनाथर्विज्ञप्तः–"त्वयि अनन्तबलवीर्ये सति तव भ्रातृन् शत्रवोऽभिभवन्ति, तत् तवैव लज्जा!।" ततो भगवान् श्रीनेमिः एकाकी एव रथमारुह्य, शत्रुनगरस्य चतुर्दिक्षु समन्तात् रथं भ्रामयति स्म। ततो वप्रस्य कपिशीर्षाणि पेतुः। ततो मायाविदेवैः सिंहाः विकुर्विताः। स्वामिना च धनुष्टंकारेणैव त्रासिताः १, पुनः तैः अन्धकारं विकुर्वितं, भगवता उद्द्योतबाणो विमुक्तः २, पुनः तैः मेघवर्षणं प्रारब्धं, भगवता वायव्यं शस्त्रं मुक्तं ३, पुनः तैः अङ्गारवृष्टिः प्रारब्धा, भगवता पानीयेन उपशामिता ४, पुनः भगवता मोहनशस्त्रं मुक्तं, तेन सर्वेऽपि ते शत्रवो मूर्च्छां गताः अतीव पीडिता जाताः। तत इन्द्रेण आगत्य, श्रीनेमिर्विज्ञप्तः–"हे स्वामिन्! मुञ्च मुञ्च वराकान्, एते अज्ञानिनोऽनन्तबलस्य भगवतो माहात्म्यं न जानन्ति।" ततो भगवता कृपया मुक्ताः। ततः ते देवा महामहोत्सवेन नगरमध्ये मुक्त्वा, प्रणम्य स्वस्थानं गताः॥

अथ श्रीनेमिनाथस्य त्रीणि वर्षशतानि जातानि, परं पाणिग्रहणं न वाञ्छति। तदा शिवादेवी माता नेमिपुत्रं प्रति एवं अवादीत्–"हे पुत्र! त्वं अस्माकं मनोरथपूरणाय कथं विवाहं अद्यापि न कुरुषे?।" तदा नेमिः प्राह–"हे मातः! अहं कांचित् योग्यां कन्यकां विलोकयन् अस्मि, यदा लप्स्यते तदा तव कथयिष्यामि।" ततो मौनमाधाय माता स्थिता। अथ एकदा श्रीनेमिनाथः आयुधशालायां गतः, पूर्वं चक्रं कुम्भकारचक्रवत् भ्रामितं। पुनः शार्ङ्गनाम धनुः मृणालवत् नामितं। पुनः येन कृष्णस्य कौमोदकीनाम्नी गदा यष्टिवत् उत्पाट्य

नेमिनाथेन आयुध-शालायां शङ्खपूरणं

स्वकीयभुजा वृक्षे शाखावत् कृता। पुनः येन पाञ्चजन्यनामा शङ्खः पूरितः। तस्मिन् पूरिते किं जातं?, तदाह–स्तम्भान् उन्मूल्य हस्तिनो नष्टाः १, बन्धनानि त्रोटयित्वा अश्वा नष्टाः २, नादेन विश्वं बधिरं जातं ३, धरा घटहडिता ४, नगरीवप्रश्चकम्पे ५, पर्वताः संचेलुः ६, समुद्रा उच्छलिताः ७, दिग्गजाः त्रासं प्रापुः ८, यादवा मूर्छिता इव जाताः ९, ब्रह्माण्डं भयविह्वलं जातं १०। पुनः मल्लाखाटके हरिः हरिवत् भुजाशाखायां हिण्डोलितः। ततो हरेर्मनसि चिन्ता जाता–"नाऽहं वासुदेवः, मत्तो बलाधिकतया अयं वासुदेवः किं?" तदा आकाशे कुलदेवतावचनं जातं, तथाहि—

"राज्यं यो न समीहते गजघटा–टङ्कारसंराजितं, नैवाकाङ्क्षति चारुचन्द्रवदनां लीलावतीं योऽङ्गनाम्॥

यः संसारमहासमुद्रमथने भावी च मन्थाचलः, सोऽयं नेमिजिनेश्वरो विजयते योगीन्द्रचूडामणिः ॥ १ ॥"

ततः कृष्णस्य समाधानं जातं। अथ एकदा शिवादेव्या नेमिकुमारं नीरागमिव ज्ञात्वा, गोपीनां प्रोक्तं–"वसन्तसमयोऽस्ति, नेमिकुमारं जलक्रीडार्थं लात्वा यान्तु यथा तथा सरागक्रीडया नेमिः विवाहं मन्यते तथा कर्तव्यं।" ततः द्वात्रिंशत्सहस्राः सत्यभामाद्या जलक्रीडायां नेमिं लात्वा गताः। तत्र स्वेच्छया नानाविधायां क्रीडायां क्रियमाणायां तत्र एका प्राह–"हे देवर! तव भ्राता श्रीकृष्णः द्वात्रिंशत्सहस्रभार्याः परिणीतवान्। त्वं एकां अपि भार्यां कथं न परिणयसि?।" अन्या प्राह–"हे सुभग! एतादृशं यौवनं पुनः दुर्लभं कथं निरर्थकं गमयसि?। मातृपितृप्रमोदाय एकां वधूं परिणय। वधूमुखदर्शनेनैव मातृपितृसन्तोषो भवेत्।"

पुनरपि रुक्मिणी प्राह–"रे वल्लभ देवर! यदि त्वं मुक्तिं वाञ्छसि तदापि गृहिधर्मं समाश्रय, ततो धर्ममार्गे संचर। यतः ऋषभादयः तीर्थङ्करा अपि विवाहं पूर्वं कृत्वा, स्त्रीभिः सह भोगान् भुक्त्वा, मुक्तिमपि लेभिरे। त्वं तु नवीन एव मुक्तिगामी उत्थितः।" ततः कोपं कृत्वा सत्यभामा प्राह–"हे सख्यः! अयं चेत् देवरो न मानयति आत्मनां कथितं, तदा बलात्कारेण दृढं गृह्यते।" ततो लक्ष्मणाप्रमुखाः प्रोचुः—"अयं देवरः पूज्यो वर्तते, तेन न बलात्कारः कार्यः, विनयेन स्नेहेन च यदि मानयति तदा मानयतु।" ततः सत्यभामादिभिः सहासं नेमिर्भणितः–"हे देवर! एवमभ्यर्थ्यमानोऽपि यदेकां अपि कामिनीं न परिणयसि तत् ज्ञातं गृहभार-कातरतया, तन्निर्वाहाभावेन च उद्यमं मुक्त्वा स्थितोऽसि। परं त्वं यदि निर्वाहं कर्तुं न शक्तः तथापि तव भ्राता श्रीकृष्णः त्रिखण्डभोक्ता समर्थोऽस्ति, यथा द्वात्रिंशत्सहस्रस्त्रीणां निर्वाहं करोति, तथा तव स्त्रिया अपि निर्वाहं करिष्यति।" तदा नेमेः किंचित् मुखे हास्यं समागतं। तदा सर्वाभिर्गोपीभिः हस्ते तालीं दत्त्वा, भणितं "मानितो मानितो देवरेण विवाहः।" नेमिः निःस्पृहोऽपि दाक्षिण्येन मातृपितृप्रमुखाणां हर्षभङ्गभयेन च मौन-मेव आश्रितः। ततः शिवादेवीप्रेरितैः श्रीकृष्णसमुद्रविजयप्रमुखभूपैः श्रीउग्रसेनगृहे राजीमती कन्या मार्गिता सहर्षं दत्ता च। अथ विवाहसामग्र्यां उभयत्र स्थाने जायमानायां सत्यां लग्नदिने श्रीनेमिः परिणयनार्थं अचा-लीत्। अथ श्रीनेमिः कीदृशः?। हस्तिस्कन्धारूढः, चामरैर्वीज्यमानो, धृतमस्तकछत्रः, आकाशे देवीभिः, धरित्र्यां च सधवस्त्रीभिः गीयमानगुणग्रामः स्वभगिन्या उत्तार्यमाणलवणः समुद्रविजयादिभिः अनेकाभिर्यादवकुल-

कोटीभिः समनुगम्यमानः अनेकवाद्यनिर्घोषेषु जायमानेषु अनेकनरनारीभिः सहर्षं वीक्ष्यमाणो गतः श्रीनेमिः श्रीउग्रसेनराजधवलमन्दिरसमीपे। पृष्टः श्रीनेमिना सारथिः–"भोः कस्येदं धवलमन्दिरं ?।" सारथिना प्रोक्तं–"तव श्वशुरस्य–श्रीउग्रसेनराजस्य।" तस्मिन् समये गवाक्षस्थया राजीमत्या सखी पृष्टा–"हे सखि! क्व मे प्राणपतिर्नेमिः?" तदा तादृश्या महत्या विभूत्या आगच्छन् नेमिः सख्या दर्शितः, राजीमत्या विचारितं–"एतादृशं मम महद् भाग्यं वर्तते, यत् नेमिः मां परिणयति?" तस्मिन् क्षणे राजीमत्या दक्षिणाङ्गानि स्फुरितानि, जाता व्यग्रा। सख्या प्रोक्तं–"हे सखि! कथं हर्षस्थाने विषादः?।" तदा राजीमती प्राह–"हे सखि! अङ्गिताकारैर्ज्ञायते, मम विघ्नं भवति।" सख्या प्रोक्तं–"मा अमङ्गलं वद, तोरणागमने कः सन्देहः?।" तस्मिन् प्रस्तावे श्रीनेमिना पशुपाटको दृष्टः, तत्र तत्र के के जीवाः क्षिप्ताः सन्ति। तथाहि–अज–एडक–गड्डुरक–महिष–शशक–सूकर–शम्बर–हरिण–रोझ–रींछ–प्रमुखाश्चतुष्पादाः। पुनः तित्तिर–मोर–बगला–सूयटा–हंस–सारस–सारिका–नील–चाष–चकोर–चक्रवाक–क्रौञ्च–ढींक–पारेवा–लावक–चिडकला–होला–प्रमुखाश्च पक्षिणः सर्वेऽपि संकीर्णस्थाने एकत्र कृताः सन्ति। केचित् विरहिणः, केचित् क्षुधार्ताः, केऽपि तृषापीडिताः, महादुःखिनः आर्तस्वरं कुर्वन्तः तिष्ठन्ति। श्रीनेमिस्तान् तथाविधान् दृष्ट्वा सारथिं प्राह–"भोः किमेतत्? ।" सारथिना प्रोक्तं–"हे स्वामिन्! तव श्वशुरेण–श्रीउग्रसेनेन तव गौरवनिमित्तं रक्षिताः सन्ति, तव गौरवकर्तव्यं एतैः मारितैः भावि।" श्रीनेमिः चेतसि अचिन्तयत्–"अहह अहो! इदं श्रोतुमपि अशक्यं!, परं जीवप्राणापहारेण निजोत्सवकरणं नरक-

गौरवर्णे तु गौरत्वं अपगुणाय भवेत्, यथा–क्षीरं लवणं च अग्नौ दह्यते, हिमं च गलति तापेन, अतिगौरः कुष्ठी प्रोच्यते, गोधूमादिचूर्णं स्त्रीहस्तमर्दनं सहते।" ततो राजीमती प्राह–"हे सख्यः! नेदं वचनं श्राव्यं, अस्मिन् भवे नेमिरेव प्रियो, यदि तेन न परिणीता–हस्तेन हस्तो न गृहीतः, तदा तस्य हस्तं अहं मम मस्तके दापयिष्यामि दीक्षाग्रहणात्।" सख्यः प्राहुः–"हे राजीमति! साधु साधु त्वया प्रोक्तं, सुलब्धं तव जन्म! यस्या ईदृशं शीलं त्रिभुवनराज्यादपि दुर्लभं।" पुनरपि राजीमत्या श्रीगिरिनारगिरेः उपालम्भः प्रागपि कथापितः–"हे गिरिनारगिरे! त्वया नेमेः तत्राऽऽगतस्य स्थानं न दातव्यं, यथा तेन राज्यलक्ष्मीः त्यक्ता अहं च त्यक्ता तथा त्वामपि त्यक्त्वा यास्यति, अयं त्यजनस्वभावोऽस्ति, तवाऽपि न चिरस्थायी भावी।" तदा गिरिनारेणापि राजीमत्याः प्रत्युत्तरं दत्तं–"हे राजीमति! यदि मां त्यक्ष्यति तदा त्यजतु, परं तदीयस्थित्या, मम तु तीर्थत्वभवनेन महिमा भविष्यति, अथ च त्वमपि अत्रैव आगमिष्यसि।" इत्यादि कविघटना। अथ राजीमती सुखेन शीलं पालयन्ती पितृगृहे तिष्ठति ॥

अथ भगवतो दीक्षा–कल्याणकं प्राह—

**अरहा अरिट्ठनेमी दक्खे जाव तिण्णि वाससयाइं कुमारे अगारवासमज्झे वसित्ता णं पुणरवि लोगंतिएहिं जीअकप्पिएहिं देवेहिं तं चेव सव्वं भाणियव्वं, जाव दाणं दाइयाणं परिभाइत्ता ॥१७२॥**

जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स छट्ठीपक्खे णं पुव्वण्हकालसमयंसि उत्तरकुराए सीयाए सदेवमणुआसुराए परिसाए अणुगम्ममाणमग्गे जाव बारवईए नयरीए मज्झंमज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव रेवयए उज्जाणे तेणेव उवागच्छइ, उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुयइ, सयमेव पंचमुट्ठियं लोयं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं चित्तानक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय एगेणं पुरिससहस्सेणं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ १७३ ॥

अर्थलापनिका–"अरहा अरिट्ठनेमी" अर्हन् अरिष्टनेमिः त्रीणि वर्षशतानि कुमारः सन् गृहवासे उषित्वा, पुनरपि लोकान्तिकदेवैः प्रतिबोधितः संवत्सरदानं दत्त्वा, वर्षाकालस्य प्रथमे मासे द्वितीये पक्षे एतावता, श्रावणसुदिषष्ठीदिवसे प्रभातकाले उत्तरकुरानामशिबिकां आरुह्य, देवैर्मनुजैश्च समनुगम्यमानमार्गः द्वारकानगरीमध्ये भूत्वा यत्र रैवतं नाम उद्यानं तत्र गत्वा, अशोकवृक्षस्य अधस्तात् शिबिकात उत्तीर्य, स्वयमेव आभरणालङ्कारान् मुक्त्वा, स्वयमेव पञ्चमौष्टिकं लोचं कृत्वा, षष्ठेन तपसा अपानकेन चित्रानामनक्षत्रे चन्द्रेण समं

गौरवर्णे तु गौरत्वं अपगुणाय भवेत्, यथा-क्षीरं लवणं च अग्नौ दह्यते, हिमं च गलति तापेन, अतिगौरः कुष्ठी प्रोच्यते, गोधूमादिचूर्णं स्त्रीहस्तमर्दनं सहते।" ततो राजीमती प्राह-"हे सख्यः! नेदं वचनं श्राव्यं, अस्मिन् भवे नेमिरेव प्रियो, यदि तेन न परिणीता-हस्तेन हस्तो न गृहीतः, तदा तस्य हस्तं अहं मम मस्तके दापयिष्यामि दीक्षाग्रहणात्।" सख्यः प्राहुः-"हे राजीमति! साधु साधु त्वया प्रोक्तं, सुलब्धं तव जन्म! यस्या ईदृशं शीलं त्रिभुवनराज्यादपि दुर्लभं।" पुनरपि राजीमत्या श्रीगिरिनारगिरेः उपालम्भः प्रागपि कथापितः-"हे गिरिनारगिरे! त्वया नेमेः तत्राऽगतस्य स्थानं न दातव्यं, यथा तेन राज्यलक्ष्मीः त्यक्ता अहं च त्यक्ता तथा त्वामपि त्यक्त्वा यास्यति, अयं त्यजनस्वभावोऽस्ति, तवाऽपि न चिरस्थायी भावी।" तदा गिरिनारेणापि राजीमत्याः प्रत्युत्तरं दत्तं-"हे राजीमति! यदि मां त्यक्ष्यति तदा त्यजतु, परं तदीयस्थित्या, मम तु तीर्थत्वभवनेन महिमा भविष्यति, अथ च त्वमपि अत्रैव आगमिष्यसि।" इत्यादि कविघटना। अथ राजीमती सुखेन शीलं पालयन्ती पितृगृहे तिष्ठति॥

अथ भगवतो दीक्षा-कल्याणकं प्राह—

**अरहा अरिट्ठनेमी दक्खे जाव तिण्णि वाससयाइं कुमारे अगारवासमज्झे वसित्ता णं पुणरवि लोगंतिएहिं जीअकप्पिएहिं देवेहिं तं चेव सव्वं भाणियव्वं, जाव दाणं दाइयाणं परिभाइत्ता॥१७२॥**

अथ भगवतः परिवार-सङ्ख्यां आह—

अरहओ णं अरिट्ठनेमिस्स अट्ठारस गणा अट्ठारस गणहरा हुत्था ॥ १७५ ॥ अरहओ णं अरिट्ठनेमिस्स वरदत्तपामुक्खाओ अट्ठारस समणसाहस्सीओ उक्कोसिया समणसंपया हुत्था ॥ १७६ ॥ अरहओ णं अरिट्ठनेमिस्स अज्जजक्खिणीपामुक्खाओ चत्तालीसं अज्जियासाहस्सीओ उक्कोसिया अज्जियासंपया हुत्था ॥ १७७ ॥ अरहओ णं अरिट्ठनेमिस्स नंदपामुक्खाणं समणोवासगाणं एगा सयसाहस्सीओ अउणत्तरिं च सहस्सा उक्कोसिया समणोवासगाणं संपया हुत्था ॥ १७८ ॥ अरहओ णं अरिट्ठनेमिस्स महासुव्वयापामुक्खाणं समणोवासिगाणं तिण्णि सयसाहस्सीओ छत्तीसं च सहस्सा उक्कोसिआ समणोवासिआणं संपया हुत्था ॥ १७९ ॥ अरहओ णं अरिट्ठनेमिस्स चत्तारि सया चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खर-सन्निवाईणं जिणो विव अवितहं वागरमाणाणं उक्कोसिआ चउद्दसपुव्वीणं संपया हुत्था ॥ १८० ॥ पन्नरस सया ओहिनाणीणं, पन्नरस सया केवलनाणीणं पन्नरस

सया वेउव्विआणं, दस सया विउलमईणं, अट्ठ सया वाइणं, सोलस सया अणुत्तरोववाइआणं, पन्नरस समणसया सिद्धा, तीसं अज्जियासयाइं सिद्धाइं ॥ १८१ ॥ अरहओ णं अरिट्ठनेमिस्स दुविहा अंतगडभूमी हुत्था, तं जहा—जुगंतगडभूमी परियायंतगडभूमी य जाव अट्ठमाओ पुरिसजुगाओ जुगंतगडभूमी, दुवासपरिआए अंतमकासी ॥ १८२ ॥

अर्थलेशो यथा—"अरहओ णं अरिट्ठनेमिस्स" श्रीनेमिनाथस्य अष्टादश गणा अभूवन् १, एवं अष्टादश गणधराः २, पुनः श्रीनेमिनाथस्य वरदत्तप्रमुखा अष्टादशसहस्राः ( १८००० ) साधवोऽभूवन् ३, पुनः श्रीनेमिनाथस्य आर्ययक्षिणीप्रमुखाः चत्वारिंशत् सहस्राः ( ४०००० ) उत्कृष्टतरसाध्व्योऽभूवन् ४, पुनः श्रीनेमिनाथस्य नन्दप्रमुखा एकं लक्षं एकोनसप्ततिश्च सहस्राः ( १,६९००० ) श्रावकाः ५, पुनः श्रीनेमिनाथस्य महासुव्रताप्रमुखाः त्रीणि लक्षाणि षट्त्रिंशत् सहस्राः ( ३,३६००० ) श्राविकाः अभूवन् ६, पुनः श्रीनेमिनाथस्य चत्वारि शतानि ( ४०० ) चतुर्दशपूर्वधराः अभूवन् ७, पुनः श्रीनेमिनाथस्य पञ्चदशशतानि ( १५०० ) अवधिज्ञानिनः ८, पुनः श्रीनेमिनाथस्य पञ्चदशशतानि ( १५०० ) केवलिनः ९, पुनः नेमिनाथस्य पञ्चदशशतानि ( १५०० ) वैक्रियलब्धिधराः १०, पुनः श्रीनेमिनाथस्य दशशतानि ( १००० ) विपुलमतिधराः ११, पुनः श्रीनेमिनाथस्य अष्टशतानि ( ८०० ) वादिनः साधवः १२, पुनः श्रीनेमिनाथस्य षोडशशतानि ( १६०० ) अनुत्तरोपपातिनो देवाः जाताः १३, पुनः

श्रीनेमिनाथस्य पञ्चदशशतानि (१५००) श्रमणाः सिद्धाः १४, पुनः श्रीनेमिनाथस्य त्रिंशच्छतानि (३००) साध्व्यः सिद्धाः १५। पुनः श्रीनेमिनाथस्य द्विविधा अन्तकृतां भूमिः स्थानं, तत्र श्रीनेमितोऽष्टपुरुषयुगानि यावन्मोक्ष-मार्गः प्रवृत्तः, स युगन्तगडभूमिः १, अथ श्रीनेमिनाथस्य केवलज्ञानोत्पत्तेः अनन्तरं द्वादशवर्षैः मोक्षमार्गो व्यूढः, स पर्यायान्तकृद्भूमिः २, श्रीभगवतः केवलज्ञानोत्पत्त्यनन्तरं राजीमती भगवतः समीपे गत्वा दीक्षां जग्राह। तदा भगवद्वन्दनागतेन श्रीकृष्णेन राजीमत्याः स्नेहकारणं पृष्टं, श्रीनेमिः नवभवान् प्राह–"प्रथमे भवे धनपतिनामा राजा, तदा धनवतीनाम्नी भार्याऽभूत् १, ततो द्वितीये भवे सौधर्मे प्रथमदेवलोके मित्रत्वेन देवौ जातौ २, तृतीये भवे चित्रगतिनामा विद्याधरो जातः, तस्य भार्या रत्नवती विद्याधरी ३, चतुर्थे भवे पञ्चमब्रह्मदेवलोके मित्रत्वेन देवौ जातौ ४, पञ्चमे भवे अपराजितनामा राजा जातः, तस्य भार्या प्रियमती ५, षष्ठे भवे एकादशे आरणनामदेवलोके मित्रत्वेन देवौ जातौ ६, सप्तमे भवे शङ्खनामा राजा जातः, तस्य भार्या यशोमती ७, अष्टमे भवे मित्रत्वेन देवौ जातौ ८, नवमे भवे श्रीनेमिः राजीमती च ९, इति नवभवेषु स्नेहयत्त्वं। एकदा रथनेमिः चारित्रं लात्वा, जिनं नत्वा व्रजन् मेघवृष्ट्या बाधितो गुहायां प्रविष्टः, राजीमत्यपि अजानाना तत्र प्रविष्टा, कामातुरो रथनेमिः राजीमत्या प्रतिबोधितो मोक्षं गतः। राजीमत्यपि चत्वारि वर्ष-शतानि (४००) गृहवासे स्थित्वा, वर्षमेकं छद्मस्थावस्थायां स्थित्वा, पञ्चवर्षशतानि (५००) केवलज्ञानं प्रति-पाल्य, नववर्षशतानि वर्षमेकं च सर्वमायुः पालयित्वा, नेमेः पूर्वं मोक्षं गता।" नेमेः पूर्वं कथं मोक्षं गता ?।

तत्र कविघटना—राजीमत्या ज्ञातं—"यो नेमिः दिव्यरूपां मां त्यक्त्वा मुक्तिं गन्तुमिच्छति, सा मम सपत्नी मुक्ति कीदृशी वर्तते तां विलोकयामीति।" ननु—राजीमती कियता कालेन नेमेः पूर्वं मोक्षं गता?। तत्रोच्यते—"नेमेर्वर्षशतेनाग्रे, ययौ राजीमती शिवम्।" इति श्रीतिलकाचार्यकृतदशवैकालिकटीकावचनात्। नेमिनिर्वाणात् वर्षशतमन्तरं नेमेरायुर्वर्षसहस्रं राजीमत्या नवशतानि वर्षाधिकानि शतवर्षेण पूर्वं शिवं गता। ततो राजीमती यदा एकवर्षीया अभूत् तदा नेमेर्जन्म। उत्तराध्ययनकमलसंयमीवृत्तौ तु (३९० पत्रे) एवं प्रोक्तं—"लाल्यमानः पाल्यमानो, धात्रीभिः प्रेमपूर्वकं। प्रभुर्जातोऽष्टवर्षीयान्, वर्धमानः कलाऽऽदिभिः॥ २९॥ तथाऽपराजिताच्युत्वो—ग्रसेननृपतेस्तदा। देवो यशोमतीजीवो, राजीमत्यभवत् सुता॥ ३०॥"

ततो राजीमती नेमेः अष्टवर्षैः लघ्वी। क्वचिद्रासभाषादौ तु अन्यथा दृश्यते। तत्त्वं पुनः केवलिगम्यमिति।

अथ श्रीभगवतो निर्वाणकल्याणकमाह—

तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी तिण्णि वाससयाइं कुमारवासमज्झे वसित्ता चउपन्नं राइंदियाइं छउमत्थपरिआयं पाउणित्ता देसूणाइं सत्त वाससयाइं केवलिपरिआयं पाउणित्ता पडिपुण्णाइं सत्त वाससयाइं सामण्णपरिआयं पाउणित्ता एगं वाससहस्सं सव्वाउअं पालइत्ता खीणे वेयणिज्जाउयनामगुत्ते इमीसे ओसप्पिणीए दुसमसुसमाए समाए बहुविइक्कंताए जे से गिम्हाणं

चउत्थे मासे अट्ठमे पक्खे आसाढसुद्धे तस्स णं आसाढसुद्धस्स अट्ठमीपक्खे णं उप्पिं उज्जिंतसेलसिहरंसि पंचहिं छत्तीसेहिं अणगारसएहिं सद्धिं मासिएणं भत्तेणं अपाणएणं चित्तानक्खत्तेणं जोगमुवागएणं पुव्वरत्तावरत्तकालसमयंसि नेसज्जिए कालगए (८००) जाव सव्वदुक्खप्पहीणे ॥१८३॥

अर्थलापनिका तु एवं–"तेणं कालेणं" तस्मिन् काले तस्मिन् समये श्रीनेमिनाथः त्रीणि वर्षशतानि कुमारवासमध्ये स्थित्वा, चतुःपञ्चाशद्दिनानि छद्मस्थावस्थापर्यायं पालयित्वा देशोनानि चतुःपञ्चाशद्दिनैः ऊनानि सप्त वर्षशतानि केवलिपर्यायं पालयित्वा संपूर्णानि सप्तवर्षशतानि दीक्षां पालयित्वा एकं वर्षसहस्रं सर्वमायुः पालयित्वा क्षीणे वेदनीयादिकर्मचतुष्के अस्यां अवसर्पिण्यां दुःषमसुषमानाम्नि अरे बहुव्यतिक्रान्ते ग्रीष्मकालस्य चतुर्थे मासे अष्टमे पक्षे एतावता, आषाढसुदि अष्टम्यां गिरिनारपर्वतोपरि पञ्चभिः साधुशतैः षट्त्रिंशदधिकैः सार्धं मासिकभक्तेन अपानकेन चित्रानक्षत्रे चंद्रेण समं योगं वर्तमानेऽर्धरात्रिसमये मोक्षं गतः यावत् सर्वदुःखैः प्रक्षीणो जातः।

अथ श्रीनेमिनाथनिर्वाण–पुस्तकारूढसिद्धान्तयोः कियदन्तरं?, तत्राह—

अरहओ णं अरिट्ठनेमिस्स कालगयस्स जाव सव्वदुक्खप्पहीणस्स चउरासीइं वाससहस्साइं विइक्कंताइं, पंचासीइमस्स वाससहस्स नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८४ ॥ २२ ॥

अर्थः—चतुरशीतिवर्षसहस्राणि संपूर्णानि तदुपरि नवशतानि अशीत्यधिकानि (८४९८०) कथं?, इत्याह—श्रीनेमिनिर्वाणात् श्रीपार्श्वनाथः अशीतिवर्षसहस्रैः सार्धसप्तवर्षशतैश्च सिद्धः। अथ च पार्श्वनाथनिर्वाणात् श्रीमहावीरदेवः सार्धाभ्यां द्वाभ्यां शताभ्यां (२५०) सिद्धः। ततो द्वाभ्यां अन्तराभ्यां कृत्वा वर्षसहस्रं जातं। नेमिपार्श्वयोः अन्तरमीलने त्र्यशीतिवर्षसहस्राणि (८३०००) जातानि। ततः परं तु नवशतैः अशीत्यधिकैः (९८०) सिद्धान्तः पुस्तकारूढो जातः॥ इति कृत्वा षष्ठी वाचना संपूर्णा जाता॥

श्रीपार्श्वनाथश्रीनेमिनाथयोः पञ्च पञ्च कल्याणकानि व्याख्यातानि। अथ सप्तमवाचनायां चतुर्विंशतितीर्थङ्कराणां त्रयोविंशतितीर्थङ्कराणां आन्तरालकालाः कथयिष्यन्ते। ततः श्रीआदिनाथस्य पञ्चकल्याणकानि व्याख्यायन्ते स वर्तमानयोगः॥ इति श्रीनेमिनाथचरित्रम्॥

व्याख्यानं कल्पसूत्रस्य, षष्ठं च सुगमं स्फुटम्। शिष्यार्थं पाठकाश्चक्रुः, समयादिमसुन्दराः॥ १॥

इति श्रीकल्पसूत्रस्य षष्ठं व्याख्यानं श्रीसमयसुन्दरोपाध्यायविरचितं सम्पूर्णम्॥

# अथ सप्तमं व्याख्यानम् ॥

तत्र पूर्वं प्रथमवाचनया श्रीपञ्चपरमेष्ठिनमस्कारो व्याख्यातः । पुनः श्रीमहावीरदेवस्य सङ्क्षेपवाचनया पञ्चकल्याणकानि व्याख्यातानि ॥ १ ॥ द्वितीयवाचनया च श्रीमहावीरदेवस्य च्यवनकल्याणकं गर्भापहारकल्याणकं च व्याख्यातं ॥ २ ॥ तृतीयवाचनया चतुर्दशस्वप्ना व्याख्याताः ॥ ३ ॥ चतुर्थवाचनया च श्रीमहावीरदेवस्य जन्मकल्याणकं व्याख्यातं ॥४॥ पञ्चमवाचनया च श्रीमहावीरदेवस्य दीक्षा १ ज्ञान २ निर्वाण ३ कल्याणकत्रयं व्याख्यातं ॥ ५ ॥ षष्ठवाचनया च श्रीपार्श्वनाथनेमिनाथतीर्थङ्करयोः पञ्च पञ्च कल्याणकानि व्याख्यातानि ॥ ६ ॥

अथ सप्तमवाचनायां अन्तराणि श्रीआदिनाथस्य पञ्चकल्याणकानि व्याख्यायन्ते । तत्रापि पूर्वं चतुर्विंशतितीर्थङ्कराणां त्रयोविंशतिः २३ अन्तराणि व्याख्यायन्ते, तत्राह—

नमिस्स णं अरहओ कालगयस्स जाव सव्वदुक्खप्पहीणस्स पंच वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव य वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे

संवच्छरे काले गच्छइ ॥ १८५ ॥ २१ ॥ मुणिसुव्वयस्स णं अरहओ कालगयस्स इक्कारस वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८६ ॥ २० ॥ मल्लिस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स पन्नट्ठिं वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८७ ॥ १९ ॥ अरस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे वासकोडिसहस्से विइक्कंते, सेसं जहा मल्लिस्स, तं च एयं–पंचसट्ठिं लक्खा चउरासीइं सहस्सा विइक्कंता, तंमि समए महावीरो निव्वुओ, तओ परं नव वाससया विइक्कंता दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ । एवं अग्गओ जाव सेयंसो ताव दट्ठव्वं ॥ १८८ ॥ १८ ॥ कुंथुस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे चउभागपलिओवमे विइक्कंते पंचसट्ठिं वाससयसहस्सा, सेसं जहा मल्लिस्स ॥ १८९ ॥ १७ ॥ संतिस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे चउभा-

गूणे पलिओवमे विइक्कंते पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९० ॥ १६ ॥ धम्मस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स तिण्णि सागरोवमाइं विइक्कंताइं पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९१ ॥ १५ ॥ अणंतस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स सत्त सागरोवमाइं विइक्कंताइं पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९२ ॥ १४ ॥ विमलस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स सोलस सागरोवमाइं विइक्कंताइं पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९३ ॥ १३ ॥ वासुपुज्जस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स छायालीसं सागरोवमाइं विइक्कंताइं पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९४ ॥ १२ ॥ सिज्जंसस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे सागरोवमसए विइक्कंते पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९५ ॥ ११ ॥ सीअलस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगा सागरोवमकोडी तिवासअद्धनवमासाहिअबायालीस-वाससहस्सेहिं ऊणिआ विइक्कंता, एयंमि समए वीरो निव्वुओ, तओऽविय णं परं नव वास-सयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १९६ ॥

॥ १० ॥ सुविहिस्स णं अरहओ पुप्फदंतस्स जाव सव्वदुक्खप्पहीणस्स दस सागरोवमकोडीओ विइक्कंताओ, सेसं जहा सीअलस्स, तं च इमं—तिवासअद्धनवमासाहिअबायालीसवाससहस्सेहिं ऊणिआ विइक्कंता इच्चाइ ॥ १९७ ॥ ९ ॥ चंदप्पहस्स णं अरहओ जाव पहीणस्स एगं सागरोवमकोडिसयं विइक्कंतं, सेसं जहा सीअलस्स, तं च इमं—तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं ऊणगमिच्चाइ ॥ १९८ ॥ ८ ॥ सुपासस्स णं अरहओ जाव पहीणस्स एगे सागरोवमकोडिसहस्से विइक्कंते सेसं जहा सीअलस्स, तं च इमं—तिवासअद्धनवमासाहिअबायालीसवाससहस्सेहिं ऊणिआ इच्चाइ ॥ १९९ ॥ ७ ॥ पउमप्पहस्स णं अरहओ जाव पहीणस्स दस सागरोवमकोडिसहस्सा विइक्कंता, तिवासअद्धनवमासाहियबायालीसवासहस्सेहिं इच्चाइयं, सेसं जहा सीअलस्स ॥ २०० ॥ ६ ॥ सुमइस्स णं अरहओ जाव पहीणस्स एगे सागरोवमकोडिसयसहस्से विइक्कंते, सेसं जहा सीअलस्स, तिवासअद्धनवमासाहियबायालीसवासहस्सेहिं इच्चाइयं ॥ २०१ ॥ ५ ॥ अभिनंदणस्स णं अरहओ जाव

पहीणस्स दस सागरोवमकोडिसयसहस्सा विइक्कंता, सेसं जहा सीअलस्स तिवासअद्धनवमासाहियवायालीसवाससहस्सेहिं इच्चाइयं ॥ २०२ ॥ ४ ॥ संभवस्स णं अरहओ जाव पहीणस्स वीसं सागरोवमकोडिसयसहस्सा विइक्कंता, सेसं जहा सीअलस्स, तिवासअद्धनवमासाहियवायालीसवाससहस्सेहिं इच्चाइयं ॥ २०३ ॥ ३ ॥ अजियस्स णं अरहओ जाव पहीणस्स पन्नासं सागरोवमकोडिसयसहस्सा विइक्कंता, सेसं जहा सीअलस्स, तं च इमं—तिवासअद्धनवमासाहियवायालीसवाससहस्सेहिं इच्चाइयं ॥ २०४ ॥ २ ॥ ॥ इति अन्तराणि ॥



## सुखावबोधाय परस्परं श्रीतीर्थंकराणाम् अन्तरसूचकः पटः ॥

**अर्थो यथा—२३ श्रीपार्श्वतीर्थङ्कर-श्रीमहावीरयोः अन्तरं सार्धे द्वे शते वर्षाणां, ततः परं (९८०) वर्षैः सिद्धान्तः पुस्तकारूढो जातः ॥ १ ॥**

*श्रीपार्श्वनाथस्वामिके निर्वाण वाद दोसौ पचास २५० वर्षे श्रीवीरप्रभुका निर्वाण हुआ, उसके वाद नवसौ अस्सी ९८० वर्षे सिद्धान्त लिखे गये ॥ १ ॥*

**२२ श्रीनेमिनाथतीर्थङ्कर-श्रीमहावीरयोः अन्तरं चतुरशीतिसहस्र(८४०००) वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ २ ॥**

*श्रीनेमिनाथजीके और श्रीमहावीरस्वामिके ८४००० चौरासी हजार वर्षका अन्तर है, उसके वाद नवसौ अस्सी ९८० वर्षे सिद्धान्त लिखे गये ॥ २ ॥*

**२१ श्रीनमिनाथतीर्थङ्कर-श्रीमहावीरयोः अन्तरं पञ्चलक्षाः चतुरशीतिसहस्राश्च (५,८४०००) वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ ३ ॥**

*श्रीनमिनाथजीके और श्रीमहावीरस्वामिके पांच लाख चौरासी हजार ५८४००० वर्षका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ ३ ॥*

**२० श्रीमुनिसुव्रततीर्थङ्कर-श्रीमहावीरयोः अन्तरं एकादशलक्षाः चतुरशीतिसहस्राश्च (११,८४०००) ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ ४ ॥**

*श्रीमुनिसुव्रतस्वामिके और श्रीमहावीरस्वामिके ११ लाख ८४ हजार वर्षका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ ४ ॥*

१९ श्रीमल्लिनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं पञ्चषष्टिलक्षाः चतुरशीतिसहस्राश्च (६५,८४०००) वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ ५ ॥

श्रीमल्लिनाथजीके और श्रीमहावीरस्वामिके ६५ लाख ८४ हजार वर्षका अन्तर है, उसके बाद ९८० वर्ष सिद्धान्त लिखे गये ॥ ५ ॥

---

१८ श्रीअरनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं एकसहस्रकोटिः पञ्चषष्टिलक्षाः (६५) चतुरशीतिसहस्राश्च वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥६॥

श्रीअरनाथजीके और श्रीमहावीरस्वामिके एक हजार क्रोड ६५ लाख ८४ हजार वर्षका अन्तर है, उसके बाद ९८० वर्ष सिद्धान्त लिखे गये ॥ ६ ॥

१७ श्रीकुन्थुनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं पल्योपमस्य एकः चतुर्थो भागः पञ्चषष्टिलक्षाः चतुरशीतिसहस्राश्च वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ ७ ॥

श्रीकुन्थुनाथजीके और श्रीमहावीरस्वामिके एक पल्योपमका चौथा भाग ६५ लाख ८४ हजार वर्षका अंतर है, उसके बाद ९८० वर्ष सिद्धान्त लिखे गये ॥ ७ ॥

---

१६ श्रीशान्तिनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं पादोनं पल्योपमं पञ्चषष्टिलक्षाः चतुरशीतिसहस्राश्च वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ ८ ॥

श्रीशान्तिनाथजीके और श्रीमहावीरस्वामिके पौना पल्योपम ६५ लाख ८४ हजार वर्षका अन्तर है, उसके बाद ९८० वर्ष सिद्धान्त लिखे गये ॥ ८ ॥

१५ श्रीधर्मनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं त्रीणि सागरोपमाणि पञ्चषष्टिलक्षाः चतुरशीतिसहस्राश्च वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥९॥

श्रीधर्मनाथजीके और श्रीमहावीरस्वामिके ३ सागरोपम ६५ लाख ८४ हजार वर्षका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ ९ ॥

१४ श्रीअनन्तनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं सप्तसागरोपमाणि पञ्चषष्टिलक्षाः चतुरशीतिसहस्राश्च वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ १० ॥

श्रीअनन्तनाथजीके और श्रीमहावीरस्वामिके ७ सागरोपम ६५ लाख ८४ हजार वर्षका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ १० ॥

१३ श्रीविमलनाथतीर्थङ्कर–श्रीमहावीरदेवयोः अन्तरं षोडश (१६) सागरोपमाणि पञ्चषष्टिलक्षाः चतुरशीतिसहस्राश्च ६५,८४००० वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ ११ ॥

श्रीविमलनाथजीके और श्रीमहावीरस्वामिके १६ सागरोपम ६५ लाख ८४ हजार वर्षका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ ११ ॥

१२ श्रीवासुपूज्यतीर्थङ्कर–श्रीमहावीरयोः अन्तरं षट्चत्वारिंशत् (४६) सागरोपमाणि पञ्चषष्टिलक्षाः चतुरशीतिसहस्राश्च वर्षाणि, ततः (९८०) वर्षैः पुस्तकारूढः ॥ १२ ॥

श्रीवासुपूज्यजीके और श्रीमहावीरस्वामिके ४६ सागरोपम ६५ लाख ८४ हजार वर्षका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ १२ ॥

११ श्रीश्रेयांसतीर्थङ्कर–श्रीमहावीरयोः अन्तरं एकं सागरोपमं शतं पञ्चषष्टिलक्षाः (६५) चतुरशीतिसहस्राश्च वर्षाणि, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥१३॥

श्रीश्रेयांसनाथजीके और श्रीमहावीरस्वामिके एकसौ १०० सागरोपम ६५ लाख ८४ हजार वर्षका अन्तर है, उसके वाद ९८० वर्षों सिद्धान्त लिखे गये ॥ १३ ॥

---

१० श्रीशीतलनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं एका सागरोपमकोटी । परं सा कीदृशी ? । द्विचत्वारिंशत्सहस्रैः त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊना, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ १४ ॥

श्रीशीतलनाथजीके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून एक क्रोड सागरोपमका अन्तर है, उसके वाद ९८० वर्षों सिद्धान्त लिखे गये ॥ १४ ॥

९ श्रीसुविधिनाथतीर्थङ्करः–श्रीमहावीरयोः अन्तरं दश सागरोपमकोट्यः । परं ताः कीदृश्यः ? । द्विचत्वारिंशत्सहस्रैः त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनाः, ततः परं ९८० वर्षैः पुस्तकारूढः ॥ १५ ॥

सुविधिनाथजीके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून दश कोटि सागरोपमका अन्तर है, उसके वाद ९८० वर्ष सिद्धान्त लिखे गये ॥१५ ॥

---

८ श्रीचन्द्रप्रभस्वामितीर्थङ्कर–श्रीमहावीरयोः अन्तरं एकं सागरोपमकोटीशतं । परं कीदृशं तत् ? । द्विचत्वारिंशत्साहस्रैः त्रिभिः वर्षैः सार्धाष्टमासैश्च ऊनं ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ १६ ॥

श्रीचन्द्रप्रभस्वामिके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून एकसो क्रोड सागरोपमका अन्तर है, उसके वाद ९८० वर्ष सिद्धान्त लिखे गये ॥ १६ ॥

७ श्रीसुपार्श्वतीर्थङ्कर–श्रीमहावीरयोः अन्तरं एकं सागरोपमकोटिसहस्रं । परं तत् कीदृशं ? । द्विचत्वारिंशत्सहस्रैः त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनं, ततः परं ( ९८० ) वर्षैः पुस्तकारूढः ॥ १७ ॥

श्रीसुपार्श्वनाथजीके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून एक हजार क्रोड सागरोपमका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ १७ ॥

६ श्रीपद्मप्रभतीर्थङ्कर–श्रीमहावीरयोः अन्तरं दशसागरोपमकोटिसहस्राः । परं कीदृशाः ? । द्विचत्वारिंशत्सहस्रैः त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनाः, ततः परं ( ९८० ) वर्षैः पुस्तकारूढः ॥ १८ ॥

श्रीपद्मप्रभस्वामिके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून दश हजार क्रोड सागरोपमका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ १८ ॥

५ श्रीसुमतिनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं एकं सागरोपमकोटिलक्षं । परं तत् कीदृशं ? । द्विचत्वारिंशत्सहस्रैः त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनं, ततः परं ( ९८० ) वर्षैः पुस्तकारूढः ॥ १९ ॥

श्रीसुमतिनाथजीके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून एक लाख क्रोड सागरोपमका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ १९ ॥

४ श्रीअभिनन्दनतीर्थङ्कर–श्रीमहावीरयोः अन्तरं दशसागरोपमकोटिलक्षाः। परं कीदृशाः ? । द्विचत्वारिंशत्सहस्रैः त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनाः, ततः परं ( ९८० ) वर्षैः पुस्तकारूढः ॥ २० ॥

श्रीअभिनन्दनजीके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून दश लाख क्रोड सागरोपमका अन्तर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ २० ॥

३ श्रीसंभवनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं त्रिंशत्सागरोपमकोटिलक्षाः। परं कीदृशाः?। द्विचत्वारिंशत्सहस्रैः त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनाः, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ २१ ॥

श्रीसंभवनाथजीके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून तीस लाख क्रोड सागरोपमका अन्तर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ २१ ॥

२ श्रीअजितनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं पञ्चाशत्सागरोपमकोटिलक्षाः। परं कीदृशाः?। द्विचत्वारिंशत्सहस्रैः त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनाः, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ २२ ॥

श्री अजितनाथजीके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून ५० लाख क्रोड सागरोपमका अन्तर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ २२ ॥

१ श्रीआदिनाथतीर्थङ्कर–श्रीमहावीरयोः अन्तरं एका सागरोपमकोटाकोटिः। परं कीदृशी?। द्विचत्वारिंशत्सहस्रैः त्रिभिः वर्षैः सार्धाष्टमासैश्च ऊना, ततः परं (९८०) वर्षैः पुस्तकारूढः ॥ २३ ॥

॥ इति चतुर्विंशतितीर्थङ्कराणां त्रयोविंशत्यन्तराणि ॥

श्रीआदिनाथजीके और श्रीमहावीरस्वामिके ४२ हजार ३ वर्ष और ८॥ मास न्यून एक कोटिकोटि सागरोपमका अन्तर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ २३ ॥ ये २४ तीर्थंकरोंके २३ आंतरे ॥

इति तीर्थङ्कराणामन्तराणि ॥

अथ श्रीआदिनाथस्य पञ्चकल्याणकानि कथ्यन्ते। तत्र श्रीआदिनाथस्य त्रयोदश भवाः प्रथमं कथ्यन्ते।

धण १ मिहुण २ सुर ३ महब्बल ४ ललियंग य ५ वयरजंघ ६ मिहुणो अ ७। सोहम्म ८ विज्जू ९ अचू य १० चक्की ११ सव्वट्ठ १२ उसभे अ १३ ॥ १ ॥ जम्बूद्वीपे पश्चिममहाविदेहक्षेत्रे सुप्रतिष्ठितनामनगरे प्रियङ्कर-नामा राजा राज्यं करोति। तत्र नगरे धनसार्थवाहः, स एकदा वसन्तपुरे गमनाय सार्थं मीलयति स्म। तदा श्रीधर्मघोषसूरयोऽपि वसन्तपुरे गन्तुकामा धनसार्थवाहं पृच्छन्ति स्म। धनसार्थवाहेन प्रोक्तं–"आगच्छन्तु।" तस्मिन् प्रस्तावे केनचित् आम्रफलानि सार्थवाहस्य अग्रे ढौकितानि। ततः तानि धनसार्थवाहेन सूरीणां दातुं प्रारब्धानि। ततो गुरुभिः ४२ द्विचत्वारिंशत् आहारस्य दोषाः प्ररूपिताः। "एतानि सचित्तानि फलानि, ततः साधुभिर्न गृह्यन्ते।" इत्युक्त्वा न गृहीतानि। ततो धर्मघोषसूरयः सार्थेन सह चलिताः। वर्षाकाले वृष्टियोगात् सार्थो मार्गे स्थितः। बहुभिः दिनैः शम्बलं क्षीणं, ततो लोकाः पुष्पफलादिना आजीविकां कुर्वन्ति। श्रीधर्मघोषसूरयस्तु एकान्ते धर्मध्यानं कुर्वन्तः तिष्ठन्ति। ततो बहुवर्षाकाले गते धनसार्थवाहेन पश्चिमरात्रौ साधवः स्मृताः–"अरे! अटव्यां तिष्ठतां बहुदिनानि जातानि, शम्बलं सर्वेषां क्षीणं। ततो न कोऽपि तेषां आहारदाता, न च ते सचित्तं पुष्पफलादि गृह्णन्ति। ततः कथं ते प्राणवृत्तिं कुर्वन्ति?। मया तु सार्थे गृहीताः, परं न तेषां चिन्ता कृता। अथ कथं तेषां मुखं दर्शयामि?।" (इति) लज्जितोऽपि प्रभाते साधूनां वन्दनार्थं गतः। साधुगुणान् दृष्ट्वा, धर्मोपदेशं श्रुत्वा अपराधं क्षामयित्वा, आहारार्थं निमन्त्र्य स्वस्थाने

आनीताः । ततो निर्दोषं घृतं शुद्धभावेन दत्तं । तत् पुण्येन सम्यक्त्वं उपार्जितं, ततः सुखेन सर्वेऽपि वसन्तपुरे प्राप्ताः । धनसार्थवाहोऽपि तत्र नगरे क्रयविक्रयं कृत्वा स्वकीये सुप्रतिष्ठितनगरे आगतः । ततः कियन्तं कालं गृहस्थावासं सुखं भुङ्क्त्वा, प्रान्ते सम्यक्त्वं वान्त्वा भद्रकपरिणामेन मृतः॥ इति प्रथमो भवः ॥ १ ॥ ततः उत्तरकुरुक्षेत्रे युगलिको जातः ॥ इति द्वितीयो भवः ॥ २ ॥ ततः सौधर्मे प्रथमे देवलोके देवो जातः ॥ इति तृतीयो भवः ॥ ३ ॥ ततः च्युत्वा पश्चिममहाविदेहक्षेत्रे गन्धलावतीविजये शतबलनामा राजा, चन्द्रकान्ता भार्या राज्ञी, तयोः पुत्रो महाबलनामा राजा जातः । परं अत्यन्तमहाविषयलोलुपो महाभोगपुरन्दरः विनयवत्यां राज्यां अन्यास्वपि नारीषु अत्यन्तरागवान् धर्मं न करोति । धर्मवार्तामपि न शृणोति । सर्वदा गीतगानतानमाननाटकप्रियः तिष्ठति । महामोहनिद्रया कालं गमयति । एकदा नाटके जायमाने राज्ञः प्रतिबोधाय स्वयंबुद्धनाम्ना मन्त्रिणा प्रोक्तम्—

"सव्वं विलंविअं गीअं, सव्वं नट्टं विडंवणा । सव्वे आभरणा भारा, सव्वे कामा दुहावहा ॥ १ ॥

सर्वं गीतं विलपितं=विलापसदृशं, सर्वं नाटकं विटम्बना, अङ्गोपाङ्गभञ्जनात्, सर्वाणि आभरणानि भारभूतानि, सर्वेऽपि कामा दुःखावहाः ।" राज्ञा श्रुत्वा मन्त्रिणे प्रोक्तं—"भो मन्त्रिन् ! अप्रस्तावे कथं एवं प्रोक्तं ?, कथं रागावसरे विरागः ? ।" ततो मन्त्रिणा प्रोक्तं—"हे राजन् ! मया प्रस्तावसदृशमेव प्रोक्तं, यतः चारणश्रमणद्वयेन ममाग्रे प्रोक्तं—तव स्वामिनो महाबलराजस्य मासमेकं आयुरस्ति ।" ततो भीतेन राज्ञा प्रोक्तं—"भव्यं जातं, सुसोऽहं

त्वया जागरितः। परं अग्नौ लग्ने कथं कूपखननं भविष्यति?।" तदा मन्त्रिणा प्रोक्तं—"मा भयं विषादं च कुरु। एकदिवसपालितमपि व्रतं—चारित्रम् स्वर्गमोक्षदायकं स्यात्।" ततो हर्षितेन राज्ञा पुत्रं राज्ये स्थापयित्वा सप्तक्षेत्रेषु दानं दत्त्वा, अर्हच्चैत्येषु अष्टाहिकामहोत्सवं कृत्वा, सुगुरुसमीपे दीक्षां ललौ। ततो महाबलो राजर्षिः द्वाविंशति (२२) दिनानि दीक्षां पालयित्वा, अनशनं कृत्वा कालं गतः॥ इति चतुर्थो भवः॥ ४॥ ततः ईशाने द्वितीये देवलोके श्रीप्रभविमाने ललिताङ्गनामा सामानिकेन्द्रो देवो जातः। तत्र स्वयम्प्रभानाम्नी देवी तया सह विषयसुखं भुञ्जानः तिष्ठति। एकदा स्वयंप्रभादेवी च्युता, ललिताङ्गदेवो विरहवियोगेन मूर्च्छां प्राप्य रुरोद महता शब्देन। ततः स्वयंबुद्धः पूर्वभवमन्त्री तत्रैव उत्पन्नोऽस्ति। तेन अवधिज्ञानेन स्वामिनः शोकं ज्ञात्वा, पूर्ववत् धर्मोपदेशो दत्तः, परं न लग्नः। ततः प्रोक्तं—"हे स्वामिन्! तव भार्या मया ज्ञातास्ति, तव (यथा) मिलिष्यति तथा करिष्यामि, शोकं मा कुरु। तस्या मिलनोपायो यथा—धातकीखण्डे पूर्वमहाविदेहे क्षेत्रे मङ्गलवतीविजये नन्दिग्रामे नागिलनामा एको गृहस्थो वसति, परं महादरिद्री, तस्य भार्या नागश्रीः, तयोरुपर्युपरि पुत्रीषट्कं जातं। प्रायो दरिद्राणां पुत्र्यो बह्वयो भवन्ति। ततो नागिलेन विचारितं—"पुनरपि पुत्री भविष्यति, तदा मुखं लात्वा गृहं त्यक्त्वा विदेशे यास्यामि।" ततः सप्तमा—अपि पुत्री जाता, ततः उद्विग्नो गतो विदेशे, नागश्रीः दुःखिता जाता। तस्याः पुत्र्याः नाम अपि न दत्तं। ततो लोके नामाभावात् 'निर्नामिका' इति प्रसिद्धा जाता। लोकानां गृहेषु दासीकर्म कृत्वा आजीविकां करोति। अन्यदा धनवतां

व्यवहारिणां बालिकानां हस्ते मोदकान् दत्तान् दृष्ट्वा, अनामिका मातुः पार्श्वे मोदकं याचते स्म। माता प्राह–"तव पिता मोदकान् आनेतुं विदेशे गतोऽस्ति, स यावत् आयाति तावता त्वं अम्बरतिलकनामपर्वतात् काष्ठानि आनय।" ततः सा रज्जुं आदाय अश्रूणि मुञ्चन्ती गता काष्ठग्रहणार्थं पर्वते। तत्र युगन्धरमुनेः केवलज्ञानं उत्पन्नमस्ति, व्यन्तरैर्महिमा प्रारब्धाऽस्ति। साऽपि तं नमस्कर्तुं गता। नत्वा धर्मं च श्रुत्वा गुरुं प्राह–"मम ईदृशी दुःखाऽवस्था कथं?।" गुरुः प्राह–"हे भद्रे! त्वया पूर्वभवे धर्मो न कृतः। धर्मात् एव सुखं प्राप्यते। ततो धर्मं कुरु।" ततः तया सम्यक्त्वं श्रावकव्रतं च गृहीतं, उपाश्रये स्थिता श्रावकधर्मं करोति। लोकाश्च 'धर्मिणी धर्मिणी' इति वदन्ति स्म। ततः सा तपांसि तप्त्वा, युगन्धरगुरोः पार्श्वे अनशनं चकार। ततो हे ललिताङ्ग! त्वं तत्र गत्वा तस्याः स्वकीयं रूपं दर्शय।" ततो मन्त्रिवचनेन तत्र गत्वा, ललिताङ्गेन रूपं दर्शितं। तया च तदीय-रूपमोहितया निदानं कृतं–"मम तपःप्रभावात् ललिताङ्गदेवस्य पत्नी भूयासं" इति। ततोऽनामिका मृत्वा स्वयम्प्रभादेवी जाता। तया समं ललिताङ्गदेवः सुखं भुङ्क्ते स्म ॥ इति पञ्चमो भवः ॥ ५ ॥ ततो ललिताङ्गः ततः च्युत्वा, जम्बूद्वीपे पूर्वमहाविदेहे पुष्कलावतीविजये लोहार्गलपुरे सुवर्णजङ्घो राजा, लक्ष्मी राज्ञी, तयोः पुत्रो वज्रजङ्घनामा जातः। स्वयंप्रभादेवी च तत्रैव विजये पुण्डरीकिण्यां नगर्यां वज्रसेननामा चक्रवर्ती, तस्य पुत्री श्रीमतीनाम्नी जाता। एकदा यौवनावस्थायां चन्द्रशालायां स्थिता सती कस्यचित् साधोः केवलज्ञानं उत्पन्नमभूत्, तत् वन्दनार्थं आगच्छतो देवान् दृष्ट्वा जातिस्मरणं ज्ञानं प्राप।

चेतसि विचारितं—"मम भर्ता ललिताङ्गदेवः कुत्र समुत्पन्नोऽस्ति ?, तमेव परिणयामि, तदा भव्यं।" तदा तं अजानती मौनमाश्रित्य स्थिता। अनेके उपचाराः कृताः, परं न जल्पति। ततः एकान्ते धातृमात्रा पृष्टा सती एकं पटं आलिख्य दत्ते स्म। पण्डिता धातृमाता वज्रसेनचक्रवर्तिनो वर्षग्रन्थिमहोत्सवे यत्र अनेके राजकुमाराः समागताः सन्ति, तत्र तं पटं लात्वा, राजमार्गे स्थिता। तत्र अनुक्रमेण समागतो वज्रजङ्घः, तं पटं दृष्ट्वा जातिस्मरणं ज्ञानं प्राप कथयति स्म च—"स्वयम्प्रभया मम पूर्वभवभार्यया इदं पटे चरितं, लिखितमस्ति।" पुनः पण्डिताया अभिज्ञालान्यपि अपूरयत्। ततो धातृमात्रा श्रीमत्यै सर्वं स्वरूपं कथितं श्रीमत्या च स्वपित्रे प्रोक्तं—"एष मे पूर्वभवपतिः।" ततो वज्रसेनचक्रवर्तिना तं वज्रजङ्घं आकार्य, श्रीमती परिणायिता। ततः कियन्ति दिनानि स्थित्वा, श्रीमतीं लात्वा वज्रजङ्घः स्वकीयनगरे समेतः। ततः स्वर्णजङ्घो राजापि वज्रजङ्घं पुत्रं राज्ये स्थापयित्वा स्वयं दीक्षां जग्राह। अथ वज्रजङ्घो राजा श्रीमत्या सह चिरकालं सुखं भुञ्जानो रात्रौ सुप्तः सन् एवं चिन्तयति—"प्रभाते पुत्रस्य राज्यं दत्त्वा अहं दीक्षां ग्रहीष्यामि।" तस्यां रात्रौ राज्यग्रहणाय उत्सुकेन पुत्रेण विषधूमप्रयोगेण मातापितरौ मारितौ॥ इति षष्ठो भवः॥ ६॥ ततः तौ मृत्वा उत्तरकुरुक्षेत्रे युगलिनौ जातौ॥ इति सप्तमो भवः॥ ७॥ ततः सौधर्मे प्रथमे देवलोके मित्ररूपौ देवौ जातौ॥ इति अष्टमो भवः॥ ८॥ ततः च्युत्वा वज्रजङ्घो जम्बूद्वीपे महाविदेहक्षेत्रे क्षितिप्रतिष्ठितनामनगरे सुविधेः—वैद्यस्य आनन्दनामा पुत्रो जातः। तस्मिन्नेव दिने तत्र नगरे अन्ये चत्वारः पुत्रा जाताः।

नगाहि-प्रसन्नचन्द्रस्य राज्ञो महीधरः पुत्रो जातः १, सुनासीरनाममन्त्रिणः सुबुद्धिनामा पुत्रो जातः २, धन-
नामश्रेष्ठिनो गुणाकरनामा पुत्रो जातः ३, सागरनामसार्थवाहस्य पूर्णभद्रः पुत्रो जातः ४, अथ श्रीमतीजी-
वोऽपि सौधर्मदेवलोकात् च्युत्वा ईश्वरदत्तनामश्रेष्ठिनः केशवनामा पुत्रो जातः ५। एवं ते पञ्चापि आनन्दस्य
श्रीआदीश्वरजीवस्य परममित्राणि। ते षडपि सहभोजिनः सहचारिणः सहरममाणाः सुखेन कालं गम-
यन्ति। अन्यदा वैद्यपुत्रस्य आनन्दस्य गृहे एकः साधुः समागतः। परः कीदृशः?। कुष्ठीकृमिसमाकुल-
कायः। ततो राजपुत्रेण प्रोक्तं-"भो वैद्य! तव औषधज्ञानमस्ति, परं कृपा नास्ति। यत् ईदृशस्य साधोः
चिकित्सां न करोषि। ततो वैद्यपुत्रेण प्रोक्तं-"एकं तैलं मम अस्ति, परं गोशीर्षचन्दनं रत्नकम्बलं च नास्ति।
ततः तैः पञ्चभिः मित्रैः द्रव्यं मेलयित्वा हट्टे गत्वा वृद्धवणिजस्य प्रोक्तं-"भो! गृहाण इदं द्रव्यं, देहि
गोशीर्षचन्दनं रत्नकम्बलं च।" ततो वणिजेन प्रोक्तं-"किं युष्माकं कार्यमस्ति?।" तैः प्रोक्तं-"साधुरेकः
कुष्ठरोगपीडितो वर्तते, तस्य प्रतिचर्यां करिष्यामः। ततो वृद्धो वणिजो धन्या एते युवानो येषां ईदृशी धर्म-
वाञ्छा इति प्रतिबुद्धः सन् गोशीर्षचन्दनं रत्नकम्बलं च तेभ्यो धर्मार्थं दत्त्वा, स्वयं दीक्षां लात्वा प्रतिपाल्य
च मोक्षं गतः। ततः ते षडपि मित्राणि औषधसामग्रीं लात्वा मुनेः अनुज्ञां लात्वा चिकित्सां कर्तुं लग्नाः।
नगाहि-पूर्वं तैलेन सर्वस्मिन् अङ्गे अभ्यङ्गं चक्रुः। तस्य प्रभावेण साधुः अचेतनो जातः, कृमयश्च जीवा
आकुलव्याकुलाः सन्तो बहिर्निर्गताः। ततो आनन्दो वैद्यो रत्नकम्बलेन साधुशरीरं आवृणोति स्म। ततः

सर्वेऽपि कृमयः शीतलत्वात् रत्नकम्बले लग्नाः । ततः तान् वैद्यो गोकलेवरे अक्षिपत् । ततः साधुं आश्वास्य गोशीर्षचन्दनेन देहं लिम्पन्ति स्म । प्रथमे अभ्यङ्गे त्वग्गता जीवा निर्गताः, द्वितीये अभ्यङ्गे मांसस्थाः, तृतीये अभ्यङ्गे अस्थिस्थाः कृमयो निर्गताः । ततः संरोहिण्या औषध्या साधुं सज्जं चकार, जातः साधोः समाधिः, उपार्जितं महापुण्यं, षड्भिरपि रत्नकम्बलगोशीर्षचन्दनयोः विक्रयेण चैत्यं कारितं । ततः साधुसमीपे षड्भिरपि मित्रैर्दीक्षा गृहीता । चारित्रं प्रतिपाल्य जन्म सफलं चक्रुस्ते ॥ इति नवमो भवः ॥ ९ ॥ ततस्ते कालं कृत्वा षडपि द्वादशे अच्युतदेवलोके देवा जाताः ॥ इति दशमो भवः ॥ १० ॥ ततो देवलोकात् च्युत्वा, जम्बूद्वीपे महाविदेहक्षेत्रे पुष्कलावतीविजये पुण्डरीकिण्यां नगर्यां तीर्थङ्करो वज्रसेनो राजा, धारिणी राज्ञी, तयोः पश्च-पुत्राः जाताः । तत्र वैद्यजीव आनन्दो वज्रनाभनामा चक्रवर्ती जातः १, राजपुत्रो महीधरजीवो बाहुनामा जातः २, मन्त्रिपुत्रः सुबुद्धिजीवः सुबाहुनामा जातः ३, श्रेष्ठिपुत्रो गुणाकरजीवः पीठनामा जातः ४, सागरसार्थवाहपुत्रः पूर्णभद्रजीवो महापीठो नामा जातः ५, षष्ठः केशवश्रीमतीजीवः सुयशोनामा राजपुत्रको जातः ६, स वज्रनाभस्य चक्रवर्तिनः सारथिः जातः, अथ वज्रसेनतीर्थङ्करो वज्रनाभं पुत्रं राज्ये स्थापयित्वा, लोकान्तिकदेवैः प्रतिबोधितः सांवत्सरिकं दानं दत्त्वा, दीक्षां ललौ, वज्रनाभो राजा जातः । चतुरो भ्रातॄन् लोकपालानिव अकरोत्, सुयशोनामानं राजपुत्रकं स्वकीयं सारथिं अकरोत् । श्रीवज्रसेनतीर्थङ्करस्य केवलज्ञानमुत्पन्नं, तदैव वज्रनाभस्य चक्ररत्नं समुत्पन्नं । ततः पूर्वं श्रीभगवन्तं ततः चक्ररत्नं च पूजयित्वा,

सकलां पृथिवीं साधयित्वा स्वनगर्यां समागत्य द्वादशवर्षे राज्याभिषेकं कारयित्वा चक्रवर्ती जातः। अन्यदा वज्रसेनतीर्थङ्करः समवसृतः १। वज्रनाभो धर्मदेशनां श्रुत्वा, चतुर्भिः भ्रातृभिः सारथिना च सह स्वपितुः तीर्थङ्करस्य पार्श्वे दीक्षां जग्राह। वज्रनाभो द्वादशाङ्गीधरो जातः। अपरे एकादशाङ्गधरा जाताः। तत्र बाहुनामा साधुः पञ्चशतसाधूनां भक्तपानानि अपूरयत् १ सुबाहुनामा साधुः सर्वसाधूनां विश्रामणां अकरोत् २ पीठमहापीठसाधू एकान्ते स्वाध्यायं अकुरुतां ३ ततो बाहुं १ सुबाहुं २ च आचार्या लोकाश्च प्रशंसन्ति। धन्यौ एतौ वैयावृत्यं सुदुष्करं कुरुतः। ततः पीठमहापीठयोः अप्रीतिः जाता। आवां स्वाध्यायकारकौ प्रति न कोऽपि प्रशंसति। ततो ज्ञायते 'वल्लभं कर्म न चर्म,' ततो वज्रनाभो राजर्षिः विंशतिस्थानानि संसेव्य, तीर्थङ्करनामगोत्रं कर्म बद्धवान् १, बाहुनामा साधुः चक्रवर्तिश्रियं २, सुबाहुसाधुः बाहुबलं ३, पीठमहापीठसाधू स्त्रीगोत्रकर्म बद्धवन्तौ ५, इति एकादशो भवः॥ ११॥ ततः ते सर्वेऽपि मृत्वा सर्वार्थसिद्धिं गताः॥ इति द्वादशो भवः॥ १२॥ अथ श्रीआवश्यकचूर्णौ एवं प्रोक्तमस्ति–श्रीआदीश्वरजीवो वज्रनाभः सर्वार्थसिद्धिं गतः। ततः पश्चात् षट्पूर्वलक्षा व्यतीताः। ततः पश्चात् बाहु १ सुबाहु २ पीठ ३ महापीठ ४ प्रमुखाः सर्वार्थसिद्धिं गताः। नो चेत् कथं मिलति?। श्रीआदीश्वरस्य षट्पूर्वलक्षा जाताः, ततः पश्चात् बाहु १ सुबाहु २ पीठ ३ महापीठ ४ प्रमुखा जीवा भरतादयः पुत्रा जाताः॥

अथ श्रीआदिनाथस्य पञ्चकल्याणकानि कथ्यन्ते । तत्राह—

तेणं कालेणं तेणं समएणं उसभे णं अरहा कोसलिए चउउत्तरासाढे अभीइपंचमे हुत्था, तं जहा—उत्तरासाढाहिं चुए चइत्ता गब्भं वक्कंते जाव अभीइणा परिनिव्वुए ॥ २०५ ॥ तेणं कालेणं तेणं समएणं उसभे णं अरहा कोसलिए जे से गिम्हाणं चउत्थे मासे सत्तमे पक्खे आसाढबहुले, तस्स णं आसाढबहुलस्स चउत्थीपक्खे णं सव्वट्ठसिद्धाओ महाविमाणाओ तित्तीसं सागरोवमट्ठिइआओ अणंतरं चयं चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे इक्खाग-भूमीए नाभिस्स कुलगरस्स मरुदेवीए भारिआए पुव्वरत्तावरत्तकालसमयंसि आहारवक्कंतीए जाव गब्भत्ताए वक्कंते ॥ २०६ ॥

व्याख्या—"तेणं कालेणं तेणं समएणं" तस्मिन् काले तस्मिन् समये अस्याः अवसर्पिण्याः सुषमदुःषमा-नाम्नि तृतीयारके व्यतिक्रान्ते चतुरशीतिपूर्वलक्षेषु नवाशीतिपक्षाधिकेषु शेषेषु श्रीऋषभदेवः अर्हन् । पुनः किंविशिष्टः ? । कौशलिकः, कोशलायां अयोध्यायां भवः=उत्पन्नः यः सः, ग्रीष्मस्य—उष्णकालस्य चतुर्थे मासे सप्तमे पक्षे आषाढकृष्णपक्षे तस्यापि चतुर्थीदिने सर्वार्थसिद्धात् महाविमानात् यत्र ३३ त्रयस्त्रिंशत्सागरोप-

माणि स्थितिः वर्तते, ततः पश्चात् चयं=शरीरं त्यक्त्वा, अत्रैव जम्बूद्वीपे भरतक्षेत्रे इक्ष्वाकुभूमौ नाभिकुलकरस्य मरुदेवीभार्यायाः कुक्षौ गर्भत्वेन उत्पन्नः ॥

अथ कुलकराः कदा कथं च उत्पन्नाः ?, तत्स्वरूपं इदम्—

तृतीयस्य अरस्य पल्योपमस्य अष्टमे भागे शेषे सति दक्षिणभरतार्धमध्यमखण्डत्रिभागे गङ्गासिन्धुनद्योः मध्ये कुलकराणां उत्पत्तिर्जाता । तथाहि—

पश्चिममहाविदेहे द्वौ वणिजौ अभूताम् । तयोः मध्ये एकः सरलः व्यवहारिणः पुत्रः सागरचन्द्रनामा, एकश्च अपरः वक्रो मायावी च, द्वावपि दानरुचिनौ, तेन मायाविना समं सागरचन्द्रस्य परमप्रीतिरस्ति । एकदा सागरचन्द्रो मित्रेण समं वसन्ते क्रीडायां वने गतोऽभूत् । तदा काऽपि अपरव्यवहारिणः कुमारी चौरैः गृहीताऽभूत् । सा आभरणलोभेन मार्यमाणा सागरचन्द्रेण मोचिता, तस्मिन् गुणरक्ता जाता, प्रस्तावे परिणीता च, परं कामातुरेण मित्रेण एकान्ते प्रार्थिता । परं तया सः हक्कयित्वा, धिक्कः कृतः । ततो वलमानो मित्रेण शोककारणं पृष्टं, तेन मायया सदोषः तस्यै दत्तः । तेन मित्रभार्ययोः दोषं अवगणय्य प्रीतिरेव कृता । काले त्रयो मृताः, दम्पती मृत्वा युगलिकौ जातौ । द्वितीयो यो मायावी अभूत् स हस्ती चतुर्दन्तो जातः । एकदा हस्ती तं युगलिनं दृष्ट्वा, जातिं स्मृत्वा स्वस्य स्कन्धे आरोप्य चचाल । ततोऽन्यैः युगलिभिः विमलं वाहनं

अस्येति विमलवाहनो नाम राजा कृतः । अथ कालवशात् कल्पवृक्षाणां हानिर्जाता, ततः परस्परं कलहे जायमाने विमलवाहनो राजा जातिस्मृतित्वात् नीतिज्ञः कल्पवृक्षान् विभज्य दत्तवान् । अपराधिनां च 'ह' इति दण्डनीतिं कृतवान् । अपराधे कृते 'ह' इति उक्ते अपराधी जानाति मम सर्वस्वं अपहृतमिति । तस्य विमलवाहनस्य चन्द्रयशाः प्रिया नवशतधनुःप्रमाणं (९००) शरीरं ॥ इति प्रथमः कुलकरः ॥ १ ॥ तस्य विमलवाहनस्य पुत्रः चक्षुष्मान् चन्द्रकान्ता भार्या, अष्टशतधनुःप्रमाणं [८००] शरीरं तस्यापि 'ह' इति दण्डनीतिः ॥ इति द्वितीयः कुलकरः ॥ २ ॥ तस्य पुत्रो यशस्वी सुरूपा भार्या सप्तशतधनुःप्रमाणं [७००] शरीरं स्तोकापराधे 'ह' इति महापराधे च 'म' इति दण्डनीतिद्वयं कृतवान् ॥ इति तृतीयः कुलकरः ॥ ३ ॥ तस्य पुत्रः अभिचन्द्रः प्रतिरूपा भार्या, सार्धषट्शतधनुःप्रमाणं (६५०) शरीरं तस्यापि हकार–मकारेति दण्डनीतिद्वयं ॥ इति चतुर्थः कुलकरः ॥ ४ ॥ तस्य पुत्रः प्रसेनजित्, चक्षुःकान्ता भार्या, षट्शतधनुःप्रमाणं (६००) शरीरं हकार–मकारदण्डनीतिकथनेऽपि न निवर्तन्ते कलहात् युगलिनः ततो ह १ म २ धिक् ३ दण्डनीतित्रयं कृतवान् ॥ इति पञ्चमः कुलकरः ॥ ५ ॥ तत्पुत्रो मरुदेवः, श्रीकान्ता भार्या, सार्धपञ्चशतधनुःप्रमाणं (५५०) शरीरं 'ह' १ 'म' २ 'धिक्' ३ दण्डनीतित्रयं ॥ इति षष्ठः कुलकरः ॥ ६ ॥ तस्य पुत्रो नाभिराजा, मरुदेवी भार्या, सपादपञ्चशतधनुःप्रमाणं (५२५) शरीरं 'ह' १ 'म' २ 'धिक्' ३ दण्डनीतित्रयं ॥ इति सप्तमः कुलकरः ॥ ७ ॥ इति सप्तकुलकरस्वरूपं कथितम् ॥

कुलकर-
स्वरूप-
कथनं,
च्यवन-
कल्याणकं
च

अथ श्रीभगवतः च्यवन-कल्याणकं आह-च्यवनसमये कीदृशं त्रैकालिकं ज्ञानमासीत्?, तत्राह—

उसभेणं अरहा कोसलिए तिन्नाणोवगए आविहुत्था, तं जहा-चइस्सामित्ति जाणइ ॥ ३ ॥

अयं आलापकः सुगमः पूर्वं व्याख्यातश्च। ततश्च च्यवनानन्तरं किं जातं?, तत्राह—

जाव सुमिणे पासइ, तं जहा-'गयवसह' गाहा। सव्वं तहेव, नवरं पढमं उसभं मुहेणं अइंतं पासइ, सेसाओ गयं। नाभिकुलगरस्स साहइ, सुविणपाढगा नत्थि, नाभिकुलगरो सयमेव वागरेइ ॥ २०७ ॥

व्याख्या-"जाव सुमिणे" मरुदेवास्वामिनी त्रिशला क्षत्रियाणीवत् चतुर्दशस्वप्नान् ददर्श। नवरं प्रथमं वृषभं पश्यति। मुखे प्रविशन्तं, शेपास्तीर्थङ्करमातरः प्रथमं गजं पश्यन्ति। त्रिशला तु सिंहं। ततः स्वप्नदर्शनानन्तरं मरुदेवी नाभिराजपार्श्वे गत्वा स्वप्नफलं पप्रच्छ। स्वप्नलक्षणपाठकाः तदा न सन्ति। ततो नाभिराजा स्वयमेव पुत्रप्राप्तिं प्राह-परं इन्द्र आगत्य मरुदेव्या अग्रे स्वप्नानां फलं विस्तरेण स्वप्नलक्षणपाठकवत् कथयति स्म-"हे देवि! चतुर्दशस्वप्नप्रभावात् चतुर्दशरज्जुलोकस्वामी पुत्रो भविष्यति।"

अथ श्रीभगवतो जन्म-कल्याणकं प्राह—

तेणं कालेणं तेणं समएणं उसभे णं अरहा कोसलिए जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले तस्स णं चित्तबहुलस्स अट्ठमीपक्खे णं नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइंदियाणं जाव आसाढाहिं नक्खत्तेणं जोगमुवागएणं जाव आरोग्गा आरोग्गं दारयं पयाया ॥ २०८ ॥

"तेणं कालेणं" तस्मिन् काले तस्मिन् समये श्रीऋषभोऽर्हन् कौशलिकः यः सः ग्रीष्मकाले प्रथमे मासे प्रथमे पक्षे चैत्रवदि अष्टमीदिने नवमासेषु संपूर्णेषु सार्धसप्तदिवसेषु च गतेषु उत्तराषाढानक्षत्रे चन्द्रेण सह योगं वर्तमाने जातः आरोग्या–कष्टरहिता आरोग्यं–नीरोगं पुत्रं युगलसुमङ्गलारूपं माता मरुदेवी प्रसूता। ततः किं जातं ?, तत्राह—

तं चेव सव्वं, जाव देवा देवीओ य वसुहारवासं वासिंसु, सेसं तहेव चारगसोहणमाणुम्माण-वद्धणउस्सुक्कमाइयट्ठिइवडियजूयवज्जं सव्वं भाणिअव्वं ॥ २०९ ॥

व्याख्या–"तं चेव सव्वं जाव देवा" तदेव यावत् देवा देव्यश्च आगता वसुधारावर्षणं चक्रुः, परं बन्दिगृह-

शोधनं, १ मानोन्मानवर्धनं २ शुल्कमोचनं ३ स्थितिपतिकाकरणं ४ यूपं ५ च नास्ति, तदानीं तेषां व्यवहाराभावात्। अथ नामकरणं प्राह—

उसभे णं अरहा कोसलिए कासवगुत्ते णं, तस्स णं पंच नामधिज्जा एवमाहिज्जंति, तं जहा—उसभे इ वा, पढमराया इ वा, पढमभिक्खायरे इ वा, पढमजिणे इ वा, पढमतित्थयरे इ वा ॥ २१० ॥

व्याख्या—"उसभे णं अरहा" ऋषभोऽर्हन् कौशलिकः काश्यपगोत्रीयः तस्य पञ्च नामानि सार्थकानि एवं कथ्यन्ते। तथाहि—'ऋषभः' ऊर्वोः वृषभलाञ्छनत्वात् १, 'प्रथमो राजा' इन्द्रेण प्रथमं राज्ये स्थापितत्वात् २, 'प्रथमो भिक्षाचरः' प्रथमं भिक्षाश्रमणं याचनां च प्राप्तत्वात् ३, 'प्रथमो जिनः' चतुर्विंशतितीर्थङ्कराणां आद्यत्वात् ४, 'प्रथमः तीर्थङ्करः' प्रथमं चतुर्विधसङ्घरूपतीर्थप्रवर्तनात् ५।

अथ आहाराधिकारः कथ्यते—आहारं च श्रीतीर्थङ्कराणां अङ्गुष्ठे अतिमनोज्ञं देवाः संचारयन्ति। ततः आहाराभिलाषे सति तीर्थङ्कराः सुधारसमयं स्वकीयमङ्गुष्ठं मुखे क्षिपन्ति, परं न स्तन्योपयोगं कुर्वन्ति। बाल[ला]भावे अतिक्रान्ते च अग्निपक्वं आहारं आहरन्ति, परं श्रीऋषभदेवस्तु यावत् दीक्षा न गृहीता तावन्तं कालं देवैः आनीतं आहारं अकरोत्।

अथ श्रीभगवतो वंशस्थापनां प्राह–किञ्चिन्न्यूने वर्षे जाते सति "रिक्तहस्तः कथं स्वामिसमीपे गमिष्यामि" इति विचार्य महतीं इक्षुयष्टिं हस्ते गृहीत्वा, इन्द्रो नाभिराजस्य उत्सङ्गे स्थितं श्रीऋषभदेवं नत्वा उपविष्टः। स्वामी च तस्यां इक्षुयष्टौ दृष्टिं अक्षिपत् । ततः इन्द्रः प्राह–"हे भगवन्! तव इक्षौ आकुः=अभिलाषः, किं इक्षुं भक्षयिष्यसि?" ततः श्रीभगवान् हस्तं प्रसारयामास तेन हेतुना इन्द्रेण "इक्ष्वाकुः" इति वंशस्थापना कृता । पुनः भगवतः पूर्वजाः अपि काश्यं इक्षुरसं अपिबन्, अथवा काश्यप्यां जातं इति काश्यपं गोत्रं। अथ भगवति बाल्ये व्यतिक्रान्ते जाते सति कश्चित् युगलिकः पुत्रपुत्रीरूपं युगलं तालवृक्षस्य अधो मुक्त्वा, मोहनं गृहं प्रविष्टः, तदा प्रबलवातेन कम्पितात् तालवृक्षात् एकं महत् फलं पपात । तेन पुत्रो मृतः, पुत्रिका स्थिता, तां पुत्रिकां दिव्यरूपां दृष्ट्वा 'एषा ऋषभस्य भार्या भविष्यति' इति विचार्य नाभिराजेन अन्तःपुरे मुक्ता। एवं सुनन्दा–सुमङ्गलाभ्यां सहितः । तत्र सुनन्दा युगलिनी, सुमङ्गला च स्वस्य भगिनी, स्वामी ज्ञानत्रयसहितः कान्ति–बुद्धिप्रमुखगुणैः सह वर्धते। अथ एकदा धूलिधूसरमुखं रममाणं श्रीऋषभपुत्रं माता मरुदेवी गृहीत्वा हृदये आश्लिष्य क्षणमेकं आनन्देन मीलितनयना सती इदं प्राह–"हे पुत्र! त्वं सुधारसभोजी मम स्तन्यपानमपि न करोषि, त्वं सदैव सौभाग्यगुणेन देववधूभिः लाल्यसे, मम उत्सङ्गेऽपि न आयासि, अहं तव माता केन गुणेन? तव प्रसादात् अहं इन्द्रादिदेवानां अपि मान्या जाता, परं मम मातुः भवः [वे] तव न कोऽपि उपकारः।" अथ इन्द्रेण आगत्य भगवतो विवाहः चक्रे । सुनन्दा–सुमङ्गलाकन्ये परिणायिते।

तत्र वधूकर्तव्यानि विवाहयोग्यानि सर्वाणि देवीभिः सह इन्द्राणी अकरोत् । अथ वरकर्तव्यानि देवैः सह इन्द्रः अकरोत्। ततो विवाहविधिः प्रकटीबभूव । स विधिः विवाहतो ज्ञेयः, न मया लिख्यते, सिद्धत्वात्। अथ भगवतो विषयसुखं भुञ्जानस्य षट्पूर्वलक्षाणि अतिक्रान्तानि । तदा बाहुजीवो भरतः, पीठजीवो ब्राह्मी इति सुमङ्गलायाः मिथुनकं जातं। एवं सुबाहुजीवो बाहुबली, महापीठजीवः सुन्दरी इति मिथुनकं सुनन्दाया जातं । एवं पुनरपि सुमंगलाया एकोनपञ्चाशत् ४९ युगलानि पुत्ररूपाणि जातानि । एवं भगवतः पुत्राणां शतं पुत्रीद्वयं च जातम्।

अथ श्रीभगवतो राज्यस्थापनां प्राह–तस्मिन् समये कषायबाहुल्यात् जीवानां हकार–मकार–धिक्कार–दण्डनीतित्रयमपि अतिक्रान्तं, न कोऽपि दण्डनीतिं मन्यते। ततो युगलिकैः श्रीऋषभदेवसमीपे आगत्य विज्ञप्तं–"हे स्वामिन्! न्यायं कुरु।" ततो भगवान् आह–"नाऽहं राजा, राजा श्रीनाभिः।" ततः ते गता नाभिसमीपं। नाभिः प्राह–"भवतां राजा ऋषभो भवतु, स न्यायं करिष्यति।" अत्राऽन्तरे इन्द्रस्य आसनं कम्पितं, अवधिज्ञानेन राज्याभिषेकसमयं ज्ञात्वा, इन्द्र आगत्य सिंहासने निवेश्य, मुकुट–हार–कुण्डलाद्याभरणानि परिधाप्य राज्याभिषेकं भगवतः कृतवान्। यौगलिका इन्द्राऽऽदेशात् पद्मसरोवरे जलानयनार्थं गताः । परं इन्द्राभिषेकानन्तरं समागताः । ततो भगवन्तं सिंहासने उपविष्टं दिव्यवस्त्राभरणादिविभूषितं इन्द्रादिदेवैः परिवृत्तं दृष्ट्वा क्षणं विचार्य उत्पन्नविवेकाः पानीयं भगवतः पादयोरुपरि चिक्षिपुः। तत इन्द्रेण प्रोक्तं–"साधु,

विनीताः पुरुषाः अत्र जाताः, तत एषा नगरी विनीता ।" अथ सा कीदृशी ?। इन्द्रेण वैश्रमणपार्श्वात् निर्मापिता । तदाह–द्वादशयोजनदीर्घा नवयोजनपृथुला अष्टद्वारा महाविषमवप्रा, ईशाने कोणे नाभिराजस्य चतुरस्रं सप्तभूमिकं गृहं कृतं १, पूर्वस्यां दिशि सप्तभूमिकं भरतगृहं २ । आग्नेयकोणे बाहुबलिगृहं । तेषां मध्ये एकविंशतिभूमिकं श्रीऋषभदेवगृहं अष्टोत्तरशतं च श्रीजिनभवनानां । पुनरपि अश्वाः १ हस्तिनः २ गावश्च ३ एते चतुष्पदा गृहीताः, तेषां संग्रहः कृतः । पुनरपि केऽपि युगलिनः अपराधानुसारेण दण्डदायका उग्राः स्थापिताः १। केऽपि गुरुस्थानीयत्वेन भोगाः स्थापिताः २। केऽपि मित्ररूपा मण्डलाधिपत्यकरणेन राजन्याः स्थापिताः ३ । शेषाः पदातिप्रमुखाः क्षत्रियाः स्थापिताः ४। इति चतुर्धा पुरुषव्यवस्था कृता। अथवा ब्राह्मण १ क्षत्रिय २ वैश्य ३ शूद्र ४ भेदात् तत्र–"ब्राह्मणा ब्रह्मचर्येण १, क्षत्रियाः शस्त्रपाणयः २। कृषिकर्मकरा वैश्याः ३, शूद्राः प्रेक्षणकारकाः ।४।" ॥ १ ॥ पुनः विनीतानगरीमध्ये चतुरशीति चतुष्पथाः स्थापिताः, तथाहि–सौगन्धिक १ गान्धिक २ ताम्बूलिक ३ कान्दविक ४ सुवर्णकार ५ मणिकार ६ सौवर्णिक ७ मणिवर्तक ८ नाणावर्तक ९ सुखभक्षिकाकारक १० कणापणिक ११ दौष्यिक १२ चर्म्मकारक १३ कांस्यकार १४ मालाकार १५ घृतापणिक १६ तैलिक १७ सौत्रिक १८ कार्पासिक १९ भाण्डशालिक २० काष्ठशालिक २१ रजक २२ पट्टिक २३ वैज्ञानशालिक २४ तन्तुवाय २५ तुन्नारक २६ नापित २७ सूचीपति २८ चित्रकर २९ लेखक ३० गांछिक ३१ कल्पपाल ३२ भ्राष्टकारक ३३ बन्धारक ३४ अङ्गारक ३५ नीलीकारक ३६ पत्रकारक ३७ नीलवर्णकारक ३८ प्रमुखाः चतुष्पथाः॥

अथ श्रीऋषभदेवः कीदृक् सन् राज्यं भुञ्जन् किं कृतवान्?, तत्राह—

उसभे णं अरहा कोसलिए दक्खे दक्खपइण्णे पडिरूवे अल्लीणे भद्दए विणीए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसइ, वसित्ता तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसइ, तेवट्ठिं च पुव्वसयसहस्साइं रज्जवासमज्झे वसमाणे लेहाइआओ गणियप्पहाणाओ सउणरुयपज्जवसाणाओ बावत्तरिं कलाओ चउसट्ठिं महिलागुणे सिप्पसयं च कम्माणं, तिन्निऽवि पयाहिआए उवदिसइ, उवदिसित्ता पुत्तसयं रज्जसए अभिसिंचइ, अभिसिंचित्ता

व्याख्या—"उसभे णं अरहा कोसलिए" श्रीऋषभदेवोऽर्हन् कौशलिको दक्षो दक्षप्रतिज्ञः प्रतिरूपः आलीनो भद्रको विनीतश्च जातः। ततो विंशतिपूर्वलक्षाणि कुमारवासमध्ये वसति, उषित्वा च त्रिषष्टिपूर्वलक्षाणि राज्यवासमध्ये वसन् लिप्यादिका गणितप्रधानाः शकुनरुतपर्यवसाना द्वासप्तति ७२ कलाः पुरुषसत्काः—संबन्धी, पुनः चतुष्षष्टि ६४ महिलागुणाः, पुनः कर्मणां कृषिवाणिज्यानां मध्ये शिल्पशतं कथं?। घटकार १ लोहकार २ चित्रकार ३ वस्त्रकार ४ नापितानां ५ पञ्चशिल्पानि सन्ति, तानि प्रत्येकं विंशति-विंशतिभेदयुक्तानि, ततः तेषां शतमेव भगवता उपदिष्टं। अत एव आचार्यस्य उपदेशं विना यत् जातं तत् कर्म कथ्यते। यच्च

आचार्यस्य उपदेशेन यत् जातं तत् शिल्पं उच्यते । कर्म-शिल्पयोः अयं विशेषः-कर्माणि तु स्वयं क्रमेण प्रवृत्तानि, त्रीण्यपि एतानि प्रजाहिताय लोकानां उपकाराय उपदिशति । पुत्रशतं च राज्ये अभिषिञ्चति-स्थापयति । पूर्वं युगलिनो यदा कालमाहात्म्यहान्या कल्पवृक्षा वाञ्छितं न ददाति, तदा कन्दाहाराः मूलाहाराः पत्राहाराः पुष्पाहाराः फलाहारा अभूवन् । ततो अपक्वं धान्यं भुञ्जते स्म परं न जीर्यति, ततः स्वामी विज्ञप्तः । स्वामिना प्रोक्तं-"हस्ताभ्यां घृष्ट्वा आहारयध्वं । तथा कृतेऽपि अजीर्णे निस्तुषतण्डुलान् कृत्वा भुङ्ग्ध्वं । तथा कृतेऽपि अजीर्णे हस्ततलपुटे स्वेदयित्वा भुङ्ग्ध्वं । तथा कृतेऽपि अजीर्णे तस्मिन् प्रस्तावे वनमध्ये वंशघर्षणात् अग्निरुत्थितः, तं ज्वलन्तं दृष्ट्वा, अपूर्वमिदं रत्नमिति बुद्ध्या ग्रहीतुं लग्नाः, ततो दह्यमाना भीताः सन्तः श्रीऋषभदेवसमीपे आगत्य कथयामासुः-"हे स्वामिन्! एकं अपूर्वं रत्नं उत्पन्नं वर्तते, परं महाक्रोधि, अत्यासन्नगमने ज्वालनाय धावति । श्रीभगवता ज्ञातं अग्निरुत्थितः । ततो भगवता प्रोक्तं-"पार्श्वस्थानि तृणलतादीनि छेदयित्वा अग्निरत्नं गृहीत्वा, ततः तस्मिन् धान्यपाकं कुरुत ।" ततः ते मनुष्याः तथा कृत्वा अग्नौ धान्यं प्रक्षिपन्ति स्म । ततो धान्यं दग्धं । ततः तैः आगत्य स्वामी विज्ञप्तः-"हे स्वामिन्! अयं असत्तोऽपि क्षुधातुरः, सर्वं धान्यं भक्षितं, न किमपि पश्चात् दत्तं ।" ततः प्रभुणा प्रोक्तं-"यदा अहं हस्तिस्कन्धारूढो निःसरामि तदा भवद्भिः मृत्पिण्ड आनीय देयः ।" तैः तथा कृते भगवता हस्तिकुम्भस्थलोपरि मृत्पिण्डं स्थापयित्वा नानाप्रकाराणि हाण्डी-कुण्डीप्रमुखाणि भाजनानि कृत्वा दत्तानि । अथ ईदृशानि कृत्वा अग्नौ पाच-

यित्वा पानीयं धान्यं च मध्ये प्रक्षिप्य, अग्नेः उपरि स्थापयित्वा पाकः कर्तव्यः। तथा कृते पचनाऽरम्भप्रवृत्तिः जाता ॥ इति युगलिनां आहारविधिः ॥

अत्र लिपिः भगवता ब्राह्मया दक्षिणहस्तेन दर्शिता । सा लिपिः अष्टादशधा, तथाहि—

हंसलिपि १ भूतलिपि २ यक्षलिपि ३ राक्षसलिपि ४ उड्डीलिपि ५ यावनीलिपि ६ तुरकीलिपि ७ कीरीलिपि ८ द्राविडीलिपि ९ सैन्धवीलिपि १० मालवीलिपि ११ नाडीलिपि १२ नागरीलिपि १३ लाटीलिपि १४ पारसीलिपि १५ अनिमित्तिलिपि १६ चाणक्रीलिपि १७ मूलदेवीलिपि १८ इति। अथवा देशादिविशेषाद्-अन्यथापि—लाटी १ चोटी २ डाहली ३ कान्हडी ४ गुजरी ५ सोरठी ६ मरहठी ७ कोंकणी ८ खुरासाणी ९ ससी १० सिंहली ११ हाडी १२ कीरी १३ हमीरी १४ परतीरी १५ मागधी १६ मालवी १७ महायोधी १८ इति।

तथा गणितं भगवता सुन्दर्या वामहस्तेन दर्शितं। पुनः भरतस्य रूपकर्म दर्शितं। पुनः बाहुबलेः पुरुषादि-लक्षणानि दर्शितानि।

तत्र नन्दिसूत्रे उक्ताः ७२ पुरुषकलाः इमाः—लेखन १ पठन २ गणन ३ गीत ४ नृत्य ५ ताल ६ पटह ७ मरुज ८ वीणा ९ वंश १० भेरी ११ एतेषां वादनकला, हस्ति १२ तुरगशिक्षा १३ धातुर्वाद १४ दृग्वाद १५ मन्त्रवाद १६ वली-पलितविनाश १७ रत्नलक्षण १८ नारीलक्षण १९ नरलक्षण २० छन्दोबन्ध २१ तर्कवाद

२२ सुनीतिपालन २३ तत्त्वविचार २४ काव्यकरण २५ ज्योतिर्विचार २६ श्रुति २७ वैद्यक २८ षड्भाषा २९ योग ३० रसायनाञ्जन ३१ लिपि ३२ इन्द्रजाल ३३ स्वप्न ३४ कृषि ३५ वाणिज्य ३६ नृपसेवा ३७ शकुन ३८ वायुस्तम्भन ३९ अग्निस्तम्भन ४० मेघवृष्टि ४१ लेपन ४२ मर्दन ४३ ऊर्ध्वगमन ४४ घटबंध ४५ घटभ्रम ४६ पत्रछेदन ४७ मर्मभेदन ४८ कलाकृष्टि ४९ अम्बुवृष्टि ५० लोकाचार ५१ जनानुवृत्ति ५२ फलभरण ५३ खड्गधरण ५४ क्षुरीबन्धन ५५ मुद्रा ५६ लोहघटन ५७ दन्तसमारण ५८ काष्ठछेदन ५९ चित्रकरण ६० बाहुयुद्ध ६१ दृष्टियुद्ध ६२ मुष्टियुद्ध ६३ दण्डयुद्ध ६४ खड्गयुद्ध ६५ वाग्युद्ध ६६ गरुडदमन ६७ सर्पदमन ६८ भूतदमन ६९ योगध्यान ७० अष्टज्ञान ७१ नामावलि ७२ इति पुरुषाणां ७२ कलाः ॥ स्त्रीणां अपि ६४ कला यथा–नृत्य १ औचित्य २ चित्र ३ वाद ४ मन्त्र ५ तन्त्र ६ ज्ञान ७ विज्ञान ८ दण्ड ९ जलस्तंभन १० गीतगान ११ तालमान १२ मेघवृष्टि १३ फलाकृष्टि १४ आरामरोपण १५ आकारगोपन १६ धर्मविचार १७ शकुनप्रचार १८ क्रियाकल्प १९ संस्कृतजल्प २० प्रसादनीति २१ धर्मनीति २२ वर्णिकावृद्धि २३ सुवर्णसिद्धि २४ सुरभितैलकरण २५ लीलासंचरण २६ गजतुरगपरीक्षा २७ पुरुषस्त्रीलक्षण २८ सुवर्णरत्नभेद २९ अष्टादशलिपिपरिच्छेद ३० तत्कालवुद्धि ३१ वास्तुसिद्धि ३२ वैद्यकक्रिया ३३ कामक्रिया ३४ घटभ्रम ३५ सारिपरिश्रम ३६ अञ्जनयोग ३७ चूर्णयोग ३८ हस्तलाघव ३९ वचनपाटव ४० भोज्यविधि ४१ वाणिज्यविधि ४२ मुखमण्डन ४३ शालिखण्डन ४४ कथाकथन ४५ पुष्पग्रथन ४६ वक्रोक्ति ४७ काव्यशक्ति ४८ स्फारवेष ४९ सकलभाषाविशेष ५०

अभिधानज्ञान ५१ आभरणपरिधान ५२ नृत्योपचार ५३ गृहाचार ५४ काव्यकरण ५५ परनिराकरण ५६ धान्यरन्धन ५७ केशबन्धन ५८ वीणानिनाद ५९ वितण्डावाद ६० अङ्कविचार ६१ लोकव्यवहार ६२ अन्त्याक्षरिका ६३ प्रश्न-प्रहेलिका ६४ ॥ इति स्त्रीणां ६४ कलाः ॥

श्रीऋषभदेवस्य पुत्रशतनामानि यथा-श्रीभरत १ श्रीबाहुबलि २ श्रीमस्तक ३ श्रीपुत्राङ्गारक ४ मल्लिदेव ५ अङ्गज्योति ६ मलयदेव ७ भार्गवनाथ ८ अङ्गदेव ९ वसुदेव १० मगधनाथ ११ मानवर्तिक १२ मानयुक्त १३ वैदर्भदेव १४ वनवासनाथ १५ महीपक १६ धर्मराष्ट्र १७ नायकदेव १८ आश्मक १९ दण्डक २० कलिङ्ग २१ ईषिकदेव २२ पुरुषदेव २३ अकल २४ भोगदेव २५ वीर्ययोग २६ गणनाथ २७ तीर्णनाथ २८ अर्बुदपति २९ आयुर्वीर्य ३० वह्नीवसु ३१ नायक ३२ काक्षिक ३३ आनर्त ३४ सारिक ३५ गर्हेप ३६ रूरुदेव ३७ कच्छनाथ ३८ सुराष्ट्र ३९ नर्मद ४० सारस्वत ४१ तापसदेव ४२ कुरु ४३ जङ्गल ४४ पञ्चाल ४५ शूरसेन ४६ पुटपुर ४७ कलिङ्गदेव ४८ काशीकुमार ४९ कौशल्य ५० भद्रकाश ५१ विकाशक ५२ त्रिगर्त ५३ आवर्ष ५४ माल्व ५५ मत्स्यदेव ५६ कुलीयक ५७ मूपकदेव ५८ बाल्हीक ५९ काम्बोज ६० मधुनाथ ६१ सान्द्रक ६२ आत्रेय ६३ यवन ६४ आभीर ६५ वानदेव ६६ वानस ६७ कैकेय ६८ सिन्धु ६९ सौवीर ७० गान्धार ७१ काष्ठदेव ७२ तोपक ७३ शौरक ७४ पद्मनाभ ७५ आरद्वाज ७६ सूरदेव ७७ प्रस्थाल ७८ कर्णक ७९ त्रिपुरनाथ ८० अवन्तीनाथ ८१ देवपति ८२ किष्किन्धि ८३ नैपध ८४ दशाकर्ण ८५ कुसुमवर्ण ८६ भोपालदेव ८७

पालनाथ ८८ कुशल ८९ पदम ९० विनिद्राय ९१ वैकेश ९२ वैदेह ९३ कच्छपति ९४ भद्रदेव ९५ वज्रनाथ ९६ सान्द्रभद्र ९७ सेनज ९८ वत्सनाथ ९९ अङ्गदेव १०० इति श्रीआदिनाथपुत्रशतम् ।

तत्र श्रीभगवता अयोध्याराज्यं ज्येष्ठपुत्राय श्रीभरताय दत्तं, तक्षशिलानगरीराज्यं श्रीबाहुबलये दत्तं, अन्येषां च पुत्राणां अङ्गवङ्गादिदेशानां राज्यानि दत्तानि ॥

अथ श्रीभगवतो दीक्षा-कल्याणकमाह—

पुणरवि लोअंतिएहिं जीअकप्पिएहिं देवेहिं ताहिं इट्ठाहिं जाव वग्गूहिं, सेसं तं चेव सव्वं भाणिअव्वं, जाव दाणं दाइआणं परिभाइत्ता जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स अट्ठमीपक्खे णं दिवसस्स पच्छिमे भागे सुदंसणाए सीयाए सदेवमणुआसुराए परिसाए समणुगम्ममाणमग्गे जाव विणीयं रायहाणिं मज्झंमज्झेणं णिग्गच्छइ, णिग्गच्छित्ता जेणेव सिद्धत्थवणे उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छइ, उवागच्छित्ता असोगवरपायवस्स अहे जाव सयमेव चउमुट्ठिअं लोअं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं आसाढाहिं नक्खत्तेणं जोगमुवागएणं उग्गाणं भोगाणं राइण्णाणं खत्तियाणं च

चउहिं पुरिससहस्सेहिं सद्धिं एगं देवदूसमादाय मुंडे भवित्ता अगाराओ अणगारियं पव्व-
इए ॥ २११ ॥

व्याख्या—"पुणरवि लोअंतिएहिं" अथ पुनरपि श्रीऋषभदेवो लोकान्तिकदेवैः प्रतिबोधितः सांवत्सरिकदानं दत्त्वा ग्रीष्मकाले प्रथमे मासे प्रथमे पक्षे एतावता चैत्रवदि अष्टमीदिने दिवसस्य पश्चिमे भागे सुदर्शनानामशिबिकामारूढ देवैः मनुजैः असुरैः समनुगम्यमानमार्गः विनीतां राजधानीं मध्यभागेन निर्गच्छति, निर्गत्य यत्रैव सिद्धार्थनाम उद्यानं यत्र अशोकवरपादपः तत्र आगच्छति, आगत्य च अशोकवरपादपस्य अधस्तात् चतुर्मुष्टिकं लोचं करोति । एकां हि मुष्टिं इन्द्रस्य आग्रहेण रक्षितवान् । यतः स्कन्धस्था एका-केशमुष्टिः वायुना आन्दोलिता सती स्वर्णकलशोपरि नीलोत्पलपिधानसदृशी शोभते स्म । तथा षष्ठेन तपसा अपानकेन उत्तराषाढानक्षत्रे चन्द्रेण सह योगं वर्तमाने उग्राणां १ भोगानां २ राजन्यानां ३ क्षत्रियाणां ४ च चतुर्भिः पुरुषसहस्रैः स्वयं कृतलोचैः यथा श्रीभगवान् करिष्यति तथा वयमपि करिष्यामः इति जानद्भिः तैः सार्धं एकं देवदूष्यं वस्त्रं आदाय मुण्डो भूत्वा अगारात् अनगारतां साधुतां प्रव्रजति स्म । तदैव भगवतः चतुर्थं मनःपर्यायज्ञानं समुत्पन्नं । अथ श्रीऋषभदेवो वृषभगतिः सन् घोरं अभिग्रहं कृत्वा त्यक्तदेहः परिभ्रमति स्म । तदा भिक्षां न कोऽपि जानाति, न कोऽपि ददाति । के कीदृशाश्च भिक्षाचराः ?, का कीदृशी च

भिक्षा ? । ततः चत्वारोऽपि सहस्राः उग्रादयः क्षुधापरीषहपीडिताः गङ्गानदीदक्षिणकूले वनमध्ये तापसा जाताः । परं कीदृशाः ? । स्वयंपतितपत्रपुष्पफलाहारिणः वल्कलचीरधारिणः श्रीऋषभदेवमेव ध्यायिनः ।

अथ श्रीभगवता यदा दीक्षा गृहीता, देशाः पुत्राणां च दत्ताः, तदा कच्छमहाकच्छसुतौ नमिविनमी पुत्रवत् पालितौ पार्श्वे न अभूतां, पश्चात् आगतौ राज्यार्थिनौ व्रतस्थमपि भगवन्तं सेवितवन्तौ । तदा धरणेन्द्रो भगवन्तं नमस्कर्तुं समागतः, तदा नमिविनमी प्रभोः पादयोः अग्रे जलच्छण्टकं दत्त्वा पुष्पप्रकरं अग्रे मुक्त्वा विज्ञप्तिं चक्रतुः–"हे स्वामिन्! राज्यं देहि" तदा धरणेन्द्रः प्राह–"प्रभुः त्यक्तराज्यसङ्गः, देयं किमपि नास्ति, युवां भरतं याचेथाः ।" ताभ्यां प्रोक्तं–"यथा भरतः सुतः तथा आवां अपि जिह्वाजल्पितौ सुतौ, तस्मात् [आवां] अन्यं न आश्रयावहे ।" ततः स्वामिभक्तिसन्तुष्टो धरणेन्द्रः अष्टचत्वारिंशत् ४८ सहस्रविद्याः पाठसिद्धा अदात् । ततो गौरी-गान्धारी-प्रज्ञप्ति-रोहिणी-देवताधिष्ठातृ-महाविद्याबलेन स्वजनान् उपलोभ्य सर्वान् विद्याधरान् कृत्वा वैताढ्यपर्वतस्य दक्षिणोत्तरश्रेण्योः पञ्चशतरथनूपुरचक्रवालादिनगराणि षष्टिश्च गगनवल्लभादिनगराणि अनुक्रमेण स्थापयित्वा राज्यं कुर्वाते स्म । अथ च धरणेन्द्रोऽपि इत्थं विद्याधराणां शिक्षां दत्त्वा स्वस्थानं गतः । का शिक्षा ?, इत्याह–"रे विद्याधराः ! यो जिनानां १ जिनचैत्यानां २ चरमशरीरिणां ३ प्रतिमाप्रतिपन्नानां साधूनां ४ पराभवं लङ्घनं वा करिष्यति, परस्त्रियं अवाञ्छतीं बलात् यो रमयिष्यति (तस्य) विद्या निष्फला भविष्यति ।" इति, रत्नभित्तौ प्रशस्तिं अपि लिलेख । ततः स्वामिसेवाफलं भरताय कथ-

यित्वा स्वजनं आदाय दक्षिणश्रेणेः नमिः राज्यं कुरुते स्म । उत्तरश्रेणौ च विनमिः राज्यं कुरुते स्म । इति नमिविनमिसम्बन्धः ॥ एकदा स्वामी विहरन् बहुलीदेशे तक्षशिलां नगर्यां आगतः, तत्र सन्ध्यायां उद्याने कायोत्सर्गेण स्थितः । तत्र उद्यानपालकेन श्रीबाहुबलेः प्रभोः आगमनं कथितं, तस्मै पारितोषिकं दानं दत्त्वा, बाहुबलिः विचारितवान्—"साम्प्रतं त्रीणि लक्षाणि पुत्राः तथैव प्रपौत्रादयः परिवारो मिलितो नास्ति।" ततः प्रभाते 'महत्या विच्छित्त्या वन्दनाय गमिष्यामि' इति सन्ध्यसमये न गतः । ततः प्रभाते सर्वपरिवारं मेलयित्वा नगरीशोभां कृत्वा गजारूढो गतो भगवद्वन्दनार्थं, परं श्रीभगवान् वायुरिव अप्रतिबद्धविहारित्वात् सन्ध्यायामेव क्षणं स्थित्वा विहृत्य गतो दूरदेशे । ततो बाहुबलिः तत्र श्रीभगवन्तं अदृष्ट्वा महाखेदं चकार । कर्णयोः अङ्गुलिं क्षिप्त्वा उच्चैः रुरोद । सम्प्रदायात् एवं श्रूयते—तत्र "बाबा आदम" इति वदन्तो "बांग" ददति । ततो बांगप्रवृत्तिः । ततो बाहुबलिः स्वामिभक्त्या यत्र स्वामी कायोत्सर्गे स्थितः तत्र स्थाने धर्मचक्रं नाम अष्टयोजनविस्तीर्णं एकयोजनोच्चं सहस्रारं रत्नमयं पीठं चकार । तदुपरि भगवतः पादुके स्थापयित्वा अयं श्रीभगवानेव इति बुद्ध्या ननाम । लोका अपि सर्वे तथैव महिमां चक्रुः । इति तक्षशिलानगर्यां बाहुबलिसम्बन्धः ॥

अथ श्रीभगवतः कियता कालेन कस्मिन् नगरे केन पारणं दत्तं तत्स्वरूपं कथ्यते । तथाहि—

गजपुरे नगरे समागतः। तत्र गजपुरस्वामी बाहुबलिपुत्रः सोमप्रभो राज्यं करोति। तस्य पुत्रः श्रेयांसो युवराजा वर्तते। तस्यां रात्रौ श्रेयांसः स्वप्ने मेरुपर्वतं श्यामं जातं सन्तं अमृतकुम्भैः धौतं अधिकं शोभमानं ददर्श १, सोमप्रभो राजा एकः सुभटो वैरिभिः आक्रान्तः सन् श्रेयांससाहाय्यात् जयं लब्धवान् इति स्वप्नं ददर्श २, सुबुद्धिश्रेष्ठी सूर्यस्य किरणान् पततः श्रेयांसः तान् सूर्यमण्डले स्थापयामास इति स्वप्नं ददर्श ३, राजा प्रभाते आस्थाने आगत्य स्थितः। स्वप्नविचारे क्रियमाणे सर्वैः प्रोक्तं–"अद्य कोऽपि श्रेयांसकुमारस्य महान् लाभो भविष्यति।" तस्मिन् समये श्रीऋषभदेवः प्रतिगृहं गोचरीं भिक्षां परिभ्रमति। लोकाः केचित् कन्यां ददति, केऽपि प्रधानवस्त्राणि, केऽपि स्वर्णं, केऽपि मणिमाणिक्यरत्नप्रवालादीनि प्रयच्छन्ति। परं भगवान् न गृह्णाति। ततः कोलाहलो जातः। तस्मिन् प्रस्तावे श्रेयांसकुमारो गवाक्षे स्थितः प्रपितामहं श्रीऋषभदेवं दृष्ट्वा, जातिस्मरणं प्राप। पूर्वभवसम्बन्धं ददर्श। स्वामी ललिताङ्गः तदा अहं स्वयंप्रभा देवी १, स्वामी वज्रजङ्घो राजा तदा अहं श्रीमती भार्या २, ततः उत्तरकुरुक्षेत्रे स्वामी युगलिकः अहं युगलिनी ३, सौधर्मे देवलोके मित्ररूपौ देवौ ४, स्वामी वैद्यपुत्र आनन्दः, तदा अहं श्रेष्ठिपुत्रः केशवनामा मित्ररूपः ५, स्वामी अच्युते देवलोके देवः, अहं स्वामिनो मित्रदेवः ६, स्वामी वज्रनाभश्चक्री, अहं स्वामिनः सारथिः ७, स्वामी सर्वार्थसिद्धिविमाने देवः, अहमपि तत्रैव देवः ८, स्वामी ऋषभदेवस्तीर्थङ्करः, अहं श्रेयांसनामा भगवतः प्रपौत्रः ९ इति नवभव-सम्बन्धो मम भगवता सह। ततो गवाक्षात् उत्तीर्य प्रदक्षिणात्रयं दत्त्वा विधिना अभिवन्द्य, स्वगेहाङ्गणे

आनीय स्वमाभृते आगतानां इक्षुरसघटानां शतेन समूहेन वा निमन्त्रयति स्म–"हे भगवन्! गृहाण इमं ४२ द्विचत्वारिंशद्दोषरहितं शुद्धं इक्षुरसं, निस्तारय मां" इत्युक्ते स्वामी मौनेन स्थितः। युगन्धरी–खलगाहने वाह्यमानानां वृषभाणां मुखानि [यावत्] द्वादश प्रहरान् छिक्कया बद्धानि इति पूर्वभवोपार्जितं अन्तरायकर्म च त्रुटितं। परं अत्रान्तरे दक्षिणहस्तः श्रेयांसं प्रति गद्गदस्वरेण बभाषे–"अहो श्रेयांस! शृणु। अहं श्रीऋषभदेवस्य आजन्मतः सेवकः, मया च श्रीऋषभदेवस्य प्रसादेन महान्ति उत्तमकर्तव्याणि कृतानि, तेन अहं महतीं प्रतिष्ठां प्राप्तः। कर्तव्यानि शृणु–इन्द्रादिदेवानां प्रत्यक्षं स्वामिनोऽङ्गुष्ठेन सुधापानं कारितं १, पुनः वंशस्थापनायां इन्द्रहस्तात् इक्षुयष्टिं गृहीत्वा मया स्वामिनो वाञ्छा पूरिता २, पुनः मया भरतस्य तिलकं कृत्वा विनीतायां राज्यं दत्तं। षट्खण्डभोक्ता कृतः। एवं बाहुबलिनः तक्षशिलानगरीराज्यं दत्तं। शेषाष्टनवतिपुत्राणां अपि राज्यर्द्धिः दत्ता ३, पुनः सुनन्दा–सुमङ्गलाकन्याद्वयं मयैव गृहीत्वा स्वामिनो दत्तं ४, पुनः वर्षं यावत् मेप्सितं दानं दत्त्वा, जगत्त्रयं पूर्णवाञ्छितं कृतं ५, पुनः अहं छत्र-चामर-चक्र-गदा-खड्ग-धनुरङ्कुश-वज्र-शङ्खादिशुभलक्षणैः विराजमानः ६, पुनः अहं तीर्थयात्रा-पुत्रप्राप्ति-राज्यप्राप्ति-भाग्य-सौभाग्य-यशः-कीर्तिसूचकरेखाभरः ७, पुनः चोक्षप्रेक्षादिकर्मणि व्यापारवान्, पुनः दाने भोजने देवपूजायां परमेश्वरस्मरणे प्रीतिबन्धे अविश्वासे जाते बोलदाने सर्वत्रापि भव्यकर्मणि ममैव अधिकारः। कथं ईदृशोऽहं स्वल्परसस्य [इक्षुरसस्य] अधो भवामि? पुनः [८३] त्र्यशीतिपूर्वलक्षाणि श्रीभगवता राज्यसाम्राज्यं पालितं। तस्य भगवतो मया अग्रे भूत्वा कथं याचना

कार्यते ? । तस्मादेव कारणात् मया खाद्यनाटकनेपथ्यकेलिलीलां विना मौनी सन् वनगहने श्रीऋषभदेवो भ्रामितः । ततो न अमुं इक्षुरसं स्वीकरोमि ।" इत्युक्ते दक्षिणहस्तेन वामहस्तः प्राह–"रे निर्लज्ज ! मा मुधा आत्मानं प्रशंससि [ प्रशंसस्व ] । परैः प्रशंसितो निर्गुणोऽपि गुणवान्, स्वयंप्रोक्तगुणस्तु सगुणोऽपि लघुतां याति, गुणिनां गुणास्तु स्वयं प्रकटीभवन्ति कर्पूररत्नमण्यादीनामिव, एकत्रवसतोः द्वयोरेको अपरस्याग्रे गुणवर्णनं करोति तत् न युक्तं, मातुः अग्रे मातृकुलस्य वर्णनं यथा–अहो श्रेयांस ! श्रीऋषभदेवप्रपौत्र ! ममाऽपि कर्तव्यानि शृणु–"जिनेन यत् स्वीकृतं कन्याद्वयं तस्य मया स्थानं दत्तं, स्त्रीणां वामाङ्गशायित्वात् १, सङ्ग्रामे खेटकं अग्रे धृत्वा स्वामिनं अहं रक्षामि, खड्गं उत्पाट्य दक्षिणपाणिः पश्चात् याति २, धनुः अग्रे धृत्वा अहं तिष्ठामि, अयं तीरं लात्वा कर्णे प्रविशति पिशुनवत् ३, अङ्कानां गणनव्यवहारो मयि ४, ग्रामचलने खरोऽपि मद्दिशि आगत्य ब्रवीति तदा सिद्धिदाता स्यात्। एवं देव्यादयोऽपि ५, एवं प्रथमप्रयाणे–प्रथमयामे रात्रौ शृगाला अपि मद्दिशिस्था एव सिद्धिदाः ६, रोगादौ विशेषतो वामे पार्श्वे शयनं समाधिदायकं ७, वामे सोमे [स्वरे] चन्द्रनाडीरूपे वहमाने कृतं कार्यं शुभकारि स्यात् ८, पुनः शृणु, अनेन परिणयनावसरे कन्याद्वयहस्तो गृहीतः, तदा नाऽहमाकारितः ९, कंसारोऽपि एकाकिना एव भक्षितो, न ज्ञातं मम सहचरोऽप्यस्ति, परमयं उदरम्भरिः १०, पुनः भोजनान्ते दक्षिणायाचकः ११, पुनः मृष्टान्नपानभोजने मम पार्श्वात् मक्षिका उड्डापयति, नाऽहं सुदाक्षिण्यात् नाकृतं कथयामि १२, पुनरेतस्य चातुर्यगुणोऽपि नास्ति, यतोऽयं मस्तके मुकुटं यथा तथा

वेष्टयति, परं रचनया सुन्दरसंस्थानं अहं करोमि १३, पुनः अयं चौर्यकारी १४, द्यूतकारी १५, कियत् कथ्यते ?। आवयोः भव्याभव्यस्वरूपं सर्वं जगत् वेत्ति, इत्थं आवयोः विवादं कुर्वतोः वर्षं एकं गतं। ततो भगवान् वार्षिकतपःकारी जातः। कुटुम्बविरोधो हि न श्रेयान्, कथंचित् विरोधे जाते आत्मीया एव आत्मीयान् प्रतिबोधयन्ति। पुनरपि श्रीभगवतः केवलज्ञानोत्पत्तौ तीर्थप्रवर्तने सङ्घस्थापनायां निर्वाणे च भवत एव कार्यं ममतां च स्वकीयं कार्यं परार्थमेव। यतो मातृभिः पीतं दुग्धादि बालकाय स्यात्। तस्मात् विरोधं टालय।" इत्युक्त्वा विरते वामहस्ते श्रेयांसः प्राह-"भो हस्तौ! युवां द्वावपि स्वस्वकार्ये भव्यौ। परं इमां मम प्रार्थनां साफल्यं कुरुत। एकत्र मिलनं यथा वर्षक्षुधितस्य श्रीभगवतः पारणं स्यात्, मम च उत्तमदानेन संसारसमुद्रोत्तारणं स्यात्। ततः श्रेयांसाभ्यर्थनया द्वावपि हस्तौ वेडाकारौ मिलितौ, श्रेयांसेन च शुद्धभावेन इक्षुरसो विहरापितः, तच्छिखा च ऊर्ध्वं निस्ससार। परं विन्दुमात्रं नाऽधः पपात। एतत् कियत्?। भगवतो लब्ध्या पाण्योर्घटसहस्रं माति, समुद्रा वा सर्वे मान्ति। श्रीभगवता च तत्रैव स्थाने पारणं कृतं। पञ्चदिव्यानि प्रकटितानि-गन्धोदकपुष्पवृष्टिः १ वसुधारावृष्टिः २ चेलोत्क्षेपः ३ देवदुन्दुभिः ४ अहो दानमहो दानमिति उद्घुष्टं ५। तद्दिनमपि वैशाखसुदितृतीयारूपं पर्वत्वेन मान्यं जातं। पारणास्थाने रत्नपीठं कारितं। कोऽपि प्राह-"अरे! यदि मार्गितं स्यात् तदा एवं भवतु, ऋषभदेवसदृशं सुपात्रं १ इक्षुरससमः शुद्ध आहारः २ श्रीश्रेयांससमो भावश्च ३।" इति श्रीभगवतः पारणाधिकारः ॥

अथ स्वामिदीक्षानन्तरं मरुदेवीस्वामिनी पुत्रस्नेहेन चिन्तयति—"हे पुत्र! त्वं मां म्लानपुष्पमालामिव १ जीर्णवस्त्रखण्डमिव २ वस्त्रलग्नरजोवत् ३ त्यक्त्वा वने भ्रमसि, अहं शृणोमि त्वां क्षुधातुरं, परं अहं दुर्मरा न म्रिये!। हे सख्यौ! मम पुत्रस्य सुन्दरीहस्तकङ्कणझणत्कारः—कणत्कारः पूर्वमासीत्। सांप्रतं तु मशकश्रेणि-भणत्कारः श्रूयते १, पुनः मत्पुत्रस्य पूर्वं छत्रं ध्रियमाणमासीत्। अधुना तु सूर्यमण्डलं अत्यन्तमुष्णं मस्तके तपति २, पुनः पूर्वं हस्ति-घोटक-सुखासन-यानचारी आसीत्। इदानीं तु अनुपानत्कः सन् एकाकी भ्रमति ३, पुनः पूर्वं सुकुमालशय्याशायी अभूत्, सांप्रतं तु कठिनपृथिव्यां तिष्ठति, कायोत्सर्गं च करोति ४, भरतादयश्च सर्वेऽपि पृथिवीं पालयन्ति, परं मम पुत्रस्य न कोऽपि वार्तामात्रमपि पृच्छति। इति दुःखकरणेन मरुदेवी अन्धा जाता। तस्मिन् समये श्रीभगवतः केवलज्ञानं उत्पन्नं, तत्राह—

उसभे णं अरहा कोसलिए एगं वाससहस्सं निच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा जाव अप्पाणं भावेमाणस्स इक्कं वाससहस्सं विइक्कंतं, तओ णं जे से हेमंताणं चउत्थे मासे सत्तमे पक्खे फग्गुणबहुले, तस्स णं फग्गुणबहुलस्स इक्कारसीपक्खेणं पुव्वण्हकालसमयंसि पुरिमतालस्स नयरस्स बहिआ सगडमुहंसि उज्जाणंसि नग्गोहवरपायवस्स अहे अट्ठमेणं

॥२०६॥

भत्तेणं अपाणएणं आसाढाहिं नक्खत्तेणं जोगमुवागएणं झाणंतरिआए वट्टमाणस्स अणंते जाव जाणमाणे पासमाणे विहरइ ॥ २१२ ॥

व्याख्या–"उसभे णं अरहा" ऋषभोऽर्हन् कौशलिकः एकं वाससहस्रं नित्यं व्युत्सृष्टकायः–त्यक्तदेहः सन् ये केचन उपसर्गा उत्पद्यन्ते यावत् आत्मानं भावयतः एकं वर्षसहस्रं व्यतीतं। ततो हेमन्तस्य चतुर्थे मासे सप्तमे पक्षे एतावता फाल्गुनवदि एकादशीदिने पूर्वाह्णकालसमये पुरिमतालनामनगरस्य वहिः शकटमुखे उद्याने वटवृक्षस्य अधः अष्टमेन भक्तेन अपानकेन उत्तराषाढनक्षत्रे चन्द्रेण सह योगं वर्तमाने ध्यानान्तरे वर्तमानस्य भगवतः केवलज्ञानं उत्पन्नं। तेन यावत् सर्वं जानन् पश्यन् विहरति ॥ तस्मिन्नेव दिने भरतस्य–राज्ञः आयुधशालायां चक्ररत्नोत्पत्तिः जाता, ततो भरतः केवलज्ञानोत्पत्ति–चक्रोत्पत्तिभ्यां समकालं वर्धितः। क्षणं भरतेन मोहात् विचारितं–"पूर्वं चक्रपूजां करोमि किं वा तातपूजां?।" ततो मोहं परित्यज्य सम्यक् विचारितं–"श्रीताते पूजिते सति चक्रमपि पूजितमेव। चक्रपूजा इहलौकिकी, तातपूजा तु पारलौकिकी ततोऽधिका।" ततो भरतः पुत्रनिमित्तं दुःखं कुर्वतीं मरुदेवीं हस्तिस्कन्धे संस्थाप्य भगवन्तं नन्तुं चलितः। मार्गे देवदुन्दुभिं श्रुत्वा मरुदेवी प्राह–"भरत! कस्य एतानि वादित्राणि?।" भरतेन प्रोक्तं–"तव पुत्रस्य।" ततः पुत्रसमृद्धिदर्शनार्थं उत्सुकतया उन्मीलिते नेत्रे गतं अन्धपटलं, दृष्टं समवसरणसाम्राज्यं देवैः कृतं। ततः खेदं

चकार—"अहो! पुत्रेण ईदृशी ऋद्धिः प्राप्ता, न कदापि मम कुशलक्षेमसमाचारो दत्तः। न कदापि पुत्रेण अहं स्मृता, अहं तु पुत्रदुःखेन अन्धा जाता। अहो! मम सरागता, अहो मम पुत्रस्य नीरागता!। न मे कोऽपि, नाहं कस्याऽपि।" इति अनित्यभावनया मोहकर्म क्षपयित्वा, मरुदेवी केवलज्ञानं प्राप्य सिद्धा। अत्र द्वयोः मातृपुत्रयोः श्लाघ्यता जाता। तथाहि—

श्रीऋषभदेवसमः सुपुत्रो न भूतो न भविष्यति, येन वर्षसहस्रेण भुवं भ्रमता क्षुधादिपरीषहदुःखं सहता यत् केवलरत्नं प्राप्तं तत् निजमातुः आनीय दत्तं। अथ च मातापि ईदृशी न भूता न भविष्यति। यतो यया निजपुत्रार्थं मुक्तिकन्यां शिवमन्दिरे स्थितां पुत्रात् पूर्वं निरीक्षितुं गता। ततो देवैः केवलमहिमा कृता। ततः शरीरं क्षीरसमुद्रे प्रवाहितं। भरतचक्रवर्ती समवसरणे गत्वा प्रभुं नत्वा उपविष्टः। श्रीभगवता च देशना दत्ता। तत्र भरतस्य मरीचिप्रमुखाः पञ्चशतपुत्राः सप्तशतपौत्राश्च प्रतिबुद्धाः दीक्षां जगृहुः। तेषां मध्यात् पुण्डरीकादयः चतुरशीतिगणधरा जाताः, ब्राह्मी च प्रवर्तिनी जाता। सुन्दरी तु सुरूपत्वात् 'स्त्रीरत्नं मम भविष्यति' इति भरतेन स्थापिता। कच्छमहाकच्छौ विना अन्ये तापसा भगवतः शिष्या जाताः। यस्य वृक्षस्य अधः श्रीभगवतः केवलज्ञानं उत्पन्नं, तस्य पूजा जाता। कालक्रमेण तस्य वृक्षस्य 'प्रयागवट' इति नाम जातम्।

अथ भरतेन गृहे आगत्य चक्ररत्नस्य अष्टाहिकामहोत्सवः चक्रे। अथ श्रीभरतः षट्खण्डसाधनाय सैन्येन

सह चलितः। अग्रे चक्ररत्नं सहस्रदेवाधिष्ठितं प्रस्थितं यावतीं भुवं गत्वा तिष्ठति, तावत् योजनानि भरत-सैन्यं चलितं, तदनुक्रमेण भरतो महीं षट्खण्डां षष्टिसहस्रवर्षैः साधयामास। तत्र गङ्गादेव्या सह वर्षसहस्रं विषयसुखानि बुभुजे। नमिविद्याधरपुत्री नवीनस्त्रीरत्नोत्पत्तौ। षष्टिवर्षसहस्राणि सुन्दर्या आचाम्लानि कृतानि, तेन दुर्बला, ततो भरतेन अनुज्ञाता सती सुन्दरी साध्वी जाता। भरतो अयोध्यायां समेतः तस्मिन् प्रस्तावे शस्त्रागारस्य अधिकारिणा विज्ञप्तं–"हे स्वामिन्! तव बान्धवाः तव आज्ञां न मन्यन्ते, ततः चक्ररत्नं आयुधशालायां न प्रविशति।" ततो भरतो दूतैः ज्ञापयामास–"यदि भवतां राज्यवाञ्छाऽस्ति तदा आगत्य मम सेवां कुरुत।" तदा तैः अष्टानवतिकुमारैः विचारितं–"तातेन अस्माकं राज्यं दत्तं, किमर्थं भरतं सेवामहे?।" ततः तातपार्श्वे गताः, स्वामिना च अङ्गारकारकदृष्टान्तेन वैतालिकाध्ययनश्रावणेन प्रतिबोध्य शिष्याः कृताः। तथापि चक्ररत्नं न प्रविशति, ततो भरतो मुख्यमन्त्रिणं विश्वम्भरं प्राह। ततः सोऽपि प्रणम्य प्राह–"हे स्वामिन्! सुरासुरनरेष्वपि तवाऽऽज्ञां यो न मन्यते स कोऽपि नास्ति, परं तव लघुभ्राता गर्वपर्वतो महाबली बाहुबली वर्तते, यस्य दोर्दण्डप्रचण्डप्रहारेण पर्वता अपि चूर्णीभवन्ति। ततो भवता समूलत एव छेदनीयो व्याधिवत्। ततो भरतेन सुवेगनामा दूतो बाहुबलिं प्रति प्रेषितः। प्रथमतः चलनसमये वस्त्रं कण्टके लग्नं १, ततो रथः स्खलितः २, संमुखं छिक्का जाता ३, दक्षिणे रासभोऽब्रवीत् ४ इत्यादिभिः अपशकुनैः वार्यमाणोऽपि महाटवीं समुल्लङ्घ्य गतो बहुलीदेशसीमस्थाने। ततो मार्गरजोधूसरं श्रमाकुलं

परदेशिनं दृष्ट्वा शालिक्षेत्रगोप्यः पानीयहारिकाश्च पृच्छन्ति स्म–"भो! कुतः समागतः?, कस्तव स्वामी?।" तेनोक्तं–"भरत" इति। ताभिः प्रोक्तं–"अस्माकं कञ्चुलिकायां एको भरतः १, धातुसम्बन्धी भरतः २, उदरे रोगविशेषो भरतः, ३, एतत् भरतत्रयं विना अस्माभिः भरतो राजा कर्णैः अपि न श्रुतः।" ततः सुवेगेन विचारितं–अहो आश्चर्यं! अहो बाहुबलेः प्राज्यराज्यसाम्राज्यं!।" ततो गतः तक्षशिलानगरीं स्वर्गपुरीसदृशीं पश्यन् राजद्वारे क्षणं तत्र द्वारे प्रतीहारैः निरुद्धोऽपि राजाज्ञया गतो बाहुबलिसमीपं, भ्रूसंज्ञया आसने स्थापितः पृष्टं–"भो! भरतस्य सपादकोटीपुत्रादीनां च कुशलं वर्तते?।" सुवेगः प्राह–"देव! यस्य सेवा यक्षलक्षैः क्रियते, यस्य च श्रीऋषभदेवः सांनिध्यं करोति, तस्य कुतोऽकुशलं?, परं तव सेवां विना राज्यं निष्फलं जानाति। ततो देहि स्वस्य सङ्गमं। न च ज्ञेयं इयन्ति दिनानि नाऽऽगतः, अथ कथं गच्छामि?। यतो वृद्धो भ्राता लघोः अपराधं सहिष्यति। कुलीनानां च ज्येष्ठो भ्राता पितृवत् मान्यः पूज्यश्च भवति।" ततो बाहुबलिः चमत्कृतो ज्ञातपरमार्थोऽवादीत्–"रे दूत! त्वं अवध्यः स्वस्वामिसेवाकार्यसावधानः, परं तव स्वामिनः स्नेहो ज्ञातो लघुभ्रातृराज्यहरणात्। परं मम तव स्वामिसेवायां प्रयोजनं नास्ति।" ततो दूतः प्राह–"भो! बाहुबले! यदि तव राज्येन देशेन कोशेन कुटुम्बेन जीवितव्येन च वाञ्छा वर्तते, तदा श्रीभरतं सेवस्व।" ततः कोपं कृत्वा सुवेगदूतो बाहुबलिना तिरस्कृतोऽपद्वारेण निष्कासितः। सोऽपि जीवं लात्वा गतो भरतसमीपं, द्विगुणवार्तया प्रकोपितो भरतः चतुरङ्गिण्या सेनया सह दापितभम्भानादो, मस्तके धृतछत्रो वीज्यमानचामरः

भरतेन बाहुबलिं प्रति दूतप्रेषणं

कृतबन्दिजनजयजयारवः चचाल। परं मार्गे किं कुर्वन्?। सेनया सरोवराणि शोषयन्, गजानां मदजलैः स्थलमपि सरः कुर्वन्, बहुलीदेशसीम्नि गतः सैन्यं च तत्र स्थापितवान्। ततो बाहुबलिरपि भरतं समागतं श्रुत्वा स्वसैन्यं लात्वा दत्तप्रयाणढक्कः सम्मुखं समागत्य स्थितः कियदन्तरे । अथ प्रथमं भरतचक्रवर्ती श्रीऋषभदेवं पूजयित्वा वज्रसंनाहं [बगतरं] धृत्वा यक्षसहस्राधिष्ठितं हस्तिरत्नं समारुरोह। पृष्ठतश्च सपादकोटिपुत्राः, एवं प्रपौत्रादयः, एवं सुभटकोटिपरिवृतः सुषेणसेनानीः, ततः ८४ लक्षहस्तिनः, ८४ लक्षा अश्वाः, ८४ लक्षा रथाः, ९६ कोटिपदातयो बहवो विद्याधरा यक्षाः किन्नराश्च चलन्ति स्म। ततो भरतेन रणपट्टं मस्तके बध्वा सुषेणसेनानीः अग्रे कृतः। ततो बाहुबलिरपि श्रीऋषभदेवं पूजयित्वा, सम्यक् प्रणम्य च वज्ररत्नमयं संनाहं परिधाय, सर्वं जगत् तृणवत् मन्यमानो भद्रहस्तिनं समारुरोह। पृष्ठतः त्रीणि लक्षाणि पुत्राः, एवं प्रपौत्राः, द्वादशसहस्रराजानो बहवो विद्याधराः सुभटाः पदातयश्च चेलुः । ततो बाहुबलिनाऽपि निजपुत्रः सिंहरथः सेनानीः कृतः। ततो द्वयोः सैन्ययोः सम्मुखं चलतोः पृथिवी कम्पिता। तारामण्डलं क्षुभितं, समुद्राः समुच्छलिताः। भरतसैन्ये १६ षोडशलक्षरणतूराणि वाद्यन्ति। एवं बाहुबलिसैन्येऽपि कियन्ति लक्षाणि उभयसैन्ययोः 'सिन्धुडारागे' आलाप्यमाने स्वामिभ्यां बहुपुत्कारे क्रियमाणे युद्धं लग्नं। अश्ववारैः समं अश्ववारा लग्नाः, एवं गजारूढैः गजारूढाः, रथिभिः समं रथिनः, पदातिभिः समं पदातयः, राजभिः समं राजानः, खेचरैः समं खेचराः, एवं न्याययुद्धे जायमाने सुषेणसेनानीः सिंहरथं सम्मुखं आगच्छन्तं दृष्ट्वा एवं अवोचत–

"अहं श्रीभरतस्य पदातिः अस्मि, त्वं च श्रीबाहुबलेः पुत्ररत्नं मम स्वामी, ततः त्वं प्रथमं शस्त्रं वाहय।" ततः सिंहरथेन वाहिते शस्त्रे क्रुद्धः सेनानीः खड्गं मुमोच। तावदन्तराले सिंहरथस्य भ्राता सिंहकेतुः तेन स्खलितः। ततो विशेषतः क्रुद्धः सुषेणसेनानीः, बाहुबलेः सेनां विलोडयन् तृणवत् भटान् अवगणयन् बाहुबलिपार्श्वे गतः। तावता अनिलवेगनामा विद्याधरो बाहुबलेः पादौ प्रणम्य संमुखं गतः एवं प्राह—"हे सुषेण! त्वं श्रीभरतस्य सेनानीः, अहं तु श्रीबाहुबलेः पदातिः सामान्योऽस्मि, परं मम बलं पश्य।" इत्युक्त्वा लग्नः। अथ तौ साक्षात् मल्लौ इव मदोन्मत्तहस्तिनौ इव अमिलतां। ततः शराशरि मुष्टामुष्टि युद्धं जातं। सुषेणः खड्गं गृहीत्वा सिंहरथस्य मस्तके यावत् मुञ्चति तावता सूर्योऽस्तं गतः। तत्र व्यवस्थात्रयं कृतमस्ति—श्रीऋषभदेवाज्ञा १ सूर्यास्तगमनं २ मेघवृष्टिश्च ३ एतत्त्रये जाते न कोऽपि युध्यति, न कोऽपि घातं मारयति। अथ सन्ध्यायां ये मृताः ते मृता एव। अथ ये किंचिज्जीवन्तः ते भरतसैन्ये काकिणीरत्नजलेन सज्जीक्रियन्ते। बाहुबलिसैन्ये तु सोमयशोहृदयाभरणजलेन। पुनः प्रभाते युद्धे जायमाने सुषेणसेनानीः अनिलवेगं दृष्ट्वा अग्निरिव ज्वलन् अनिलवेगं मारणाय आगतः। तावत् सिंहरथो मध्ये प्रविष्टः। अथ अनिलवेगः सर्वां सेनां समुल्लङ्घ्य यत्र भरतो हस्तिनां दुर्गत्रयं कृत्वा मध्ये सुखेन सुप्तोऽभूत् तत्र आगत्य हस्तिनः कर्करानि च आस्फालयन् आकाशे महारूपं विकुर्व्य सेनां व्यलोडयत्। ततो भरतो बहिरागत्य दुर्धरं विद्याधरं विज्ञाय 'मा मम सुरतभङ्गो भावी' इति चक्रं मुमोच। तत् दृष्ट्वा अनिलवेगः प्रणष्टः सन् यत्र यत्र याति तत्र तत्र चक्रं

आयाति । तदा लवणसमुद्रजलमध्ये वज्रपञ्जरं कृत्वा षण्मासीं स्थितः । ततो ग्रीवा बहिः निष्कासने चक्रेण मारितः । पुनरपि अनेके सुभटाः परस्परं युद्धं कुर्वन्ति स्म । पुनः सूर्ययशः-सोमयशसोः युद्धे जायमाने सूर्ययशाः कटकमुल्लङ्घ्य बाहुबलिसमीपे प्राप्तः उवाच-"आगच्छ बहिः, गृहाण शस्त्राणि, मारय मां ।" ततो बाहुबलिरपि विहस्य प्राह-"रे पुत्र ! तव पराक्रमेण अहं तुष्टोऽस्मि, इक्ष्वाकुवंशे ईदृशा एव साहसवन्तो भवन्ति । परं मम मुष्टिः दुर्धरा अस्ति । 'त्वं याहि याहि' इति देवैः वारितः । एवं द्वादशवर्षाणि युद्धं जातं, न कोऽपि हारितो, न कोऽपि जितः, परं मनुष्याणां संहारो जातो, रुधिरनद्यो व्यूढाः । ततो महाऽनर्थं जायमानं दृष्ट्वा सौधर्मेन्द्र-चमरेन्द्राभ्यां भरतः पूर्वं प्रतिबोधितः-"भो ! ऋषभस्वामिना जगतः सृष्टिः कृता, भवता तु जगतः संहारः प्रारब्धः ।" ततो भरतेनोक्तं-"अहं किं करोमि ? मम चक्रं न प्रविशति । बाहुबलिः आज्ञां न मन्यते, एवं चेत् तर्हि द्वाभ्यां एव योद्धव्यं, किमन्यसंहारेण ? ।" ततो भरतेन अङ्गीकृतं । ततो द्वावपि इन्द्रौ बाहुबलिसमीपे गतौ । विज्ञप्तिस्तुतिकरणपूर्वं प्रोक्तं अङ्गीकृतं च बाहुबलिनापि । ततो भरतेन वामहस्तकनिष्ठाङ्गुलिचालनात् खातिकापरतोऽन्योन्यशृङ्खलाबद्धकटकापकर्षणात् स्वबलपरीक्षा कृता । अथ इन्द्रादिदेवैः पञ्चयुद्धानि स्थापितानि-दृष्टियुद्ध १ वाग्युद्ध २ बाहुयुद्ध ३ मुष्टियुद्ध ४ दण्डयुद्धानि ५, एतैः पञ्चयुद्धैः यो जितः स जितो ज्ञेयः । अत्रान्तरे देवैः श्रीआदीश्वरशपथं दत्त्वा द्वयोः सैन्यं दूरे स्थापितम् ॥

अथ सुगन्धपानीयसंसिक्ते विकीर्णपञ्चविधपुष्पे रणे द्वावपि धृतसंनाहौ मुकुटाटोपविराजमानौ संमुखौ समा-

गतौ, देवाश्च आकाशे साक्षिणः स्थिताः पश्यन्ति। ततो द्वावपि भरत—बाहुबलीसम्मुखं धावितौ। परं कीदृशौ?। अनिमिषौ स्फाटिताक्षौ रक्तमुखौ महाशूरवीरौ अभङ्गभटौ काञ्चनवर्णौ शैलसमुन्नतौ अन्योन्यालोकनतत्परौ क्षणमात्रं जातौ। ततो भरतस्य नेत्रयोः सूर्यदर्शनादिवत् जलं समागतं, मिलिते नेत्रे। ततो देवैः पुष्पवृष्टिः कृता, प्रोक्तं च—"जितं बाहुबलिना १।" पुनः वाग्युद्धे प्रारब्धे महाघोरः कम्पितपर्वतो भरतेन सिंहनादः कृतः। ततो बाहुबलिनापि ब्रह्माण्डस्फोटकारकः क्ष्वेडानादः कृतः, तेन सिंहनादेन भरतनादः प्रतिहतः। भरतनादेन बाहुबलिः उत्कर्णो जातः। बाहुबलिनादेन च भरतेन कर्णौ पिहितौ। अत्रापि देवैः प्रोक्तं—"जितं बाहुबलिना २।" पुनः बाहुयुद्धं प्रारब्धं। भरतेन गोपुरस्य अर्गला इव बाहुः प्रसारितः। ततो बाहुबलिः कमलनालवत् बाहुं नामयति स्म। ततो बाहुबलिना बाहुः प्रसारितः। तं भरतो न अनामयत्, प्रत्युत शाखायां वानरवत् हिण्डोलितः। ततो देवैः प्रोक्तं—"जितं बाहुबलिना ३।" पुनः मुष्टियुद्धं प्रारब्धं। ततः कटीबद्धपटीकौ वीरकुञ्जरौ पादन्यासकम्पितधरणीतलौ कृतमहानादौ ताडितनिजभुजदण्डौ संमुखं आगतौ। ततो भरतेन मुष्टिना बाहुबलिस्ताडितो मस्तके आजानुमग्नः। पुनः निमीलितनेत्रः क्षणं स्थित्वा बाहुबलिः भरतं कन्दुकवत् आकाशे उच्छालयित्वा पतन्तं पुनरनुकम्पया भुजाभ्यां धृत्वा मस्तके प्रहारं ददौ। तेन भरतः आकण्ठं मग्नः। पुनर्देवैः प्रोक्तं—"जितं बाहुबलिना ४।" ततो दण्डयुद्धं प्रारब्धं, पूर्वं भरतेन लोहदण्डो मुक्तः, तेन बाहुबलिमुकुटः चूर्णीकृतः जीर्णभाण्डवत्, बाहुबलिरपि मेदिन्यां आजानु ममज्ज। ततो बाहुबलिनापि लोह-

दण्डो भृशं भ्रामयित्वा मुक्तः भरतसंनाहः चूर्णीकृतः। भरतोऽपि आकण्ठं मेदिन्यां निमज्जति स्म। ततो देवैः भणितं—“जितं बाहुबलिना ५।” ततो युद्धपञ्चकेऽपि बाहुबलिर्जितो भरतो हारितश्च। ततो भरतस्य शङ्का जाता—“किमयं चक्रवर्ती? न अहं?।” अथवा चक्रवर्तिद्वयं समुत्पन्नं। ततो लक्षयक्षाधिष्ठितं चक्रं हस्ते गृहीत्वा भ्रामयित्वा च प्रतिज्ञातो भ्रष्टेन भरतेन बाहुबलिशिरश्छेदाय मुक्तं, परं स्वगोत्रे चक्रं न प्रभवतीति बाहुबलिं प्रदक्षिणीकृत्य पुनः व्यावृत्य स्वहस्ते समागतं। ततो जातप्रचण्डकोपेन बाहुबलिना भरतमारणाय मुष्टिं उत्पाट्य जातसंवेगेन स्वमस्तके लोचः कृतः। देवैः पुष्पवृष्टिः कृता, जातो महामहोत्सवः। ततो भरतेन बहुविलापदुःखितेन बाहुबलिपुत्राय सोमयशसे तक्षशिलाराज्यं दत्त्वा अयोध्यानगर्यां समागतं। बाहुबलिरपि 'लघुभ्रातॄन् कथं वन्दिष्ये?' इति विचार्य, एकं वर्षं यावत् कायोत्सर्गे स्थितः। ततः श्रीऋषभदेवेन प्रतिबोधाय ब्राह्मी–सुन्दरीसाध्वीद्वयं मुक्तं। ताभ्यां प्रोक्तं—“हे वीर! गजात् अवतर” इति। वचनश्रवणात् जातसंवेगो वन्दनार्थं पदोत्पाटने जातकेवलज्ञानो, गतः केवलिपर्षदि। इति श्रीभरतबाहुबलियुद्धाधिकारः॥

अथ अन्यदा अष्टापदे भगवति समवसृते भरतः पञ्चशत(५००)शकटानि आहारेण भृत्वा आगत्य कुटुम्बसहितं श्रीभगवन्तं भोजनार्थं निमन्त्रयति स्म। श्रीभगवता प्रोक्तं—“राजपिण्डोऽयं १ आधाकर्मेदं २ अभ्याहृतं च ३” इति दूषणत्रयं साधूनां अग्राह्यमिति न गृहीतं। तत इन्द्रेण भरतस्य आश्वासनार्थं अवग्रहाः पृष्टाः। स्वामिना प्रोक्तं—देवेन्द्र १ राजेन्द्र २ गृहपति ३ सागारिक ४ साधर्मिकावग्रहाः पंच ५। तत्र इन्द्रेण स्वक्षेत्रं

साधूनां अनुज्ञातं १, भरतेनापि षट्खण्डाः अनुज्ञाताः २, भरतेन प्रोक्तं—"आहारेण किं करोमि?।" इन्द्रेण प्रोक्तं—"त्वत्तो ये गुणाधिकाः तान् भोजय।" ततो भरतः शुद्धश्रावकान् अभोजयत्। ते च भोजनं कृत्वा जितो भवान् वर्धते भयं तस्मात् 'मा हन मा हन' इति भरतं प्रति उक्तवन्तः। बहूनां मिलने काकिणीरत्नेन देवगुरुधर्मरूपरेखात्रयं च कृतवान्। ततो लोके यज्ञोपवीतं श्रावकाणां प्रसिद्धं जातम्॥

अथ एकदा भरतेन इन्द्रं पृष्टं—"मौलं रूपं दर्शय।" तत इन्द्रेण स्वस्य कनिष्ठा अङ्गुली दर्शिता। ततो भरतः तां तेजःपुञ्जज्वालामालाकुलां दृष्ट्वा चमत्कारं प्राप्य प्रतिवर्षं इन्द्रयष्टिमहोत्सवं चकार॥

अथ भगवतः परिवारसङ्ख्यामाह, तत्राह—

उसभस्स णं अरहओ कोसलिअस्स चउरासीई गणा, चउरासीई गणहरा हुत्था॥ २१३॥ उसभस्स णं अरहओ कोसलिअस्स उसभसेणपामुक्खाणं चउरासीइओ समणसाहस्सीओ उक्कोसिया समणसंपया हुत्था॥ २१४॥ उसभस्स णं अरहओ कोसलिअस्स बंभीसुंदरी-पामुक्खाणं अज्जियाणं तिण्णि सयसाहस्सीओ उक्कोसिया अज्जियासंपया हुत्था॥ २१५॥ उसभस्स णं अरहओ कोसलिअस्स सिज्जंसपामुक्खाणं समणोवासगाणं तिण्णि सयसाह-

स्सीओ पंच सहस्सा उक्कोसिया समणोवासगसंपया हुत्था ॥ २१६ ॥ उसभस्स णं अरहओ कोसलिअस्स सुभद्दापामुक्खाणं समणोवासियाणं पंचसयसाहस्सीओ चउपण्णं च सहस्सा उक्कोसिया समणोवासियाणं संपया हुत्था ॥ २१७ ॥ उसभस्स णं अरहओ कोसलिअस्स चत्तारि सहस्सा सत्त सया पण्णासा चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं जाव उक्कोसिया चउद्दसपुव्विसंपया हुत्था ॥ २१८ ॥ उसभस्स णं अरहओ कोसलिअस्स नव सहस्सा ओहिनाणीणं उक्कोसिया समणसंपया हुत्था ॥ २१९ ॥ उसभस्स णं अरहओ कोसलिअस्स वीस सहस्सा केवलनाणीणं उक्कोसिया केवलनाणि संपया हुत्था ॥ २२० ॥ उसभस्स णं अरहओ कोसलिअस्स वीस सहस्सा छच्च सया वेउव्वियाणं उक्कोसिया समणसंपया हुत्था ॥ २२१ ॥ उसभस्स णं अरहओ कोसलिअस्स बारस सहस्सा छच्च सया पण्णासा विउलमईणं अड्ढाइज्जेसु दीवसमुद्देसु सन्नीणं पंचिंदियाणं पज्जत्तगाणं मणोगए भावे जाणमाणाणं पासमाणाणं उक्कोसिआ विउलमइसंपया हुत्था ॥ २२२ ॥ उसभस्स णं अरहओ कोसलिअस्स

बारस सहस्सा छच्च सया पण्णासा वाईणं संपया हुत्था ॥ २२३ ॥ उसभस्स णं अरहओ कोसलिअस्स वीसं अंतेवासिसहस्सा सिद्धा, चत्तालीसं अज्जियासाहस्सीओ सिद्धाओ ॥ २२४॥ उसभस्स णं अरहओ कोसलिअस्स बावीस सहस्सा नव सया अणुत्तरोववाइयाणं गइकल्लाणाणं जाव भद्दाणं उक्कोसिआ० संपया हुत्था ॥ २२५ ॥

व्याख्या–"उसभस्स णं अरहओ" श्रीऋषभस्य (८४) चतुरशीतिर्गणा गणधराश्च अभवन् १, ऋषभदेवस्य ऋषभसेनप्रमुखाणां चतुरशीतिसहस्राः (८४०००) श्रमणानां संपदा अभवन् २, ऋषभस्य ब्राह्मीसुन्दरीप्रमुखाणां त्रयो लक्षाः (३०००००) आर्यिकाणां उत्कृष्टाः संपदा अभवन् ३, ऋषभस्य श्रेयांसप्रमुखाणां त्रयो लक्षाः पञ्चसहस्राश्च (३०५०००) श्रावकाणां सं० ४, ऋषभस्य सुभद्राप्रमुखाणां पञ्चलक्षाः चतुःपञ्चाशत्सहस्राश्च (५५४०००) श्राविकाणां सं० ५, ऋषभस्य चतुःसहस्राः सप्तशतानि पञ्चाशच्च (४७५०) चतुर्दशपूर्विकाणां सं० ६, ऋषभस्य नवसहस्राः (९०००) अवधिज्ञानिनां सं० ७, ऋषभस्य विंशतिसहस्राः (२००००) केवलज्ञानिनां सं० ८, ऋषभस्य विंशतिसहस्राः षट्शतानि (२०६००) च वैक्रियलब्धिधराणां सं० ९, ऋषभस्य द्वादशसहस्राः षट्शतानि पञ्चाशच्च (१२६५०) विपुलमतीनां अर्धतृतीयद्वीपस्थित–संज्ञिपञ्चेन्द्रियाणां पर्याप्तानां मनोगतभावान्, ज्ञायमानानां साधूनां सं० १०, ऋषभस्य द्वादशसहस्राः षट्शतानि

पञ्चाशत (१२६५०) वादिनां सं० ११, ऋषभस्य विंशतिसहस्राः (२००००) अन्तेवासिनां सिद्धाः १२, ऋषभस्य चत्वारिंशत्सहस्राः (४००००) आर्यिकाणां सिद्धाः १३, ऋषभस्य द्वाविंशतिसहस्राः नवशतानि (२२९००), अनुत्तरोपपातिकानां गतिकल्याणकाणां सं० १४ ॥

अथ श्रीभगवतोऽन्तकृद्भूमिविचारं आह—

उसभस्स णं अरहओ कोसलिअस्स दुविहा अंतगडभूमी हुत्था, तं जहा—जुगंतगडभूमी य परियायंतगडभूमी य, जाव असंखिज्जाओ पुरिसजुगाओ जुगंतगडभूमी, अंतोमुहुत्तपरिआए अंतमकासी ॥ २२६ ॥

व्याख्या—"उसभस्स णं अरहओ" ऋषभस्य द्वेधा अन्तकृद्भूमिः—युगान्तकृद्भूमिः पर्यायान्तकृद्भूमिश्च । यावत् असङ्ख्येयानि पुरुषयुगानि भगवतो वंशे पट्टानुक्रमेण सिद्धानि इति युगान्तकृद्भूमिः । अन्तर्मुहूर्तपर्याये अन्तं अकार्षीत् । भगवतः केवलज्ञाने समुत्पन्ने अन्तर्मुहूर्तेन मरुदेवी स्वामिनी सिद्धा । इति पर्यायान्तकृद्भूमिः ॥

अथ भगवतः मोक्ष—कल्याणकं प्राह—

तेणं कालेणं तेणं समएणं उसभे णं अरहा कोसलिए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसित्ताणं तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसित्ताणं तेसीइं पुव्वसयसहस्साइं अगारवा-

समज्झे वसित्ताणं एगं वाससहस्सं छउमत्थपरिआयं पाउणित्ता एगं पुव्वसयसहस्सं वाससहस्सूणं केवलिपरिआयं पाउणित्ता पडिपुण्णं पुव्वसयसहस्सं सामण्णपरियागं पाउणित्ता चउरासीइं पुव्वसयसहस्साइं सव्वाउयं पालइत्ता खीणे वेयणिज्जाउयनामगुत्ते इमीसे ओसप्पिणीए सुसमदूसमाए समाए बहुविइक्कंताए तीहिं वासेहिं अद्धनवमेहि य मासेहिं सेसेहिं जे से हेमंताणं तच्चे मासे पंचमे पक्खे माहबहुले, तस्स णं माहबहुलस्स (ग्रं. ९००) तेरसीपक्खे णं उप्पिं अट्ठावयसेलसिहरंसि दसहिं अणगारसहस्सेहिं सद्धिं चोद्दसमेणं भत्तेणं अपाणएणं अभीइणा नक्खत्तेणं जोगमुवागएणं पुव्वण्हकालसमयंसि संपलियंकनिसण्णे कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ २२७ ॥

व्याख्या–"तेणं कालेणं" इति सूत्रस्य व्याख्यानं सुगमं, तथापि अर्थलापनिका यथा–तस्मिन् काले तस्मिन् समये ऋषभदेवो विंशतिपूर्वलक्षाणि कुमारवासमध्ये स्थित्वा, त्रिषष्टिपूर्वलक्षाणि राज्यवासमध्ये स्थित्वा, त्र्यशीतिपूर्वलक्षाणि गृहस्थावासमध्ये स्थित्वा, एकं वर्षसहस्रं छद्मस्थपर्यायं प्रपाल्य, एकेन वर्षसहस्रेण ऊनं एकं पूर्वलक्षं केवलपर्यायं प्रपाल्य, संपूर्णपूर्वलक्षं श्रामण्यपर्यायं साधुत्वं प्रपाल्य, चतुरशीतिपूर्वलक्षाणि सर्वायुः

प्रपाल्य, क्षीणे वेदनीयायुर्नामगोत्रे, अमुष्याः अवसर्पिण्याः सुषमदुःषमायाः समायाः त्रिभिः वर्षैः अर्धनवमैश्च मासैः नवाशीतिपक्षैः इत्यर्थः । शेषे सति-ऊने सति शीतकालस्य तृतीये मासे पञ्चमे पक्षे एतावता माघवदित्रयोदशीदिने [१३] अष्टापदपर्वतोपरि दशभिः साधुसहस्रैः सार्धं चतुर्दशभक्तेन उपवासषट्केन अपानकेन अभिजिदूनक्षत्रे चन्द्रेण समं योगं वर्तमाने पूर्वाह्णकालसमये संपल्यङ्कनिषण्णः कालगतो व्युत्क्रान्तो यावत् सर्वदुःखप्रक्षीणो जातः, देवैः श्रीऋषभस्य १ गणधराणां २ साधूनां ३ च चितात्रयं कृत्वा संस्कारः कृतः ।

अथ अन्तरकालं आह—

उसभस्स णं अरहओ कोसलियस्स कालगयस्स जाव सव्वदुक्खप्पहीणस्स तिण्णि वासा अद्धनवमा य मासा विइक्कंता, तओऽवि परं एगा सागरोवमकोडाकोडीतिवासअद्धनवमासाहियबायालीसाए वाससहस्सेहिं ऊणिया विइक्कंता, एयंमि समए समणे भगवं महावीरे परिनिवुडे, तओऽवि परं नव वाससया विइक्कंता, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ २२८ ॥ इति ॥

व्याख्या-"उसभस्स णं अरहओ" ऋषभस्य मोक्षप्राप्तस्य त्रयो वर्षाः अर्धनवमासाः सार्धाष्टमासा इत्यर्थः व्युत्क्रान्ता=व्यतीता इत्यर्थः । ततः परं एका सागरोपमकोटाकोटिः । परं कीदृशी ? । द्विचत्वारिंशद्वर्ष-

सहस्रैः, त्रिभिः वर्षैः अर्धनवमैः मासैश्च ऊना एतस्मिन् समये श्रमणो भगवान् महावीरो निर्वृतो=मोक्षं गतः। ततः परं नवशतवर्षाणि अशीत्यधिकानि (९८०) गतानि, तदा अयं आगमः पुस्तकारूढो जातः। एतेन कृत्वा अन्तरकालः॥

श्रीआदिनाथस्य पञ्चकल्याणकानि च व्याख्यातानि, अग्रे स्थविरावली व्याख्यास्यते स वर्तमानयोगः। ततोऽस्मिन् पर्वणि समागते एके भव्यजीवा दानं ददति, एके शीलं पालयन्ति, एके तपः तपन्ति, एके भावनां भावयन्ति, स शासनाधीश्वरश्रीमहावीरस्य प्रसादः, ततः परम्परया श्रीसुधर्मस्वामी श्रीजम्बूस्वामी श्रीप्रभवस्वामी तावद् यावत् श्रीवज्रस्वामी, ततो गच्छपरम्परया वर्तमानभट्टारकस्य आज्ञया श्रीसङ्घः प्रवर्ततां॥ इति॥

व्याख्यानं कल्पसूत्रस्य, सप्तमं सुगमं स्फुटम्। शिष्यार्थं पाठकाश्चक्रुः, समयादिमसुन्दराः॥ १॥

इति श्रीकल्पसूत्रस्य सप्तमं व्याख्यानं श्रीसमयसुन्दरोपाध्यायविरचितं सम्पूर्णम्॥

## अथ अष्टमं व्याख्यानम् ॥

अथ अष्टमं व्याख्यानं प्रारभ्यते । तत्र पूर्वं प्रथमवाचनायां श्रीपञ्चपरमेष्ठिनमस्कारो व्याख्यातः । पुनः श्रीमहावीरदेवाधिदेवस्य संक्षेपवाचनया पञ्चकल्याणकानि व्याख्यातानि १। द्वितीयवाचनायां च श्रीमहावीरदेवस्य च्यवनकल्याणकं गर्भापहारकल्याणकं च व्याख्यातं २। तृतीयवाचनया च चतुर्दशस्वप्ना व्याख्याताः ३। चतुर्थवाचनया च श्रीमहावीरदेवस्य जन्मकल्याणकं व्याख्यातं ४। पञ्चमवाचनया च श्रीमहावीरदेवस्य दीक्षा १ ज्ञान २ निर्वाण ३ कल्याणकत्रयं व्याख्यातं ५। षष्ठवाचनया च श्रीपार्श्वनाथ-श्रीनेमिनाथतीर्थङ्करयोः पञ्चकल्याणकानि व्याख्यातानि ६। सप्तमवाचनायां च अन्तरकालः श्रीऋषभदेवस्य पञ्चकल्याणकानि व्याख्यातानि ७ ॥

अथ अष्टमवाचनया स्थविरावली व्याख्यास्यते, तत्राह—

**तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स नव गणा, इक्कारस गणहरा हुत्था**

॥ १ ॥ से केणट्ठेणं भंते ! एवं वुच्चइ—समणस्स भगवओ महावीरस्स नव गणा, इक्कारस गणहरा हुत्था ? ॥ २ ॥ समणस्स भगवओ महावीरस्स जिट्ठे इंदभूई अणगारे गोयमगुत्ते णं पंच समणसयाइं वाएइ, मज्झिमए अग्गिभूई अणगारे गोयमगुत्ते णं पंच समणसयाइं वाएइ, कणीअसे अणगारे वाउभूई गोयमगुत्ते णं पंच समणसयाइं वाएइ, थेरे अज्जवियत्ते भारद्दाए गुत्तेणं पंच समणसयाइं वाएइ, थेरे अज्जसुहम्मे अग्गिवेसायणे गुत्तेणं पंच समणसयाइं वाएइ, थेरे मंडियपुत्ते वासिट्ठे गुत्तेणं अद्धुट्ठाइं समणसयाइं वाएइ, थेरे मोरिअपुत्ते कासवे गुत्तेणं अद्धुट्ठाइं समणसयाइं वाएइ, थेरे अकंपिए गोयमे गुत्तेणं—थेरे अयलभाया हारिआयणे गुत्तेणं, पत्तेयं एते दुण्णिवि थेरा तिण्णि तिण्णि समणसयाइं वाएंति, थेरे अज्जमेइज्जे—थेरे अज्जपभासे, एए दुण्णिवि थेरा कोडिन्नागुत्तेणं तिण्णि तिण्णि समणसयाइं वाएंति । से तेणट्ठेणं अज्जो ! एवं वुच्चइ—समणस्स भगवओ महावीरस्स नव गणा, इक्कारस गणहरा हुत्था ॥ ३ ॥ सव्वेऽवि णं एते समणस्स भगवओ महावीरस्स एक्कारसवि गणहरा

दुवालसंगिणो चउदसपुव्विणो समत्तगणिपिडगधारगा रायगिहे नगरे मासिएणं भत्तेणं अपाणएणं कालगया जाव सव्वदुक्खप्पहीणा ॥ थेरे इंदभूई थेरे अज्जसुहम्मे य सिद्धिगए महावीरे पच्छा दुण्णिवि थेरा परिनिव्वुया, जे इमे 'अज्जत्ताए' समणा निग्गंथा विहरंति एए णं सव्वे अज्जसुहम्मस्स अणगारस्स आवच्चिज्जा, अवसेसा गणहरा निरवच्चा वुच्छिन्ना ॥ ४ ॥

व्याख्या—"तेणं कालेणं तेणं समएणं" तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो श्रीमहावीरस्य नव गणाः एकादशगणधराश्च अभवन्। "से केण त्ति" "से" शब्दो अथशब्दार्थः। केन अर्थेन? कारणेन। हे भदन्त! एवं उच्यते गणा नव, गणधरा एकादश कथं? यतो "जावइआ जस्स गणा तावइआ तस्स गणहरा इति" वचनात्, यस्य तीर्थङ्करस्य यावन्तो गणाः भवन्ति तावन्तः तस्य गणधरा भवन्ति, सर्वजिनानां गणगणधरमानयोः तुल्यत्वेऽपि श्रीवीरस्य एवं कथं? तत्रोत्तरं आह—अकम्पिताचलभ्रात्रोः एकरूपैव वाचना जाता। एवं मेतार्यप्रभासयोः अपि, यत एकवाचनाधारयति [वाचयति] समुदायो हि गणः इति नवगणाः। श्रीमहावीरस्य ज्येष्ठ इन्द्रभूतिनामा अनगारो गौतमगोत्रीयः स पञ्चशतश्रमणान् वाचयति=वाचनां ददाति १, मध्यमोऽग्निभूतिनामा अनगारो गौतमगोत्रीयः सोऽपि पञ्चशतश्रमणान् वाचयति २, कनिष्ठो—लघुः वायुभूतिनामा गौतमगोत्रीयः, सोऽपि पञ्चशतश्रमणान् वाचयति। एते त्रयोऽपि भ्रातरः ३, चतुर्थ आर्यव्यक्तनामा

भारद्वाजगोत्रीयः, सोऽपि पञ्चशतश्रमणान् वाचयति ४, पञ्चमः सुधर्मस्वामी अग्निवैश्यायनगोत्रीयः, सोऽपि पञ्चशतश्रमणान् वाचयति ५, षष्ठो मण्डिकपुत्रो वासिष्ठगोत्रीयः, मण्डिकश्चासौ पुत्रश्च धनदेवस्य मण्डिकपुत्रः, केचित्तु एवं व्याख्यानयन्ति । मण्डित इति धनदेवस्य नामान्तरं, तस्य पुत्रो मण्डितपुत्रः, सः सार्धत्रिशतश्रमणान् वाचयति ६, सप्तमो मौर्यपुत्रः काश्यपगोत्रीयः, सोऽपि सार्धत्रिशतश्रमणान् वाचयति। अत्र मण्डिक १ मौर्यपुत्रयोः २ एकमातृकत्वेन भ्रात्रोरपि यत् भिन्नगोत्राभिधानं तत् पृथक् जनकापेक्षया, यतो मण्डिकस्य पिता धनदेवो, मौर्यपुत्रस्य तु सूर्यः [मौर्यः] पिता, माता तु द्वयोरपि एकैव विजयदेवी, एवं विरोधोऽपि न, यतः तत्र देशे एकस्मिन् पत्यौ मृते द्वितीयपतिकरणे न दोषाय इति वृद्धाः ७ अष्टमोऽकम्पितो गौतमगोत्रीयः ८ अचलभ्राता नवमो हार्यायणगोत्रीयः, एतौ द्वावपि गणधरौ त्रिशतश्रमणान् त्रिशतश्रमणान् वाचयतः ९। दशमो मेतार्यः एकादशमः प्रभासः, एतौ द्वावपि कौण्डिन्यगोत्रीयौ त्रिशतश्रमणान् त्रिशतश्रमणान् ३०० वाचयतः ११, तेन कारणेन नव गणा एकादश गणधराश्च, एतेषां परिवारः इयान् जातः—चत्वारः सहस्राः चतुःशतानि च (४४००)। एते एकादश गणधराः कीदृशाः?, इत्याह—एते सर्वेऽपि गणधराः वृद्धा द्वादशाङ्गिनः—आचारांगादिदृष्टिवादान्तश्रुतवन्तः। कथं?। स्वयं तेषां प्रणयनात्। पुनः कीदृशाः?। चतुर्दशपूर्विणः, पूर्वाणां अङ्गान्तर्गतत्वेऽपि पूर्वं प्रणयनात् अनेकविद्यामन्त्राद्यर्थमयत्वात् महाप्रमाणत्वाच्च प्राधान्यख्यापनार्थं पुनः उपादानं। पुनः कीदृशाः?। द्वादशाङ्गित्वं सूत्रमात्रेऽपि स्यात्, अत आह—समस्तगणिपिटकधारकाः=गणोऽस्या-

महाविदेहक्षेत्रे राजकुमारेण शिवेन वैराग्यं प्राप्य, द्वादशवर्षाणि महत्तपः कृतं, तथाहि—उपवासद्वयं कृत्वा पारणे आचाम्लं, एवं द्वादशवर्षाणि निरन्तरं तपः कृतं, तस्य प्रभावेण पञ्चमे ब्रह्मदेवलोके महर्द्धिकोऽभूत्। अथ अयं देवः सप्तमे दिने देवलोकतः च्युत्वा राजगृहनगरे ऋषभदत्तः श्रेष्ठी, धारिणी भार्या, तयोः पुत्र उत्पत्स्यते। ततः तथैव उत्पन्नः जन्मोत्सवे कृते गर्भस्थे अस्मिन् मात्रा जम्बूवृक्षो दृष्टः, ततो "जम्बूकुमार" इति नाम दत्तं, क्रमात् यौवनावस्थां प्राप्तः, परं श्रीसुधर्मस्वामिपार्श्वे धर्मं श्रुत्वा, वैराग्यवान् जातः। मातृपितृप्रमुखः आग्रहात् नीरागोऽपि अष्टकन्यापाणिग्रहणं मेने। एकदा श्रीसुधर्मस्वामिदेशनां श्रुत्वा दीक्षाया आदेशग्रहणार्थं गृहे आगच्छन् प्रतोल्यां यन्त्रादागतप्रस्तरात् मरणमागतं टालयित्वा, पश्चात् निवृत्य श्रीसुधर्मस्वामिपार्श्वे ब्रह्म-व्रतं ललौ। तस्मिन् गृहीतेऽपि मातृपितृप्रमुखाग्रहात् पाणिग्रहणं चक्रे। रात्रौ ता अष्टौ अपि कन्याः प्रति-बोधयता तालोद्घाटिनीविद्याभृत् चौर्यार्थं प्रविष्टः प्रभवनामा चौरोऽपि प्रतिबोधितः। प्रभाते जम्बूकुमारो दीक्षाग्रहणाय उत्थितः तदा अष्टौ कन्याः ८, अष्टौ तासां मातरः १६, अष्टौ तासां पितरः २४, श्रीजम्बूस्वा-मिनो मातापितरौ एवं २६, चौराणां पञ्चशत्या—सह प्रभवः ५०१, सर्वे ५२७ एतैः सह जम्बूकुमारो दीक्षां ललौ, मुक्तिं च गतः। येन जम्बूकुमारेण नवपरिणीता अष्टौ कन्याः, नवनवतिस्वर्णकोट्यश्च त्यक्ताः। पुनः चरमकेवली जातः। (१६) षोडश वर्षाणि गृहस्थत्वे, विंशतिश्च (२०) छाद्मस्थ्ये, चतुश्चत्वारिंशत् (४४) केवलित्वे इति अशी-ति (८०) वर्षाणि सर्वायुः प्रपाल्य श्रीमहावीरात् चतुःषष्टिवर्षैः सिद्धः। यस्मिन् मुक्तिं गते एतानि दश

**सिज्जंभवे थेरे अंतेवासी मणगपिया वच्छसगुत्ते ४, थेरस्स णं अज्जसिज्जंभवस्स मणगपिउणो वच्छसगुत्तस्स अज्जजसभद्दे थेरे अंतेवासी तुंगियायणसगुत्ते ५ ॥ ५ ॥**

अथ व्याख्या लापनिकामात्रेण—"समणे भगवं महावीरे" श्रीमहावीरस्य अन्तेवासी अग्निवैश्यायनगोत्रीयः श्रीसुधर्मस्वामी १, श्रीसुधर्मस्वामिनोऽन्तेवासी काश्यपगोत्रीयः जम्बूस्वामी २, श्रीजम्बूस्वामिनोऽन्तेवासी कात्यायनगोत्रीयः श्रीप्रभवस्वामी ३, श्रीप्रभवस्वामिनोऽन्तेवासी मनकपिता वत्सगोत्रीयः शय्यम्भवः ४, शय्यम्भवस्य अन्तेवासी तुङ्गियायनगोत्रीयो यशोभद्रः ५, अथ एतेषां पञ्चानां स्थविराणां सम्बन्धः अनुक्रमेण एवं ज्ञेयाः, तथाहि—अथ श्रीवीरपट्टे श्रीसुधर्मस्वामी, तस्य सम्बन्धोऽयं, तथाहि—कुल्लागसन्निवेशे धम्मिल्लनामा ब्राह्मणः, तस्य भार्या भद्दिला, तयोः पुत्रः सुधर्मा, १४ चतुर्दशविद्यानिधानं पञ्चाशत् वर्षान्ते श्रीवीरसमीपे दीक्षा ५०, त्रिंशद्वर्षाणि यावद्वीरचरणकमलसेवा ८०, द्वादशवर्षाणि श्रीवीरमोक्षात् छद्मस्थावस्थायां स्थितः ९२, अष्टौ वर्षाणि केवलपर्यायः १००, एवं सर्वं वर्षशतं आयुः प्रपाल्य श्रीजम्बूस्वामिनं स्वकीयपट्टे स्थापयित्वा मोक्षं गतः ॥ १ ॥ अथ—श्रीजम्बूस्वामिचरितमिदम्—एकदा श्रीमहावीरदेवसमवसरणे अनेकदेवचतुरग्रदेवीसहितो महातेजःपुञ्जविराजमानो देवो वीरं वन्दितुं समागतः, तदा श्रेणिकेन पृष्टं—"हे स्वामिन्! अस्य देवस्य एतादृशी विस्मयकारिणी अधिका कान्तिः कथं? ।" ततः स्वामिना प्रोक्तं—"हे श्रेणिक! अनेन देवेन पूर्वभवे

पश्चाशीति (८५) वर्षाणि पालयित्वा श्रीशय्यम्भवं स्वस्य पट्टे स्थापयित्वा स्वर्गं जगाम ॥ इति प्रभवस्वामिसम्बन्धः ॥ ३ ॥ अथ प्रभवस्वामिना श्रीशय्यम्भवः सूरिपदे स्थापितः, पश्चात् सगर्भा शय्यम्भवेन भार्या मुक्ताऽभूत्, तया पुत्रो जनितः, तस्य "मनक" इति नाम जातं । स लेखकशालायां पठन् कलिकरणे कुसिकरैः निःपितृक इति प्रोक्तं । ततो दुःखं कृत्वा मातृपार्श्वे आगत्य पितृनाम पृष्टं, तया प्रोक्तं–"शय्यम्भवः ।" तेनोक्तं–"कुत्राऽस्ति ? ।" मात्रा दीक्षास्वरूपं प्रोक्तं । ततो गतः तत्र नगरे गुरोः बहिर्गतस्य एकान्ते मिलितो मनकः, पृष्टं मनकेन–"अत्र शय्यम्भवसूरिः श्रूयते, स कुत्रास्ति ? ।" गुरुणा प्रोक्तं–"किं प्रयोजनं ? ।" मनकेन स्वकीयं स्वरूपं आगमनप्रयोजनं च ज्ञापितं । ततो गुरुः प्रकारान्तरेण आत्मानं ज्ञापयामास, संसारस्य असारतादर्शनेन प्रतिबोधितो, बभाषे–"मम दीक्षां देहि ।" गुरुः वक्ति–"यदि पितृसम्बन्धं साधूनां न ज्ञापयसि, तदा व्रतं ददामि ।" मनकेन प्रतिपन्नं, ततो दीक्षा दत्ता । गुरुणा स्तोकं आयुः ज्ञात्वा सिद्धान्तात् उद्धृत्य श्रीदशवैकालिकं कृत्वा मनकस्य पठनाय दत्तं, षण्मासेन पठितं । ततो मनकः चारित्रं आराध्य स्वर्गं गतः । श्राद्धा अग्निसंस्कारं कृत्वा गुरुपार्श्वे आगताः, तदा यशोभद्रः पार्श्वेऽभूत्, गुरुभिः उपदेशो दत्तः । तदा गुरोः नेत्रयोः अश्रूणि पेतुः । ततो यशोभद्रेण सङ्घेन च प्रोक्तं–"हे पूज्याः ! युष्माकं अनेके साधवः परलोकं गच्छन्ति, परं कदाऽपि अश्रुपातो न दृष्टः, सांप्रतं कथं अश्रुपातः ? ।" गुरुः प्राह–"मोहात् । को मोहः ? ।" गुरुणा प्रोक्तं–"अयं मनकोऽस्माकं पुत्रो भवति ।" साधुभिः प्रोक्तं–"कथं न ज्ञापितः पुत्रसम्बन्धः ? ।"

उत्तमवस्तूनि विच्छेदं गतानि, तथाहि–मनःपर्यायज्ञानं १, परमावधिज्ञानं २, पुलाकलब्धिः ३, आहारकशरीरं ४, क्षपकश्रेणिः ५, उपशमश्रेणिः ६, जिनकल्पिमार्गः ७, परिहारविशुद्धिचारित्रं, सूक्ष्मसम्परायचारित्रं, यथाख्यातचारित्रं च इति संयमत्रिकं ८, केवलज्ञानं ९, सिद्धिगमनं च १० इति। श्रीजम्बूस्वामिनो अहो अधिकं सौभाग्यं! यतोऽयं पतिं प्राप्य अद्यापि शिवश्रीः अन्यं पतिं न वाञ्छति। पुनः जम्बूसमः कोऽपि ईदृशः कोट्टपालो न भूतो न भविष्यति, यः चौरानपि मोक्षमार्गवाहकान् साधून् अकरोत्। पुनः जम्बूकुमारोऽपि वणिग्जातित्वात् महालोभी यतो मुक्तिनगरे प्रविश्य अनन्तसौख्यं प्राप्य अन्यागमनिरोधाय मुक्तौ कपाटं दत्तवान्।" इति श्रीजम्बूस्वामिसम्बन्धः ॥२॥ श्रीजम्बूस्वामिना श्रीप्रभवः सूरिपदे स्थापितः। अथ श्रीप्रभवस्वामिना गच्छमध्ये सङ्घमध्ये च उपयोगो दत्तः। कस्य सूरिपदं दीयते? गच्छे पट्टयोग्यं साधुं अदृष्ट्वा, परतीर्थे राजगृहे यज्ञं कुर्वन् शय्यम्भवभट्टो दृष्टः। ततः श्रीप्रभवसूरिणा साधुद्वयं शिक्षयित्वा मुक्तं, तेन तत्र गत्वा प्रोक्तं–"अहो! कष्टं, अहो कष्टं! तत्त्वं न ज्ञायते पुनः।" शय्यम्भवभट्टेन श्रुतं। ततः तत्त्वज्ञानपृच्छार्थं गुरुपार्श्वे गत्वा पृष्टो गुरुः खड्गं उत्पाट्य–"तत्त्वं वद।" गुरुणा विचारितं–"शिरश्छेदे तत्त्वं वक्तव्यं, न दोषः। भो! यज्ञकीलकस्य अधोभागे श्रीशान्तिनाथप्रतिमा शान्तिकरी वर्तते, तेन शान्तिः जायते।" इति उक्त्वा स्तम्भमुत्पाट्य दर्शिता प्रतिमा। ततो जातजैनधर्मरुचिः गुरुपार्श्वे गत्वा धर्मं श्रुत्वा दीक्षां जग्राह शय्यम्भवभट्टः। अथ श्रीप्रभवस्वामी गृहवासे त्रिंशत् (३०) वर्षाणि छद्मस्थावस्थायां च पञ्चपञ्चाशत् (५५) वर्षाणि सर्वं आयुः

गुत्ते ११, थेरस्स णं अज्जदिन्नस्स गोयमसगुत्तस्स अंतेवासी थेरे अज्जसीहगिरी जाइस्सरे कोसियगुत्ते १२, थेरस्स णं अज्जसीहगिरिस्स जाइस्सरस्स कोसियगुत्तस्स अंतेवासी थेरे अज्जवइरे गोयमसगुत्ते १३, थेरस्स णं अज्जवइरस्स गोयमसगुत्तस्स अंतेवासी थेरे अज्जवइरसेणे उक्कोसियगुत्ते १४, थेरस्स णं अज्जवइरसेणस्स उक्कोसिअगुत्तस्स अंतेवासी चत्तारि थेरा—थेरे अज्जनाइले १ थेरे अज्जपोमिले २ थेरे अज्जजयंते ३ थेरे अज्जतावसे ४, १५, थेराओ अज्जनाइलाओ अज्जनाइला साहा निग्गया, थेराओ अज्जपोमिलाओ अज्जपोमिला साहा निग्गया, थेराओ अज्जजयंताओ अज्जजयंती साहा निग्गया, थेराओ अज्जतावसाओ अज्जतावसी साहा निग्गया ४ इति ॥ ६ ॥

व्याख्या—"संखित्तवायणाए" संक्षेपवाचनया कृत्वा आर्ययशोभद्रात् अग्रतः एवं स्थविरावली भणिता, तथाहि—श्रीआर्ययशोभद्रसूरेः तुङ्गिकायनगोत्रस्य द्वौ शिष्यौ—एकः संभूतिविजयो माढरगोत्रीयः १ द्वितीयो भद्रबाहुः प्राचीनगोत्रीयः २ ॥ भद्रबाहुसम्बन्धो यथा—

प्रतिष्ठानपुरवासिनौ वराहमिहर १ श्रीभद्रबाहु २ नामानौ द्वौ भ्रातरौ ब्राह्मणौ अभूतां, श्रीयशोभद्रसूरि-

गुरुणा प्रोक्तं—"यदि पुत्रसम्बन्धो ज्ञाप्यते तदा न कोऽपि वैयावृत्यं कारयति । तस्य अकरणे च कथं आत्मनिस्तारः स्यात्? ।" ततो गुरुभिः दशवैकालिकं सिद्धान्ते पश्चात् क्षिप्यमाणं सङ्घेन निवारितं । ततः श्रीशय्यम्भवसूरयः स्वकीयपट्टे श्रीयशोभद्रसूरिं स्थापयित्वा, श्रीवीरात् अष्टानवति ९८ वर्षैः स्वर्गं जग्मुः ।

अथ यशोभद्रसूरितोऽग्रे संक्षेपवाचनया स्थविरावली कथ्यते, तत्राह—

संखित्तवायणाए अज्जजसभद्दाओ अग्गओ एवं थेरावली भणिया, तं जहा—थेरस्स णं अज्जजसभद्दस्स तुंगियायणसगुत्तस्स अंतेवासी दुवे थेरा—थेरे अज्जसंभूअविजए माढरसगुत्ते, थेरे अज्जभद्दबाहू पाईणसगुत्ते ६, थेरस्स णं अज्जसंभूअविजयस्स माढरसगुत्तस्स अंतेवासी थेरे अज्जथूलभद्दे गोयमसगुत्ते ७, थेरस्स णं अज्जथूलभद्दस्स गोयमसगुत्तस्स अंतेवासी दुवे थेरा—थेरे अज्जमहागिरी एलावच्चसगुत्ते, थेरे अज्जसुहत्थी वासिट्ठसगुत्ते ८, थेरस्स णं अज्जसुहत्थिस्स वासिट्ठसगुत्तस्स अंतेवासी दुवे थेरा—सुट्ठियसुप्पडिबुद्धा कोडियकाकंदगा वग्घावच्चसगुत्ता ९, थेराणं सुट्ठियसुप्पडिबुद्धाणं कोडियकाकंदगाणं वग्घावच्चसगुत्ताणं अंतेवासी थेरे अज्जइंददिन्ने कोसियगुत्ते १०, थेरस्स णं अज्जइंददिन्नस्स कोसियगुत्तस्स अंतेवासी थेरे अज्जदिन्ने गोयमस-

१ तृतीयप्रहरप्रान्ते २ पुरोलिखितं कुण्डलिकाया अन्तः ३ द्विपञ्चाशत् पलमितो मत्स्यः पतिष्यति ४।" इति निमित्तं भाषितं, श्रुत्वा श्रावकैः श्रीभद्रबाहुस्वामिनः प्रोक्तं । गुरुणा प्रोक्तं–"किंचित् सत्यं, किञ्चित् असत्यं।" कथं ? । ततो गुरुणा प्रोक्तं–"मेघो न पूर्वतः समेष्यति, किन्तु ईशानकोणतः, तृतीयप्रहरप्रान्ते न, किन्तु दिनघटीपट्के शेषे सति । कुण्डलिकायां मध्ये न, किंतु किञ्चित् बहिः, द्विपञ्चाशत्पलमानो न, किन्तु वायुना भक्षितत्वात् सार्धैकपञ्चाशत्पलमानः तुलितो भविष्यति ।" भद्रबाहुविशेषज्ञाननिमित्तमपि राज्ञा श्रुतं। ततः पञ्चमदिने मेघवृष्टिः जाता। परं सर्वं श्रीभद्रबाहुस्वामिवचनं सत्यं जातं, वराहमिहरः सत्यासत्यवादी लोकमध्ये जातः, भद्रबाहुस्वामी तु सत्यवादी जातः । पुनरेकदा राज्ञः पुत्रो जातः वराहमिहरेण वर्षशतायुर्वर्तनेन जन्मपत्रिका लिखिता। ततः सर्वेऽपि लोका अक्षतभाजनानि लात्वा वर्धापनाय राज्ञो गृहे समेताः । एवं दर्शनिनो लोका अपि आशीःप्रदानाय समेताः विना भद्रबाहुं, ततो वराहमिहरेण राज्ञोऽग्रे प्रोक्तं–"हे राजन्! भवदीयपुत्रजन्म भद्रबाहोः न रुचितं, तेन न आगतः।" एतत्स्वरूपं श्रावकैः भद्रबाहुस्वामिनः प्रोक्तं गुरुभिः प्रोक्तं–"वारं वारं कथं गम्यते ?, एकवारं यास्यामि, कथं एवं ? ।" गुरुणा प्रोक्तं–"अष्टमे दिने रात्रौ बिलाडितो मरणं राजपुत्रस्य भावि" इति। राज्ञाऽपि एतत् वाक्यं श्रुत्वा बिलाडिकाप्रवेशनादौ यत्नशतं कृतं कारितं च । ततोऽष्टमे दिने दैवयोगात् दासीहस्तात् अर्गला पतिता बालकोपरि। मृतो बालकः। वराहोऽवदत्–"बिलाडिकातो न मृतः ।" गुरुणा अर्गलायां बिलाडिकारूपं दर्शितं । ततो वराहो

पार्श्वे धर्मं श्रुत्वा प्रव्रजितौ, क्रमात् चतुर्दशपूर्वधरौ जातौ। गुरुणा भद्रबाहोः विनीतत्वात् सूरिपदं ददे। वराहमिहरस्य तु अविनीतत्वात् न दत्तं। कथं? यतो यो गणधरशब्दो गौतमादिगणधरैः महापुरुषैः व्यूढः, तं शब्दं यो गुरुः कुपात्रे=अयोग्ये स्थापयति स गुरुः महापापी अनन्तसंसारी च स्यात्। ततो वराहमिहरो रुष्टः सन् गच्छात् बहिर्निर्गतः, गुरोर्द्वेषं वहति स्म। चतुर्दशपूर्वभणनात् नवीनानि ज्योतिःशास्त्राणि करोति स्म। वाराहीसंहितानामा ग्रन्थो येन कृतः। साधुवेषं मुक्त्वा द्विजवेषं कृत्वा निमित्तैः जीवति स्म। पुनः लोकानां अग्रे एवं कथयति—"भो लोकाः! मया एकदा नगरात् बहिः एकं लग्नं मण्डितमासीत् परं विस्मृत्या लग्नं न भग्नं, गृहागतेन विचारितं—"अहो! मम ज्ञानस्य विराधना जाता।" ततः तं लग्नभङ्गं कर्तुं पुनरहं तत्र स्थाने गतः—लग्नस्य उपरि तस्य अधिष्ठायकं सिंहं पुच्छाच्छोटकं कुर्वन्तं अपश्यं, तथापि लग्नभक्त्या साहसं कृत्वा लग्नोपरि हस्तक्षेपे कृते सिंहः सूर्यो भूत्वा प्राह—"भो वराहमिहर! वरं वृणु, तुष्टोऽस्मि।" तदा मया प्रोक्तं—"नक्षत्रादीनां चारं साक्षात् दर्शय।" ततः तेन अहं सूर्यादीनां यत्र मण्डलानि तत्र नीतः, सर्वं सर्वेषां ग्रहाणां चारोदयाऽस्तमनवक्रातिचारस्वरूपं दर्शितं। ततोऽहं सर्वज्योतिष्कबलेन अतीताऽनागतवर्तमानस्वरूपं जानामि।" इति कथयन् राजादीनां चमत्कारदर्शनेन मनांसि रञ्जयामास। तस्मिन् नगरे श्रीभद्रबाहुस्वामी समागतः, श्रावकैः प्रवेशोत्सवकरणादिना महती महिमा कृता। परं वराहमिहरो न सहति, तेषां माहात्म्यपातं वाञ्छति। ततो राजसभायां गत्वा राज्ञोऽग्रे प्रोक्तं—"इतः पञ्चमे दिने पूर्वतो मेघः समेष्यति

१ तृतीयप्रहरप्रान्ते २ गुरोलिखितं कुण्डलिकाया अन्तः ३ द्विपञ्चाशत् पलमितो मत्स्यः पतिष्यति ४।” इति निमित्तं भाषितं, श्रुत्वा श्रावकैः श्रीभद्रबाहुस्वामिनः प्रोक्तं । गुरुणा प्रोक्तं–“किंचित् सत्यं, किञ्चित् असत्यं।” कथं? । ततो गुरुणा प्रोक्तं–“मेघो न पूर्वतः समेष्यति, किन्तु ईशानकोणतः, तृतीयप्रहरप्रान्ते न, किन्तु दिनघटीषट्के शेषे सति । कुण्डलिकायां मध्ये न, किंतु किञ्चित् बहिः, द्विपञ्चाशत्पलमानो न, किन्तु वायुना भक्षितत्वात् सार्धैकपञ्चाशत्पलमानः तुलितो भविष्यति ।” भद्रबाहुविशेषज्ञाननिमित्तमपि राज्ञा श्रुतं। ततः पञ्चमदिने मेघवृष्टिः जाता। परं सर्वं श्रीभद्रबाहुस्वामिवचनं सत्यं जातं, वराहमिहरः सत्यासत्यवादी लोकमध्ये जातः, भद्रबाहुस्वामी तु सत्यवादी जातः । पुनरेकदा राज्ञः पुत्रो जातः वराहमिहरेण वर्षशतायुर्वर्णनेन जन्मपत्रिका लिखिता। ततः सर्वेऽपि लोका अक्षतभाजनानि लात्वा वर्धापनाय राज्ञो गृहे समेताः । एवं दर्शनिनो लोका अपि आशीःप्रदानाय समेताः विना भद्रबाहुं, ततो वराहमिहरेण राज्ञोऽग्रे प्रोक्तं–“हे राजन्! भवदीयपुत्रजन्म भद्रबाहोः न रुचितं, तेन न आगतः।” एतत्स्वरूपं श्रावकैः भद्रबाहुस्वामिनः प्रोक्तं गुरुभिः प्रोक्तं–“वारं वारं कथं गम्यते?, एकवारं यास्यामि, कथं एवं? ।” गुरुणा प्रोक्तं–“अष्टमे दिने रात्रौ विलाडितो मरणं राजपुत्रस्य भावि” इति। राज्ञाऽपि एतत् वाक्यं श्रुत्वा विलाडिकाप्रवेशनादौ यत्नशतं कृतं कारितं च । ततोऽष्टमे दिने दैवयोगात् दासीहस्तात् अर्गला पतिता बालकोपरि। मृतो बालकः। वराहोऽवदत्–“विलाडिकातो न मृतः ।” गुरुणा अर्गलायां विलाडिकारूपं दर्शितं । ततो वराहो

लज्जितः। ततो वराहोऽन्यत्र गत्वा मृत्वा व्यन्तरो भूत्वा, जैनानां मरकोपद्रवं करोति स्म । ततः श्रावकाणां उपद्रवनिवारणाय महाम्नायमयं "उवसग्गहरस्तोत्रं" कृत्वा अर्पितं। ततः सङ्घेन सर्वत्र प्रतिगृहं पठितं। तत्प्रभावेण व्यन्तरो नष्टा गतः । जातं सर्वत्र शुभं महाप्रभावस्तोत्रं, गौरपि कदाचित् कथञ्चित् दुग्धं न दत्ते, तदापि लोका इदं स्तोत्रं गुणयन्ति। ततः शेषनाग आगत्य विघ्नं वारयति । एवं प्रत्यहं प्रतिगृहं आगच्छन् शेषनागः खिन्नः सन् श्रीगुरुं विज्ञपयति स्म-"अहं सङ्घपार्श्वात् क्षणमपि स्थातुं न शक्नोमि । ततः षष्ठी गाथा अतिशयभूता दूरीक्रियतां। अहं स्वस्थानस्थोऽपि गाथापञ्चकेनापि विघ्नं स्फोटयिष्यामि।" ततो गुरुणा षष्ठी गाथा भाण्डागारे क्षिप्ता । श्रीभद्रबाहुस्वामिना कृताः श्रीआवश्यकनिर्युक्त्यादयोऽनेके ग्रन्थाः सन्ति । एवंविधाः श्रीभद्रबाहुस्वामिनो वीरात् सप्तत्यधिकवर्षशतेन १७० स्वर्गं जग्मुः ६ ॥

श्रीसंभूतिविजयस्य माढरगोत्रस्य अन्तेवासी शिष्यः श्रीस्थूलभद्रो गौतमगोत्रीयोऽभूत्, तस्य चायं संबन्धः—

श्रीपाटलिपुरनगरे नवमनन्दमन्त्री शकडालः, भार्या लाञ्छलदे, तयोः पुत्रद्वयं-स्थूलभद्रः १ सिरियाकश्च २ । एकदा वररुचिः भट्टः आगतः । सः राजानं प्रत्यहं अष्टोत्तरशतकाव्यैः स्तौति, परं मिथ्यात्वित्वात् मन्त्री न प्रशंसति, तस्य प्रशंसां विना राजा न किमपि दत्ते । तदा भट्टेन लाञ्छलदे मन्त्रिणि आवर्जिता। तत्प्रेरणया मन्त्रिणा प्रोक्तं-"भव्यानि काव्यानि।" ततो राज्ञा तुष्टेन प्रत्यहं अष्टोत्तरशत (१०८) दीनारदानं क्रियते स्म। ततो मन्त्रिणा द्रव्यक्षयं ज्ञात्वा एकादिपाठसिद्धाः सप्त पुत्रिका अभूवन्। तासां श्रावणात् तासां

मुग्नतो भणनाच्च 'न नवीनानि काव्यानि' इत्युक्त्वा निर्भर्त्स्य निष्कासितो राजकुलात्। ततो गङ्गामध्ये यन्त्रप्रयोगेण सन्ध्यासमयमुक्तानि दीनारपञ्चशतानि गङ्गां स्तुत्वा लाति, वक्ति च–"मम गङ्गादेवी तुष्टा सती ददाति।" इति ख्यातिं लोकमध्ये अकरोत्। ततो मन्त्रिणा तत् धनं गुप्तं आनाय्य नृपादिसमक्षं तदीयकूटप्रपञ्चः प्रकटीकृतः। ततो मन्त्रिणः उपरि द्वेषं वहन् छात्रान् पाठयन् तेषां मुखेभ्यः इति कथापयति स्म—

"राउ नंद नवि जाणही जं सगडाल करेसि। नंदराउ मारि करी सिरियउ रज्ज ठवेसि॥ १॥"

राज्ञा श्रुतं सिरियाकस्य विवाहसामग्रीं युद्धसामग्रीं इति ज्ञात्वा रुष्टो राजा कुटुम्बसहितं सगडालं मारयिष्यामि।" ततो मन्त्रिणा कुलरक्षणार्थं सिरियाकस्य प्रोक्तं–"राज्ञः प्रणामसमये त्वया मम मस्तकं छेदनीयं।" ततो राजसमीपगमने शकडालेन प्रणामः कृतः, राजा पराङ्मुखो जातः। ततः सिरियाकेन प्रोक्तं–"अरे! यो राज्ञो द्वेषी भवति, स हन्तव्य एव।" खड्गेन हतः पिता। ततः हृष्टेन राज्ञा प्रोक्तं–"भो सिरिया! त्वं गृहाण पितुरधिकारं।" स प्राह–"मम वृद्धभ्राता स्थूलभद्रोऽस्ति, तस्य अधिकारो दीयतां।" राज्ञा प्रोक्तं–"स क्व अस्ति?।" तेनोक्तं–"द्वादश १२ वर्षाणि जातानि कोशावेश्यागृहे तिष्ठति, द्वादश १२ स्वर्णकोट्यश्च तया सह भक्षिताः। राजा स्थूलभद्रं आहूय प्रोक्तं–"गृहाण पितृमुद्रां।" ततः स्थूलभद्रो वररुचिभट्टप्रपञ्चे पितृमरणं श्रुत्वा, संसारं असारं ज्ञात्वा वैराग्येण स्वयं कृतलोचो रत्नकम्बलेन कृतरजोहरणः श्रीसंभूतिविजयपार्श्वे दीक्षां ललौ। तदा राज्ञा सिरियाकस्य मन्त्रिमुद्रा दत्ता। श्रीस्थूलभद्रो गुर्वादेशात् कोशागृहे चतुर्मासीं स्थितः

१, अन्यो द्वितीयः साधुः सिंहगुहायां स्थितः २, तृतीयः सर्पबिलमुखे स्थितः ३, चतुर्थकूपविचालकाष्ठोपरि स्थितः ४, तत्र स्थूलभद्रस्य काठिन्यं यथा—

"वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं, रम्यं धाम मनोहरं वपुरहो नव्यो वयःसंगमः ।
कालोऽयं जलदागमस्तदपि यः कामं जिगायादरात् तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं मुनिम् ॥ १ ॥"

कालस्तु वर्षाकालो मेघा गर्जन्ति, विद्युत् झात्कारं करोति, मयूराः केकारवं कुर्वन्ति, बप्पीहाः-पक्षिणः प्रियु प्रियु इति जल्पन्ति, दर्दुरा रटन्ति, स्वयं चित्रशालायां स्थितः षड्भिरपि रसैः सदा भोजनं कुरुते, कोशा रागवती षोडशशृङ्गारान् रचयित्वा सखीभिः सह नृत्यं कुर्वती कामोद्दीपकसरागवचनानि वदन्ती नाटकं अकरोत् । परं महापुरुषो रोममात्रमपि न क्षुब्धः, प्रत्युत धर्मोपदेशदानेन कोशावेश्यां श्राविकां अकरोत् । चतुर्मासीपारणे चत्वारोऽपि साधवो गुरुसमीपे गताः । तदा त्रिषु आगतेषु गुरुणा किंचित् उत्थाय "स्वागतं भो! दुष्करकारकाः!" इत्युक्तं । श्रीस्थूलभद्रे आगते तु गुरुणा उत्थाय "स्वागतं दुष्करकारक दुष्करकारक!" इत्युक्तं । ततः तेषु यः सिंहगुहावासी साधुः सोऽमर्षेण आगामिचतुर्मास्यां स्पर्धया गुरुवारितोऽपि कोशावेश्यागृहे गतः तां रूपवतीं दृष्ट्वा क्षुब्धः । वेश्यया प्रोक्तं-"धनं आनय ।" तेनोक्तं-"तत् कुत्राऽस्ति ? ।" कोशया प्रोक्तं-"नेपालदेशे राजा याचकानां सपादलक्षं रत्नकम्बलं ददाति ।" तदानीं हि ततः तेन वर्षाकालेऽपि गत्वा राजपार्श्वात् रत्नकम्बलं प्राप्य आनीय वेश्याया दत्तं । तया च स्नानं कृत्वा

अङ्गप्रोञ्छनं कृत्वा तत्प्रतिबोधार्थं खालमध्ये प्रक्षिप्तं । साधुः आह–"अहो! त्वया अज्ञानेन किं कृतं? मया कष्टेण आनीतं अमूल्यं रत्नकम्बलं खालमध्ये क्षिप्तं! ।" कोशा प्राह–"रे मूर्ख! त्वया किं कृतं? चारित्रं दुर्लभं उभयलोकसाधकं रत्नकम्बलादपि अनन्तमूल्यं, मम अङ्गेषु मलाविलेषु अशुचिषु निक्षिप्तं। ततः प्रतिबुद्धो, गुरुसमीपे आगत्य मिथ्या दुष्कृतं ददे। एवं स्वकामिनं रथकारं पुङ्खपुङ्खार्पितैः बाणैः दूरस्थाम्रलुम्न्याऽऽनयनकलागर्विनं सर्षपराशिस्थसूच्यग्रपुष्पोपरि नृत्यन्ती प्राह–

"न दुक्करं अंबयलुंबितोडणं, न दुक्करं सरिसवनचिआए ।
तं दुक्करं तं च महाणुभावो, जं सो मुणी पमयवणंमि वुच्छो ॥ १ ॥"

ततो रथकारो व्रतं जगृहे । अन्यदा द्वादश १२ वर्षदुर्भिक्षप्रान्ते पाटलीपुरे नगरे अगुणनादिना विस्मृतां एकादशाङ्गीं ज्ञात्वा सङ्घेन मिलित्वा दृष्टिवादपठनाय श्रीभद्रबाहुस्वामिसमाहूतिकृते मुनिद्वयं मुक्तं तत्र गतं, परं, श्रीभद्रबाहुस्वामी प्राह–"मया साम्प्रतं महाप्राणायामध्यानं प्रारब्धं, ततो न आगमनं भावि" इति मुनिद्वयं पश्चात् प्रहितं। पुनः सङ्घेन कथापितं–"सङ्घादेशं यो न मन्यते, तस्य को दण्डः? ।" भद्रबाहुस्वामिना प्रोक्तं–"गच्छात् बहिः क्रियते, परं आगमने ध्यानभङ्गो भवति । ततः श्रीसङ्घः शिष्यान् अत्र प्रहिणोतु, यथा पाठयामि ।" ततः स्थूलभद्रादि ५०० शिष्याः प्रहिताः । गुरुभिः वाचनासप्तके दत्ते अन्ये उद्विग्नाः, स्थूलभद्रस्तु दशपूर्वाणि वस्तुद्वयेन ऊनानि पपाठ । अन्यदा यक्षाद्याः सप्ताऽपि साध्व्यः

स्थूलभद्रभगिन्यो बान्धववन्दनार्थं समागताः। गुरुं वन्दित्वा ताः प्रोचुः–"क्व स्थूलभद्रः?।" गुरुणा प्रोक्तं–"गिरिगुहायां पूर्वाणि गुणयन् अस्ति।" ततो गतास्तत्र ता आयन्तीः ज्ञात्वा ज्ञानबलेन स्थूलभद्रः चमत्कारदर्शनाय सिंहरूपं पुच्छाच्छोटं कृत्वा स्थितः । ताः सिंहं दृष्ट्वा भीता गुरुपार्श्वे गताः प्रोचुः–"तत्र अस्माकं भ्राता नास्ति, सिंहः स्थितोऽस्ति।" तदा गुरुभिः ज्ञातं–"विद्याबलं प्रयुक्तं"। पुनः प्रोक्तं–"पुनः यात, भ्राता तत्रैवाऽस्ति ।" पुनः ताः तत्र गताः, भ्रातरं दृष्ट्वा हर्षेण वन्दन्ते स्म । पुनः यक्षा साध्वी स्वकीयकथां स्वभ्रातृस्थूलभद्राग्रे कथयति स्म। तथाहि–अस्माभिः सह [श्रीयकः] प्रव्रजितोऽभूत्। श्रीपर्युषणापर्वणि मया उपवासं कारितः स्वर्गं गतः। ततोऽहं तत्प्रायश्चित्तयाचनाय श्रीसङ्घे कायोत्सर्गे स्थिते शासनदेव्या आगत्य सीमन्धरस्वामिसमीपे नीता । तन्मुखात् चूलाद्वयं लात्वा अत्राऽऽगता। ततः ताः गुरून् वन्दित्वा स्वस्थाने गताः । अन्यदा श्रीस्थूलभद्रः पूर्वमित्रब्राह्मणगृहे गतोऽभूत्। पृष्टं–"क्व मे मित्रं?"। भार्यया प्रोक्तं–"दरिद्रत्वेन भिक्षार्थं जगाम ।" स्थूलभद्रेण ज्ञानेन ज्ञातं–"अहो! अस्य गृहस्य अमुकस्थाने निधानं वर्तते, परं न जानाति ।" ततो निधानस्थानं दर्शयित्वा दृशा निर्गतः । मित्रेण आगत्य भार्यावचनेन तत् स्थानं खनितं, महानिधानं प्रकटितं, स ब्राह्मणः सुखी जातः। ततः सिंहविकुर्वणं निधानदर्शनं च अपराधं ज्ञात्वा वाचनाग्रहणाय आगतस्य स्थूलभद्रस्य प्रोक्तं–"त्वं अयोग्योऽसि, न अतः परं वाचनादानं ।" तथापि श्रीसङ्घाग्रहेण "अन्यस्मै त्वया न देया" इति शपथं कारयित्वा, अग्रतः सूत्रतो वाचना दत्ता, परं न अर्थतः। एवंविधः

श्रीस्थूलभद्रो वीरात् पञ्चदशाधिकद्विशतवर्षैः [२१५] स्वर्गं गतः ७। तथा जम्बूस्वामी चरमकेवली १ प्रभवस्वामि १ शय्यम्भवसूरि २ यशोभद्रसूरि ३ संभूतिविजय ४ भद्रबाहु ५ स्थूलभद्राः ६ एते षडपि श्रुतकेवलिनः ७। श्रीस्थूलभद्रस्य द्वौ शिष्यौ—आर्यमहागिरिः एलापत्यगोत्रीयः १ द्वितीयः आर्यसुहस्ती वाशिष्ठगोत्रीयः २ । तत्र आर्यमहागिरिणा व्यवच्छिन्नेऽपि जिनकल्पे जिनकल्पतुलना कृता। पुनः यस्य आर्यमहागिरेः गोचर्यां भ्रमतः संस्तवनश्रेष्ठिगृहे स्थितः, तत्पट्टे श्रीआर्यसुहस्तिसूरिः कृतवान् ८॥

अथ श्रीआर्यसुहस्तिसूरिसंबन्धो यथा—

अन्यदा दुःकाले जाते धान्यं न लभ्यते, लोको दुःखी जातः, राजानोऽपि रङ्का जाताः । तथापि श्रावकाः साधूनां विशेषतः दानं ददुः । एको भिक्षुः साधून् बहुभिक्षां प्रतिगृहं लभमानां दृष्ट्वा प्राह—"भो! मह्यं भिक्षां दत्त।" साधुभिः प्रोक्तं—"गुरवो जानन्ति ।" ततो गुरुसमीपे समागतः । गुरुभिः लाभं विभाव्य दीक्षां दत्त्वा यथेच्छं भोजितः । परं विषूचिकया चारित्रानुमोदनात् मृत्वा उज्जयिनीनगरे श्रेणिकराजपट्टे कोणिकः २ तत्पट्टे उदायिराजा ३ तत्पट्टे नवनन्दाः १२ तत्पट्टे चन्द्रगुप्तः १३ तत्पट्टे बिन्दुसारः १४ तत्पट्टे अशोकश्रीः १५ तस्य पुत्रः कुणालः १६ तस्य पुत्रः संप्रतिनामा राजा अभूत् । तस्य हि जातमात्रस्यैव पितामहराज्यं मन्त्रिभिः दत्तं । अनुक्रमेण त्रिखण्डभोक्ता जातः। एकदा रथयात्रार्थं आगतं श्रीआर्यसुहस्तिसूरिं दृष्ट्वा जातिस्मरणं ज्ञानं उत्पन्नं । तत आगत्य गुरूणां पृष्टं—"हे स्वामिन्! अव्यक्तसामायिकस्य किं फलं?।"

ततो गुरुभिः प्रोक्तं–"राज्यादिकं ।" ततो विशेषतः प्रत्ययो जातः । गुरुभिः अपि उपयोगेन ज्ञातः, तस्य पूर्वभवः प्रतिबोधितश्च, गृहीतः श्रावकधर्मः । ततः संप्रतिभूपेन [१२५०००] सपादलक्षनवीनप्रासादाः कारिताः, सपादकोटिविम्बानि [१२५०००००] कारयित्वा प्रतिष्ठापितानि । [१३०००] त्रयोदशसहस्राः जीर्णोद्धाराः कारिताः । [९५०००] पञ्चनवतिसहस्रपित्तलप्रतिमाः कारिताः । सप्तशतानि ७०० दानशाला–सत्राकारशाला मण्डिताः । देवगृहप्रतिमादिभिः त्रिखण्डामपि पृथिवीं मण्डितां अकरोत् । करं मुक्त्वा पूर्वसाधुवेपधारिस्ववण्ठप्रेषणादिना अनार्यदेशान् अपि साधुविहारयोग्यान् अकरोत् । अनार्यदेशीयभूपान् जैनधर्मरतान् अकरोत् । पुनः ये वस्त्रपात्रअन्नदधिदुग्धघृतादिकं प्रासुकद्रव्यविक्रयं कुर्वन्ति, तेषां संप्रतिभूपेन ज्ञापितं–"भो ! साधूनां अग्रे सर्वं ढौकनीयं, यच्च ते साधवो लान्ति तत् तेभ्यो देयमेव । भवतां च तन्मूल्यं लाभसहितं मम कोष्ठगारिकः प्रच्छन्नं दास्यति । तैः तथा कृतं, साधुभिः अशुद्धमपि शुद्धबुद्ध्या गृहीतं । संप्रतिभूपः श्रीआर्यसुहस्तिसूरिप्रतिबोधित एवंविधो बभूव । एवंविधाः श्रीआर्यसुहस्तिसूरयः चारित्रं प्रतिपाल्य स्वर्गं जग्मुः ९॥

श्रीआर्यसुहस्तिसूरेः द्वौ शिष्यौ–कौटिक–काकन्दकनामानौ । किंविशिष्टौ कौ० ? । सुस्थितौ=सुविहितक्रियानिष्ठौ । पुनः किंविशिष्टौ कौटिक–काकन्दकनामानौ ? । सुप्रतिबुद्धौ=सुज्ञाततत्त्वौ । अन्ये तु आचार्या एवमाहुः–सुस्थित–सुप्रतिबुद्धनामानौ । किंविशिष्टौ कौटिक–काकन्दकनामानौ ? । कोट्यंशसूरिमन्त्रजापपरिज्ञानादिना

कौटिकौ । पुनः किंविशिष्टौ कौटिककाकन्दकौ ?। काकन्द्यां नगर्यां जातत्वात् काकन्दकौ इति विरुदप्रायं विशेषणद्वयं ११ कौटिककाकन्दयोः व्याघ्रापत्यगोत्रयोः शिष्य इन्द्रदिन्नः कौशिकगोत्रीयः १२ इन्द्रदिन्नस्य शिष्यो गौतमगोत्रीयो दिन्ननामा जातः १३ दिन्नस्य शिष्यः कौशिकगोत्रीय आर्यसिंहगिरिः जातिस्मरो जातः १४ आर्यसिंहगिरेः शिष्यो गौतमगोत्रीयः श्रीवज्रस्वामी १५ श्रीवज्रस्वामिशिष्य उत्कौशिकगोत्रीयः श्रीवज्रसेनो जातः १६ वज्रसेनस्य चत्वारः शिष्याः स्थविरा जाताः—नागिलो १ पोमिलो २ जयन्तः ३ तापसश्च ४। एतेभ्यः चतुर्भ्यः चतस्रः शाखाः स्वस्वनाम्ना निर्गताः—नागिला १ पोमिला २ जयन्ती ३ तापसी ४ इति २०।

अत्र श्रीसिंहगिरि १ श्रीवज्रस्वामि २ श्रीवज्रसेन ३ सूरीणां संलग्नः सम्बन्धो यथा—

श्रीसिंहगिरिगुरोः पार्श्वे सुनन्दाया भ्राता आर्यशमितो, भर्ता च धनगिरिः द्वौ अपि दीक्षां जगृहतुः। सुनन्दा च तदा तुम्बवनग्रामे गर्भवती मुक्ताऽभूत्, जातः पुत्रः। जन्मसमये एव पितुर्दीक्षां श्रुत्वा जातिस्मरणं ज्ञानं प्राप। ततो मातुरुद्वेगार्थं निरन्तरं रोदिति, चारित्राभिलाषी जातः। माता उद्विग्ना जाता सती तिष्ठति, जानाति त्यजामि क्वचित् ददामि कस्मैचित्। तस्मिन् प्रस्तावे श्रीसिंहगिरिसूरयः समेताः धनगिरिः यदा विहर्तुं निर्गतः तदा गुरुभिः लाभं ज्ञात्वा प्रोक्तं—"अद्य गोचरीगमने सचित्ता अचित्ता वा या भिक्षा लभ्यते सा ग्राह्या।" ततो धनगिरिर्गतः सुनन्दागृहे, सुनन्दा प्राह—"तव पुत्रेण सन्तापिताऽहं, गृहाण आत्मीयं पुत्रं।" साधुना प्रोक्तं—"अद्य त्वं ददासि परं पश्चात् दुःखं करिष्यसि।" तया प्रोक्तं—"नाऽहं करिष्यामि।"

ततो धनगिरिः बहुस्त्रीजनान् साक्षिणः कृत्वा पुत्रं लात्वा झोलिकामध्ये क्षिप्त्वा समेतो गुरुपार्श्वे, गुरुणा च वज्रवत् भारत्वात् 'वज्र' इति नाम दत्तं, ततो न रुरोद। शय्यातरश्राविकाभ्यः पालनार्थं दत्तः, स च साध्वीशालायां पालनस्थः षण्मासवयाः साध्वीभिः पठ्यमानानि एकादशाङ्गानि पपाठ । ततः सा पुत्रं त्रिवार्षिकं जातं ययाचे । राजसमक्षं सङ्घो मेलितः, राजाज्ञया गुरुभिः मुखवस्त्रिकारजोहरणादीनि साधूपकरणानि बालस्य अग्रे मुक्तानि । मात्रा तु सुखभक्षिका–कन्दुक–बालक्रीडनकानि मुक्तानि। गुरुणा प्रोक्तं–"रजोहरणं गृहाण ।" मात्रा तु प्रोक्तं–"सुखभक्षिकादीनि ।" ततो बालेन चारित्रं वाञ्छता गृहीतं रजोहरणं मस्तके धृत्वा नृत्यति स्म । भग्नो वादः, अष्टवर्षान्ते गृहीता दीक्षा, पश्चात् मात्रापि दीक्षा गृहीता। पुनः यस्य पूर्वभवमित्रैः जृम्भकदेवैः महाटव्यां उज्जयिनीमार्गे वृष्टौ निवृत्तायां कूष्माण्डभिक्षायां गृहस्थरूपैः दीयमानायां अनिमिषत्वादिना 'देवपिण्डः अयं' इति निश्चित्य भिक्षाया अग्रहणे तुष्टैः वैक्रियलब्धिः दत्ता। पुनः यस्य ग्रीष्मकाले घृतपूरैः परीक्षां कृत्वा आकाशगामिनी विद्या दत्ता २। पुनः अन्यदा वज्रमुनिः गुरुषु बहिर्भूमौ गतेषु साधुषु च विहर्तुं गतेषु साधुसंस्तारकवेष्टिका एकीकृत्य स्वयं विचाले स्थित्वा शिष्याणामिव एकादशानां अङ्गानां पृथक् पृथक् वाचनां दातुं आरेभे । गुरुभिः द्वारे आगत्य स्थित्वा च सर्वं श्रुतं । ततः साधूनां तस्य अतिशयज्ञापनार्थं अन्यदा ग्रामान्तरं गच्छद्भिः गुरुभिः प्रोक्तं–"भो शिष्याः! भवतां वाचनाचार्यो वज्रोऽस्ति" इत्युक्त्वा चलिताः । पश्चात् वज्रेण तेषां विनीतानां तथा वाचना दत्ता । यथा अनेक-

वाचनाभिः पठ्यते तथा एकैकया वाचनया पठितं । साधुभिः विचारितं-"यदि गुरवः कियन्तं कालं विलम्बन्ते तदा वरं, यथा अस्माकं शीघ्रं श्रुतस्कन्धः पूर्णो भवति ।" तत आगतैः गुरुभिः पृष्टं-"भो! भवतां सुखेन वाचना जाता?।" तैः प्रोक्तं-"अतः परं अस्माकं वाचनाचार्यो वज्र एव भवतु।" पश्चात् गुरुणा स्वयमपि वज्राय ११ एकादशाङ्गवाचना दत्ता । ततो वज्रस्वामिना दशपुरात् उज्जयिन्यां गत्वा गुर्वाज्ञया श्रीभद्रगुप्ताचार्यसमीपे दशपूर्वाणि अधीतानि । ततः आचार्यपदे स्थापितो गतः पाटलीपुरे, 'रूपेण मा लोकानां मनःक्षोभो भवतु' इति व्याख्याने रूपं संक्षिप्य सामान्यं रूपं कृत्वा राजादीनां अग्रे देशना दत्ता। द्वितीयदिने साधुभिः लोकमुखात् श्रुतं-"अहो! गुरूणां देशना अमृतस्राविणी, परं न तादृशं रूपं।" गुरुभिः साधुमुखात् श्रुत्वा सहस्रदलस्वर्णकमलोपरि स्थित्वा स्वाभाविकदिव्यरूपेण धर्मोपदेशो दत्तः । सर्वेऽपि लोका विस्मयं प्राप्ताः । पुनरपि यो धनश्रेष्ठिपुत्रीं रुक्मिणीं साध्वीभ्यः पूर्वं प्रभु [ वज्र ] गुणश्रवणेन जातानुरागां पित्राऽपि धनकोटिसहितां दीयमानां प्रतिबोध्य प्राव्राजयत्। पुनः येन वज्रस्वामिना पदानुसारिलब्ध्या श्रीआचाराङ्गमहापरिज्ञाऽध्ययनाद् यस्य मानुषोत्तरपर्वतं यावद्गमनविषयः सा आकाशगामिनी विद्या उद्धृता। पुनः योऽन्यदा उत्तरस्यां दिशि दुर्भिक्षे जाते श्रीसङ्घं पटे संस्थाप्य पानीयग्रहणार्थं गतं दत्तनामार्थं शय्यातरमपि लोचकरणेन 'साधर्मिकोऽहं भवतां' इति वदन्तं पटे आरोप्य आकाशे स्थित एव स्थाने-स्थाने मार्गे-मार्गे चैत्यानि वन्दमानो महानसीं पुरीं प्रापयामास । तत्र तु सुभिक्षं परं बौद्धो राजा श्रीपर्युषणापर्वणि समागते

वौद्धश्रावकप्रेरितेन राज्ञा जैनचैत्येषु पुष्पाणि निषिद्धानि । सङ्घेन वज्रस्वामी विज्ञप्तः–"मा चिन्ता क्रियतां" इत्युक्त्वा आकाशगामिनीविद्यया आकाशे उत्पत्य माहेश्वरीपुर्यां हुताशननामदेवस्य वने पितृमित्रं आरामिकं तडितनामानं पुष्पमेलनाय सावधानीकृत्य हिमवद्गिरौ प्राप्तः । तत्र श्रीदेव्या वन्दितः, तदानीं तया देवपूजार्थं पूर्वं लक्षदलकमलं आनीतं आसीत्, तदेव तया दत्तं, तत् गृहीत्वा पुनः पश्चात् वलमानेन हुताशनवनादपि विंशतिपुष्पलक्षाणि लात्वा आकाशे विमानं आरूढः प्राक्तनमित्रजृम्भिकदेवकृतगीतगानवादित्रादिमहोत्सवः आगत्य पुष्पलक्षाणि श्राद्धानां दत्त्वा चैत्येषु महिमां अकारयत्। हर्षितः सङ्घः चमत्कृतो राजा जातो जैनश्च । पुनः अन्यदा दक्षिणापथे विहरन् श्रीवज्रस्वामी श्लेष्मणि जाते साधूनां अकथयत्–"अद्य गोचरीगमने शुण्ठिः आनेया।" तैः आनीता गुरुभिः कर्णोपरि धृता, परं विस्मृत्या न भक्षिता, परं प्रतिक्रमणे [प्रतिलेखनवेलायां] कर्णप्रतिलेखने पतिता गुरुभिः विचारितं–"मम दशपूर्वधरस्य का विस्मृतिः ?।" परं आयुः अल्पं ततोऽनशनं कृतं। द्वादशवर्षीयं दुर्भिक्षं ज्ञात्वा स्वशिष्यस्य वज्रसेनस्य प्रोक्तं–"त्वं सोपारकपत्तने याहि । 'कदा सुभिक्षं भावि ?' इति पृष्टे–"यस्मिन् दिने लक्षमूल्येन एकां हण्डिकां पच्यमानां द्रक्ष्यसि, तद्दिनात् अग्रिमदिने सुभिक्षं भविष्यति" इत्युक्त्वा मुक्तो वज्रसेनः। पश्चात् निजपार्श्वस्थितान् साधून् भिक्षां अलभमानान् विद्यापिण्डेन कियद् दिनानि भोजयित्वा संविग्नान् पञ्चशतमितान् साधून् आदाय अनशनार्थं वार्यमाणमपि अतिष्ठन्तं एकं लघुक्षुल्लकं अपि मोहात् विप्रतार्य पर्वतं आरोहयत् । क्षुल्लकस्तु "मा भूत् गुरूणां अप्रीतिः"

(इति) पश्चादागत्य पर्वतमूल एव तप्तशिलायां सुप्तोऽनशनं कृत्वा सुकुमालशरीरत्वात् क्षणमेव शुभध्यानतः स्वर्गं जगाम। देवैः तस्य महिमानं क्रियमाणं ज्ञात्वा साधवो विशेषतो धर्मे स्थिरा जाताः। परं तत्र मिथ्या दृष्टिदेव्या मोदकादिभिः निमन्त्रणेन अनशने कृते उपसर्गिताः। ततः तत्र तस्या अप्रीतिं ज्ञात्वा, ततः स्थानात् उत्थाय अन्यत्र आसन्नपर्वते अनशनं कृत्वा शुभध्यानेन सर्वेऽपि वज्रस्वामिप्रमुखाः स्वर्गं जग्मुः। ततः इन्द्रेण रथसहितेन गिरिं प्रदक्षिणीकृत्य साधवो वन्दिताः, तेन तस्य पर्वतस्य उपरि रथचक्ररेखापतनात् "रथावर्त" इति नाम जातं। तत्रस्था वृक्षा अपि साधूनां नमनाभ्यासात् अद्यापि नम्रीभूता इव तिष्ठन्ति दृश्यन्ते न नवैव। तस्मिन् स्वर्गं गते दशमपूर्वं चतुर्थं अर्धनाराचं नाम संहननं च विच्छिन्नं। तथा तदनु श्रीवज्रसेनः सोपारके जिनदत्तश्रावकः, तस्य भार्या ईश्वरी, तत् द्वयमपि पूर्वं श्रीवज्रस्वामिना प्रतिबोधितमासीत्, तस्य गृहे भिक्षार्थं गतः। तस्मिन् प्रस्तावे ईश्वरीश्राविकया चतुःपुत्रयुतया धान्याऽभावात् लक्षमूल्येन धान्यमानीय हण्डिका पाकार्थं अग्नौ स्थापिताऽस्ति, विचारितं–"मध्ये विषं क्षिप्त्वा धान्यभोजनेन अनशनं कृत्वा सपुत्रा अहं मरिष्यामि।" वज्रसेनेन विषं क्षिपन्ती दृष्टा, पृष्टं–"किमिति मरणोपायः क्रियते?।" तया प्रोक्तं–"धनं बहु वर्तते, परं धान्यं नगरमध्ये न लभ्यते।" ततो वज्रसेनेन प्रोक्तं–"श्रीपूज्येन मम अभिज्ञानं लक्षमूल्येन धान्यहण्डिकापाकरूपं प्रोक्तं वर्तते। आगामिदिने सुभिक्षं भावि।" तस्या अपि श्रीपूज्यवचनस्य आस्था। ततः तया कथितं–"यदि एवं जातं, तदा मम पुत्राः चत्वारो वर्तन्ते, ते मया दत्ता भवतां पार्श्वे दीक्षां ग्रही-

ष्यन्ति" इति प्रतिज्ञा कृता। ततो द्वादश १२ प्रहरैः पूर्वं दुर्वातेन दूरतटे निक्षिप्तानि युगन्धरीवाहनानि सुवातेन आगतानि, सुभिक्षं जातं, युगं उद्धृतं, ततो 'युगन्धरीनाम' जातं। ततः तया चत्वारोऽपि निजपुत्रा नागेन्द्र १ चन्द्र २ निर्वृति ३ विद्याधर ४ नामानः तेषां दीक्षा दापिताः, पश्चात् स्वयमपि मातापितरौ दीक्षां ललतुः। ते चत्वारोऽपि बहुश्रुताः सूरयो जाताः, तेभ्यः चतस्रः शाखा जाताः, ता अद्यापि दृश्यन्ते॥ इति श्रीसिंहगिरि १ वज्रस्वामि २ वज्रसेन ३ सम्बन्धः २३॥ एवं श्रीमहागिरि १ श्रीसुहस्तिसूरि २ श्रीगुणसुन्दरसूरि ३ श्रीश्यामाचार्य ४ श्रीस्कन्दिलाचार्य ५ रेवतीमित्र ६ श्रीधर्म ७ श्रीभद्रगुप्त ८ श्रीगुप्त ९ श्रीवज्रस्वामि १० नामानः एते युगप्रधाना दशपूर्वधरा जाताः, तथा पूर्वं तु संक्षेपवाचनया स्थविरावली उक्ता व्याख्याता च। सांप्रतं विस्तरवाचनया स्थविरावलीं आह-तत्र सूत्रम्-"वित्थरवायणाए पुण" अत्र आलापके इदं रहस्यं-विस्तरवाचनायां बहवो वाचनाभेदा लेखकवैगुण्यात् जाताः, तत् तत्स्थविराणां च शाखाः कुलानि च प्रायः सांप्रतं न अवबुध्यन्ते। नामान्तरतिरोहितानि वा भविष्यन्ति, अतो निर्णयः कर्तुं न पार्यते पाठेषु शाखासु। क्वचिदादर्शे 'कोडुंबाणि' इति दृश्यते क्वचित् 'कुंडधारी' इति, तथा क्वचित् 'पुण्णपत्तिया' इति, क्वचित् 'सुवण्णपत्तिआ' इति। एवं कुलेष्वपि क्वचित् 'उल्लगच्छत इति" पाठः, क्वचित् 'अह-उल्लगंथन इति' तस्मात् अत्र बहुश्रुता एव प्रमाणं, मा भूत् उत्सूत्रमिति। तत्र कुलं एकाचार्यसन्ततिः, शाखास्तु तस्यां एव सन्ततौ पुरुषविशेषाणां पृथक् पृथक् अन्वयाः। एकवाचनाऽऽचारयति समुदायो गणः, अथवा शाखाविव-

क्षिनाऽऽद्यपुरुषसन्तानो यथा–वैरस्वामिनाम्ना वैरशाखाऽस्माकं । कुलानि तु तच्छिष्याणां पृथगन्वयाः, यथा–चान्द्रं कुलं, नागेन्द्रकुलं इत्यादि । "अहावच्चा या" इति यथार्थानि अपत्यानि, न पतन्ति येन जातेन दुर्गतौ अयशःपङ्के वा पूर्वजाः तदपत्यं सुशिष्याश्च, सद्वृत्ताः पूर्वजान् गुरून् न पातयन्ति, प्रत्युत प्रभासयन्तीति । अत एव अभिज्ञाताः प्रख्याताः, स्थविरावलीसूत्रपाठो यथा–'थेरस्स णं अज्जजसभद्दस्स" इत्यादि ॥

वित्थरवायणाए पुण अज्जजसभद्दाओ पुरओ थेरावली एवं पलोइज्जइ, तं जहा–थेरस्स णं अज्जजसभद्दस्स तुंगियायणसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा–थेरे अज्जभद्दबाहू पाईणसगुत्ते, थेरे अज्जसंभूअविजए माढरसगुत्ते, थेरस्स णं अज्जभद्दबाहुस्स पाईणसगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा–थेरे गोदासे १ थेरे अग्गिदत्ते २ थेरे जण्णदत्ते ३ थेरे सोमदत्ते ४ कासवगुत्तेणं, थेरेहिंतो गोदासेहिंतो कासवगुत्तेहिंतो इत्थ णं गोदासगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ एवमाहिज्जंति, तं जहा–तामलित्तिया १, कोडीवरिसिया २, पंडुवद्धणिया ३, दासीखब्बडिया ४, थेरस्स णं अज्जसंभूयविजयस्स माढरसगुत्तस्स इमे दुवालस थेरा अंतेवासी

अहावच्चा अभिण्णाया हुत्था, तं जहा—नंद्णभद्दु १ [उप] वनंद्णं—भद्दे २ तह तीसभद्दे ३ जस-भद्दे ४ । थेरे य सुमणभद्दे ५, मणिभद्दे ६, पुण्णभद्दे ७ य ॥ १ ॥ थेरे अ थूलभद्दे ८, उज्जुमई ९, जंबुनामधिज्जे १०, य । थेरे अ दीहभद्दे ११, थेरे तह पंडुभद्दे १२ य ॥ २ ॥ थेरस्स णं अज्ज-संभूअविजयस्स माढरसगुत्तस्स इमाओ सत्त अंतेवासिणीओ अहावच्चाओ अभिण्णायाओ हुत्था, तं जहा—जक्खा १ य जक्खदिण्णा २ भूया ३ तह चेव भूयदिण्णा य ४ । सेणा ५ वेणा ६ रेणा ७, भइणीओ थूलभद्दस्स ॥ १ ॥

अथ विस्तरस्थविरावल्या विवरणं क्रियते—तत्र श्रीयशोभद्रसूरितः कतिस्थविराः १ कतिगणाः २ कतिशाखाः ३ कतिकुलानि जज्ञिरे ?, तत् सर्वं सूत्रपाठानुसारेण कथ्यते—यशोभद्रः स्थविरः, तस्य द्वौ शिष्यौ—भद्रबाहुः १ संभूतिविजयः २ जाताः स्थविराः । ३ श्रीभद्रबाहुस्वामिनः चत्वारः शिष्याः—गोदासो १ ऽग्निदत्तो २ यज्ञदत्तः ३ सोमदत्त ४ श्च स्थविराः ७। गोदासतो गोदासनामगणो गणः निर्गतः १। गोदासगणस्य चतस्रः शाखा निर्गताः—तामलित्तिआ १ कोडीवरिसिआ २ पांडवद्धणिआ ३ दासकव्वडिआ ४ शाखाः ४। संभूतिविजयस्य द्वादश शिष्या जाताः—नंद्णभद्द १ उपनंदनभद्द २ तीसभद्द ३ जसभद्द ४ सुमणभद्द ५ मणिभद्द

६ पुण्णभद्द ७ थूलभद्द ८ उज्जुमई ९ जम्बू १० दीहभद्द ११ पंडुभद्द १२ जाताः स्थविरा एकोनविंशतिः १९ पुनः श्रीसंभूतिविजयस्य सप्त अन्तेवासिन्यः साध्व्यो जाताः । जक्खा १ जक्खदिन्ना २ भूआ ३ भूयदिन्ना ४ सेणा ५, सेणास्थाने बहुषु आदर्शेषु एणा दृश्यते, वेणा ६ रेणा ७ च एताः स्थूलभद्रस्य भगिन्यः ।

थेरस्स णं अज्जथूलभद्दस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा–थेरे अज्जमहागिरी एलावच्चसगुत्ते १, थेरे अज्जसुहत्थी वासिट्ठसगुत्ते २, थेरस्स णं अज्जमहागिरिस्स एलावच्चसगुत्तस्स इमे अट्ठ थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा–थेरे उत्तरे १, थेरे वलिस्सहे २ थेरे धणड्ढे ३, थेरे सिरिड्ढे ४, थेरे कोडिन्ने ५, थेरे नागे ६, थेरे नागमित्ते ७, थेरे छलूए रोहगुत्ते कोसियगुत्तेणं ८, थेरेहिंतो णं छलूएहिंतो रोहगुत्तेहिंतो कोसियगुत्तेहिंतो तत्थ णं तेरासिया निग्गया ।

व्याख्या–स्थूलभद्रस्य द्वौ शिष्यौ–आर्यमहागिरिः १ सुहस्ती २ एवं स्थविराः एकविंशतिः २१, श्रीआर्यमहागिरेः अष्टौ शिष्याः–उत्तर १ वलिस्सह २ धणड्ढ ३ सिरिड्ढ ४ कोडिन्न ५ नागे ६ नागमित्त ७ छलूयरोहगुत्त ८, एवं स्थविरा एकोनत्रिंशत् २९ । अत्र छलूयरोहगुप्ततः त्रैराशिकमतं निर्गतं कथं ?, तत्रोच्यते—

श्रीवीरात् चतुश्चत्वारिंशदधिकपञ्चशतवर्षेषु [५४४] व्यतीतेषु, अन्तरञ्जिकायां नगर्यां श्रीरोहगुप्ताचार्यस्य श्रीगुप्तः शिष्यो वर्तते, तस्मिन् प्रस्तावे एको वादी पोट्टशालनामा परिव्राजकः समागतः। परं कीदृशः?। वृश्चिक १ सर्प २ मूषक ३ मृगी ४ वराही ५ काकी ६ शकुनिका ७ विद्याभिः उदरं मे स्फुटतीति बद्धोदरपट्टः, पटहं नगरमध्ये वादयामास—"यो मया सह वादं करोति स पटहं स्पृशतु।" ततः रोहगुप्त उत्थितोऽहं वादं करिष्यामि। ततो गुरुणा तदीयविद्याः प्रजैतृविद्याः मयूरी १ नकुली २ बिडाली ३ व्याघ्री ४ सिंही ५ उलूकी ६ हो[उ]लावकी ७ प्रमुखा दत्ताः। पुनः प्रोक्तं—"अन्यविद्याप्रयुञ्जने इदं मया अभिमन्त्रितं रजोहरणं भ्राम्यं, त्वं अजेयो भविष्यसि।" ततो रोहगुप्तेन बलश्रीनामराजसभायां तेन वादिना समं वादः कृतः, परं न जीयते स्म। वादिना जीवाऽजीवौ स्थापितौ। ततो रोहगुप्तेन दवरक—आवर्तदानेन भूमौ क्षिप्त्वा चलाऽचलो दर्शितः प्रोक्तं—"जीवोऽजीवो नो जीवश्च ३ एवं राशित्रयं स्थापयित्वा, तं निर्जित्य जयं लब्ध्वा महामहोत्सवेन गुरुसमीपे समागतः। गुरुणा प्रोक्तं—"त्वया वादी जितः, श्रीजिनशासनस्य उद्दीपना च कृता, तत् चारु, परं नोजीवो नाऽस्ति।" ततः सङ्घसमक्षं मिथ्यादुष्कृतं देहि।" स च अभिमानी न ददाति। उवाच—"नोजीवोऽप्यस्ति, कथं मिथ्या दुष्कृतं ददामि?।" ततो गुरुणा समं षण्मासान् वादः कृतः। ततः कुत्रिकापणे गत्वा जीवाऽजीव—नोजीवमार्गणे जीवाऽजीवौ देवेन दत्तौ, नोजीवो न दत्तः, असत्त्वात्। तथा चतुश्चत्वारिंशताऽधिकशतेन १४४ पृच्छाभिर्जितो गुरुणा, कोपेन भस्ममल्लकं मस्तके भङ्क्त्वा गच्छात् बहिःकृतः। सोऽपि वैशेषिकमतं प्रवर्तयति

म-कथं नवविधं (९) द्रव्यं १, सप्तदशविधा (१७) गुणाः २६, पञ्चविधं (५) कर्म ३१, त्रिविधं (३) सामान्यं ३४, एकविधो (१) विशेषः ३५, एकविधः (१) समवायः ३६, ततो जीवा १ ऽजीव २ नोजीव ३ नोऽजीव ४ भेदैः चतुर्गुणिताः १४४ प्रश्नभेदानामव्युत्पत्तिरपि इयं। षट्पदार्थरूपकत्वात् षड्गोत्रेण उलूकत्वात् उलूकः, षट् चासौ उलूकश्च षडुलूकः। तमेव व्यनक्ति-"कोसियगुत्तेणं त्ति" उलूक-कौशिकयोः न भेदः।

थेरेहिंतो णं उत्तरबलिस्सहेहिंतो तत्थ णं उत्तरबलिस्सहे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ एवमाहिज्जंति, तं जहा-कोसंबिया १, सोइत्तिया २, कोडंबाणी ३, चंदनागरी ४, थेरस्स णं अज्जसुहत्थिस्स वासिट्ठसगुत्तस्स इमे दुवालस थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-थेरे अ अज्जरोहणे १, जसभद्दे २ मेहगणी ३ य कामिड्ढी ४। सुट्ठिय ५ सुप्पडिबुद्धे ६, रक्खिय ७ तह रोहगुत्ते ८ अ ॥ १ ॥ इसिगुत्ते ९ सिरिगुत्ते १०, गणी अ बंभे ११ गणी य तह सोमे १२। दस दो य गणहरा खलु, एए सीसा सुहत्थिस्स ॥ २ ॥

व्याख्या-तथा उत्तरबलिस्सहस्थविरात् उत्तरबलिस्सहनामा गणो निर्गतः। एवं गणौ द्वौ २ तस्य उत्तरबलि-

सहगणस्य चतस्रः शाखा जाताः–कोसंबिया १ सुत्तिवत्तिया २ कोडंबाणी ३ चंदनागरी ४ एवं शाखाः ८। सुहस्तिस्थविरस्य द्वादश शिष्या जाताः–अज्जरोहणे १ जसभद्दे २ मेहेय ३ कमिड्ढी ४ सुट्ठिअ ५ सुप्पडिबुद्धे ६ रक्खिय ७ रोहगुत्ते ८ इसिगुत्ते ९ सिरिगुत्ते १० बंभे ११ सोमे १२ इति एवं स्थविरा एकचत्वारिंशत् ४१।

थेरेहिंतो णं अज्जरोहणेहिंतो णं कासवगुत्तेहिंतो णं तत्थ णं उद्देहगणे नामं गणे निग्गए, तस्सिमाओ चत्तारि साहाओ निग्गयाओ, छच्च कुलाइं एवमाहिज्जंति। से किं तं साहाओ?, साहाओ एवमाहिज्जंति, तं जहा–उदुंबरिज्जिया १, मासपूरिआ २, मइपत्तिया ३, पुण्णपत्तिया ४, से तं साहाओ, से किं तं कुलाइं?, एवमाहिज्जंति, तं जहा–पढमं च नागभूयं, बिइयं पुण सोमभूइयं होइ। अह उल्लगच्छ तइअं ३, चउत्थयं हत्थलिज्जं तु ॥ १ ॥ पंचमगं नंदिज्जं ५, छट्ठं पुण पारिहासयं ६ होइ। उद्देहगणस्सेए, छच्च कुला हुंति नायव्वा ॥ २ ॥ थेरेहिंतो णं सिरिगुत्तेहिंतो हारियसगुत्तेहिंतो इत्थ णं चारणगणे नामं गणे निग्गए तस्स णं इमाओ चत्तारि साहाओ, सत्त य कुलाइं एवमाहिज्जंति, से किं तं साहाओ?, साहाओ एवमाहिज्जंति,

तं जहा—हारियमालागारी १, संकासीआ २, गवेधुया ३, वज्जनागरी ४, से तं साहाओ, से किं तं कुलाइं ?, कुलाइं एवमाहिज्जंति, तं जहा—पढमित्थ वत्थलिज्जं १, बीयं पुण पीइधम्मिअं २ होइ । तइअं पुण हालिज्जं ३ चउत्थयं पूसमित्तिज्जं ॥ १ ॥ पंचमगं मालिज्जं ५, छट्ठं पुण अज्जवेडयं ६ होइ । सत्तमयं कण्हसहं ७, सत्त कुला चारणगणस्स ॥ २ ॥

व्याख्या—रोहणस्थविरात् उद्देहनामगणो निर्गतः, एवं गणाः त्रयः ३ उद्देहगणस्य चतस्रः शाखा जाताः—उदंबरिज्जिया १ मासपुरिया २ मइपत्तिया ३ पुन्नपत्तिया ४ एवं शाखा द्वादश १२। पुनः उद्देहगणात् षट् कुलानि जातानि। नागभूयं १ सोमभूइअं २ उल्लगच्छं ३ हत्थलिज्जं ४ नंदिज्जं ५ पारिहासयं ६ एवं कुलानि षट् ६। श्रीगुत्तिस्थविरात् चारणनामा गणो निर्गतः । एवं गणाः चत्वारः ४ चारणगणात् चतस्रः शाखा निर्गताः—हारियमालागारी १ संकासिआ २ गवेधुया ३ वज्जनागरी ४ एवं शाखाः षोडश १६, पुनः चारणगणात् सप्त कुलानि जातानि—वत्थलिज्जं १ पीइधम्मियं २ हालिज्जं ३ पूसमित्तिज्जं ४, मालिज्जं ५ अज्जवेडयं ६ कण्हसहं ७ एवं कुलानि सप्तदश १७।

थेरेहिंतो भद्दजसेहिंतो भारद्दायसगुत्तेहिंतो इत्थ णं उडुवाडियगणे नामं गणे निग्गए, तस्स

णं इमाओ चत्तारि साहाओ तिण्णि कुलाइं एवमाहिज्जंति, से किं तं साहाओ?, साहाओ एवमाहिज्जंति, तं जहा–चंपिज्जिया १ भद्दिज्जिया २ काकंदिया ३ मेहलिज्जिया ४, से तं साहाओ, से किं तं कुलाइं?, कुलाइं एवमाहिज्जंति, तं जहा–भद्दजसियं १ तह भद्दगुत्तियं २ तइयं च होइ जसभद्दं ३। एयाइं उडुवाडियगणस्स, तिण्णेव य कुलाइं ॥ १ ॥ थेरेहिंतो णं कामिड्ढीहिंतो कोडालसगुत्तेहिंतो इत्थ णं वेसवाडियगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ चत्तारि कुलाइं एवमाहिज्जंति। से किं तं साहाओ?, साहाओ एवमाहिज्जंति। तं जहा–सावत्थिया १, रज्जपालिआ २, अंतरिज्जिया ३, खेमलिज्जिया ४, से तं साहाओ, से किं तं कुलाइं?, कुलाइं एवमाहिज्जंति, तं जहा–गणियं १ मेहियं २ कामिड्ढिअं ३ च तह होइ इंदपुरगं ४ च। एयाइं वेसवाडियगणस्स चत्तारि उ कुलाइं ॥ १ ॥

व्याख्या–भद्रजसस्थविरात् उडुवाडियनामा गणो निर्गतः। एवं गणाः पञ्च ५, पुनः उडुवाडियगणस्य चतस्रः शाखा जाताः–चंपिज्जिया १ भद्दिज्जिया २ काकंदिया ३ मेहलिज्जिया ४ एवं शाखाः विंशतिः २०

पुनः उड्डवाडियगणस्य त्रीणि कुलानि जातानि—भद्दजसियं १ भद्दगुत्तियं २ जसभद्दं ३ एवं कुलानि १५। कामड्ढिस्थविरात् वेसवाडियनामा गणो निर्गतः, एवं गणाः षट् ६। तस्य वेसवाडियगणस्य चतस्रः शाखाः जाताः—सावत्थिया १ रज्जपालिआ २ अंतरिज्जिया ३ खेमलिज्जिया ४ एवं शाखाश्चतुर्विंशतिः २४। पुनः वेसवाडियगणस्य चत्वारि कुलानि जातानि—गणियं १ मेहियं २ कामड्ढिअं ३ इंदपुरगं च ४ एवं कुलानि एकोनविंशतिः १९।

थेरेहिंतो णं इसिगुत्तेहिंतो काकंदएहिंतो वासिट्ठसगुत्तेहिंतो इत्थ णं माणवगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ तिण्णि य कुलाइं एवमाहिज्जंति, से किं तं साहाओ। साहाओ एवमाहिज्जंति, तं जहा—कासवज्जिया १ गोयमज्जिया २ वासिट्ठिया ३ सोरट्ठिया ४। से तं साहाओ, से किं तं कुलाइं ?, कुलाइं एवमाहिज्जंति, तं जहा—इसिगुत्ति इत्थ पढमं १, बीयं इसिदत्तिअं मुणेयव्वं २। तइयं च अभिजयंतं ३, तिण्णि कुला माणवगणस्स ॥१॥ थेरेहिंतो सुट्ठिय—सुप्पडिबुद्धेहिंतो कोडिय—काकंदएहिंतो वग्घावच्चसगुत्तेहिंतो इत्थ णं कोडियगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ चत्तारि कुलाइं एवमा-

हिज्जंति । से किं तं साहाओ ।, साहाओ एवमाहिज्जंति, तं जहा-उच्चानागरि १ विज्जाहरी य २ वइरी य ३ मज्झिमिल्ला ४ य । कोडियगणस्स एया हवंति चत्तारि साहाओ ॥ १ ॥ से तं साहाओ, से किं तं कुलाइं । कुलाइं एवमाहिज्जंति, तं जहा-पढमित्थ बंभलिज्जं १, बिइयं नामेण वत्थलिज्जं तु २ । तइयं पुण वाणिज्जं ३ चउत्थयं पण्हवाहणयं ४ ॥ १ ॥

व्याख्या-तथा ऋषिगुप्तस्थविरात् माणवनामा गणो निर्गतः, एवं गणाः सप्त ७ । तस्य माणवगणस्य चतस्रः शाखाः जाताः-कासवज्जिया १ गोयमिज्जिया २ वासिट्ठिया ३ सोरट्ठिया ४ एवं शाखाः अष्टाविंशतिः २८ । पुनः मानवगणस्य त्रीणि कुलानि जातानि । इसिगुत्तियं १ इसिदत्तियं २ अभिजयंतं ३ एवं कुलानि द्वाविंशतिः २२ । सुस्थित-सुप्रतिबुद्धस्थविरतः कोडियनामा गणो निर्गतः, एवं गणा अष्टौ ८ । तस्य कोडियगणस्य चतस्रः शाखा जाताः-उच्चानागरी १ विज्जाहरी २ वइरी ३ मज्झिमिल्ला ४ । एवं शाखा द्वात्रिंशत् ३२ । पुनः कौटिकगणस्य चत्वारि कुलानि जातानि-बंभलिज्जं १ वत्थलिज्जं २ वाणिज्जं ३ पण्हवाहणयं ४ एवं कुलानि षड्विंशतिः २६ । पण्हवाहणयकुलात् मलधारगच्छो जातः,

थेराणं सुट्ठिय-सुप्पडिबुद्धाणं कोडिय-काकंदयाणं वग्घावच्चसगुत्ताणं इमे पंच थेरा अंतेवासी

अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे अज्जइंददिन्ने १ थेरे पियगंथे २ थेरे विज्जाहरगोवाले कासवगुत्ते णं ३ थेरे इसिदिन्ने ४ थेरे अरिहदत्ते ५। थेरेहिंतो णं पियगंथेहिंतो एत्थ णं मज्झिमा साहा निग्गया, थेरेहिंतो णं विज्जाहरगोवालेहिंतो कासवगुत्तेहिंतो एत्थ णं विज्जाहरी साहा निग्गया। थेरस्स णं अज्जइंददिन्नस्स कासवगुत्तस्स अज्जदिन्ने थेरे अंतेवासी गोयमसगुत्ते। थेरस्स णं अज्जदिन्नस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे अज्जसंतिसेणिए माढरसगुत्ते १, थेरे अज्जसीहगिरी जाइस्सरे कोसियगुत्ते २। थेरेहिंतो णं अज्जसंतिसेणिएहिंतो माढरसगुत्तेहिंतो एत्थ णं उच्चानगरी साहा निग्गया। थेरस्स णं अज्जसंतिसेणियस्स माढरसगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा (ग्रं० १०००) थेरे अज्जसेणिए १ थेरे अज्जतावसे २ थेरे अज्जकुबेरे ३ थेरे अज्जइसिपालिए ४। थेरेहिंतो णं अज्जसेणिएहिंतो एत्थ णं अज्जसेणिया साहा निग्गया, थेरेहिंतो णं अज्जतावसेहिंतो एत्थ णं अज्जतावसी साहा निग्गया, थेरेहिंतो णं अज्जकुबेरेहिंतो एत्थ णं अज्ज-

कुवेरी साहा निग्गया, थेरेहिंतो णं अज्जइसिपालिएहिंतो एत्थ णं अज्जइसिपालिया साहा निग्गया। थेरस्स णं अज्जसीहगिरिस्स जाइस्सरस्स कोसियगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावंचा अभिण्णाया हुत्था, तं जहा–थेरे धणगिरी १ थेरे अज्जवइरे २ थेरे अज्जसमिए ३ थेरे अरिहदिन्ने ४। थेरेहिंतो णं अज्जसमिएहिंतो गोयमसगुत्तेहिंतो इत्थ णं बंभदीविया साहा निग्गया, थेरेहिंतो णं अज्जवइरेहिंतो गोयमसगुत्तेहिंतो इत्थ णं अज्जवइरी साहा निग्गया,

व्याख्या–सुट्ठिअ–सुप्पडिवुद्धानां पञ्च शिष्या जाताः–अज्जइंददिन्ने १ पियगंथे २ विज्जाहरगोवाले ३ इसिदत्ते ४ अरिहदत्ते ५ एवं स्थविराः षट्चत्वारिंशत् ४६। प्रियग्रन्थस्थविरसंबन्धस्तु एवं श्रीहर्षपुरे नगरे अजमेरवासन्ने जिनमन्दिराणि यत्र त्रीणि शतानि ३००, लौकिकदेवगृहाणि चत्वारि शतानि ४००, अष्टौ सहस्राणि ब्राह्मणगृहाणि ८०००, वणिजानां गृहाणि षट्त्रिंशत्सहस्राणि ३६०००, आरामा नव शतानि ९००, वाप्यः सप्तशतानि ७००, सत्रागाराः सप्त शतानि ७०० यत्र वर्तन्ते, तस्मिन् राजा सुभटपालनामा, एकदा ब्राह्मणैः यज्ञे प्रारब्धे छागो हन्तुं आरब्धः, तत्र श्रीप्रियग्रन्थसूरयः समागताः। तैः श्रावकस्य हस्ते वासक्षेपोऽभिमन्त्र्य दत्तः, तेन छागमस्तके क्षिप्तः। ततो अम्बिका छागं अधिष्ठितवती। ततः छागः उड्डीय

आकाशे स्थित्वा उवाच—"भो ! यथा युष्माभिर्दयारहितैः निरपराधी अहं हन्ये, तथा अहं चेत् निर्दयः स्यां तदा सर्वान् युष्मान् हन्मि । पुनः हनुमता राक्षसाणां कुले यत् कृतं तत् भवतां अप्यहं करोमि, परं यदि कृपा अन्तरायकारिणी न भवेत् ।" पुनः प्रोक्तं—"पशुदेहे यावन्ति रोमकूपाणि सन्ति तत्पशुमारणे रोमकूप-तुल्यानि वर्षसहस्राणि यावत् नरके पशुघातकाः पच्यन्ते । पुनरपि यो दाता स्वर्णमेरुं विभज्य याचकानां दत्ते । पुनः यः पृथिवीं समस्तां दत्ते, एतद्दानद्वयपुण्यात् अपि एकं जीवं मार्यमाणं रक्षेत् तत्पुण्यं अधिकं । पुनरपि दक्षिणासहिता यागाः एकत, एकतस्तु भयभीतस्य प्राणिनो रक्षणं तदधिकं । पुनः दानानां महता-मपि कालेन फलं क्षीयते, परं अभयदानस्य क्षय एव नास्ति ।" तदा यज्ञकारकैः प्रोक्तं—"कस्त्वं आत्मानं प्रकाशय ।" तेनोक्तं—"अग्निदेवोऽहं मम चेदं वाहनं छागरूपं कथं होतुमारब्धं ? ।" तैः प्रोक्तं—"धर्मार्थं ।" देवेन प्रोक्तं—"पशुवधे महापापं ।" अत्रार्थे प्रियग्रन्थसूरयः प्रष्टव्याः । ततः तैः सूरयः पृष्टाः जीवदयारूपं शुचिधर्मं प्राहुः । ततस्ते याज्ञिकाद्या बहवो लोकाः प्रतिबुद्धाः । जाता जैनधर्ममहिमा । प्रियग्रन्थसूरितो मध्यमा शाखा निर्गता १ विज्जाहरगोवालेहिंतो विज्जाहरी शाखा निर्गता २ एवं शाखाश्चतुस्त्रिंशत् ३४ । इन्द्रदिन्नस्य शिष्यो दिन्नो जातः । स्थविराः सप्तचत्वारिंशत् ४७, आर्यदिन्नस्य द्वौ शिष्यौ—अज्जसंतिसेणिए १ अज्जसीहगिरी न २ स्थविरा एकोनपञ्चाशत् ४९ । अज्जसंतिसेणित उच्चानागरी—शाखाः जाताः ३५ एवं शाखाः पञ्चत्रिंशत् ३५ । पुनः आर्यशान्तिसैनिकसूरेः चत्वारः शिष्या जाताः—अज्जसेणिए १ अज्जतावसे २ अज्जकुबेरे ३

अज्जइसिपालिए ४ एवं स्थविराः त्रिपञ्चाशत् ५३। आर्यसैनिकसूरितः–अज्जसेणिया–शाखाः निर्गताः १ अज्जतावससूरितोऽज्जतावसी–शाखाः निर्गताः २ अज्जकुबेरसूरितोऽज्जकुबेरी–शाखाः निर्गताः ३, अज्जइसिपालिसूरितोऽज्जइसिपालिया–शाखाः निर्गताः ४ एवं शाखा एकोनचत्वारिंशत् ३९। सीहगिरिसूरेः समुत्पन्नजातिस्मरणज्ञानस्य चत्वारः शिष्याः–धणगिरि १ वइरे २ समिए ३ अरिहदिन्ने ४। एवं स्थविराः सप्तपञ्चाशत् ५७। आर्यसमितसूरितः वंभदीविया–शाखाः निर्गताः १ वइरस्वामितो वइरी–शाखाः निर्गताः २ एवं शाखा एकचत्वारिंशत् ४१ वंभदीवियाशाखाया उत्पत्तिः यथा—

आभीरदेशे अचलपुरासन्ने कन्न–वेन्नानद्योः मध्ये ब्रह्मद्वीपोऽभूत्। तत्र पञ्चशततापसाः प्रतिवसन्ति, तेषु एकः तापसः पादलेपेन पादुकस्थेन वेन्नानदीं उत्तीर्य पारणाय याति। लोकाः तपस इयं शक्तिः इति ज्ञात्वा तापसभक्ता जाताः, श्राद्धान् प्रतिनिन्दन्ति "यत् भवतां गुरुषु न कोऽपि प्रभावः" इति। ततः श्रावकैः श्रीवज्रस्वामिमातुलाः श्रीआर्यसमितसूरयः आकारिताः। तैः प्रोक्तं–"स्तोकमिदं पादलेपशक्तिरियं, न तपसः शक्तिरिति।" ततो गुरूपदेशात् श्रावकैः स तपस्वी भोजनार्थं गृहे निमन्त्र्य पादपादुकाधावनपूर्वं भोजितः सत्कृतश्च। ततः तेन समं श्रावका नदीतटे गताः। स प्रविष्टमात्र एव लेपाऽभावात् ब्रुडितुं लग्नो, जाता अपभ्राजना। ततः श्रीआर्यसमितसूरयः तत्र समागता लोकबोधनार्थं चप्पटिकां दत्त्वा प्राहुः–"वेन्ने! परं पारं यास्यामः" इत्युक्ते मिलितं कूलद्वयं लोका विस्मयं प्राप्ताः। ततः सूरयः पौरलोकसहिता एव गताः

तापसस्थाने धर्मोपदेशेन प्रतिबोधिताः, सर्वेऽपि तापसाः पञ्चशताः ते दीक्षिताः । चूर्णप्रयोगोऽयं न तेषां तपःप्रभावः इति जिनशासनमहिमा जाता। सूरयः सङ्घसहिताः स्वस्थानं प्राप्ताः । ततः तेभ्यः तापससाधुभ्यो ब्रह्मद्वीपिका-शाखाः जाताः ॥

थेरस्स णं अज्जवइरस्स गोयमसगुत्तस्स इमे तिण्णि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे अज्जवइरसेणे १ थेरे अज्जपउमे २ थेरे अज्जरहे ३। थेरेहिंतो णं अज्जवइरसेणेहिंतो इत्थ णं अज्जनाइली साहा निग्गया, थेरेहिंतो णं अज्जपउमेहिंतो इत्थ णं अज्जपउमा साहा निग्गया, थेरेहिंतो णं अज्जरहेहिंतो इत्थ णं अज्जजयंतीसाहा निग्गया। थेरस्स णं अज्जरहस्स वच्छसगुत्तस्स अज्जपूसगिरी थेरे अंतेवासी कोसियगुत्ते १६। थेरस्स णं अज्जपूसगिरिस्स कोसियगुत्तस्स अज्जफग्गुमित्ते थेरे अंतेवासी गोयमसगुत्ते १७। थेरस्स णं अज्जफग्गुमित्तस्स गोयमसगुत्तस्स अज्जधणगिरी थेरे अंतेवासी वासिट्ठसगुत्ते १८। थेरस्स णं अज्जधणगिरिस्स वासिट्ठसगुत्तस्स अज्जसिवभूई थेरे अंतेवासी कुच्छसगुत्ते १९। थेरस्स णं अज्ज-

सिवभूइस्स कुच्छसगुत्तस्स अज्जभद्दे थेरे अंतेवासी कासवगुत्ते २० । थेरस्स णं अज्जभद्दस्स कासवगुत्तस्स अज्जनक्खत्ते थेरे अंतेवासी कासवगुत्ते २१ । थेरस्स णं अज्जनक्खत्तस्स कासवगुत्तस्स अज्जरक्खे थेरे अंतेवासी कासवगुत्ते २२ । थेरस्स णं अज्जरक्खस्स कासवगुत्तस्स अज्जनागे थेरे अंतेवासी गोअमसगुत्ते २३ । थेरस्स णं अज्जनागस्स गोअमसगुत्तस्स अज्जजेहिल्ले थेरे अंतेवासी वासिट्ठसगुत्ते २४ । थेरस्स णं अज्जजेहिल्लस्स वासिट्ठसगुत्तस्स अज्जविण्हू थेरे अंतेवासी माढरसगुत्ते २५ । थेरस्स णं अज्जविण्हुस्स माढरसगुत्तस्स अज्जकालए थेरे अंतेवासी गोयमसगुत्ते २६ । थेरस्स णं अज्जकालयस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी गोयमसगुत्ता—थेरे अज्जसंपलिए १, थेरे अज्जभद्दे २, २७ । एएसि णं दुण्हवि थेराणं गोयमसगुत्ताणं अज्जवुड्ढे थेरे अंतेवासी गोयमसगुत्ते २८ । थेरस्स णं अज्जवुड्ढस्स गोयमसगुत्तस्स अज्जसंघपालिए थेरे अंतेवासी गोयमसगुत्ते २९ । थेरस्स णं अज्जसंघपालिअस्स गोयमसगुत्तस्स अज्जहत्थी थेरे अंतेवासी कासवगुत्ते ३० । थेरस्स णं अज्जहत्थिस्स कासवगुत्तस्स अज्जधम्मे

थेरे अंतेवासी सावयगुत्ते ३१। थेरस्स णं अज्जधम्मस्स सावयगुत्तस्स अज्जसिंहे थेरे अंतेवासी कासवगुत्ते ३२। थेरस्स णं अज्जसिंहस्स कासवगुत्तस्स अज्जधम्मे थेरे अंतेवासी कासवगुत्ते ३३। थेरस्स णं अज्जधम्मस्स कासवगुत्तस्स अज्जसंडिल्ले थेरे अंतेवासी ३४॥

व्याख्या–अथ वइरस्वामिनः त्रयः शिष्याः–वइरसेणे १ पउमे २ अज्जरहे ३ एवं स्थविराः षष्टिः ६०। वज्रसेनतो नाइली–शाखाः निर्गता: १ पद्मसूरितः पउमाशाखाः निर्गताः २ अज्जरहसूरितो जयन्ती शाखाः निर्गताः ३, एवं शाखाः चतुश्चत्वारिंशत् ४४। आर्यरथसूरेः शिष्यः पूसगिरी, पूसगिरिसूरेः शिष्यः फग्गुमित्ते २, फग्गुमित्तसूरेः शिष्यो धणगिरी ३, धणगिरिशिष्यः सिवभूई ४ शिवभूतिशिष्यः एको बोटकनामाऽभूत्। तस्मात् वीरात् सं० ६०९ वर्षे बोटकमतं जातं, दिगम्बरमतमित्यर्थः। शिवभूतिशिष्यः अज्जभद्दे ५, आर्यभद्रस्य शिष्यः अज्जनक्खत्ते ६, अज्जनक्खत्तशिष्यः अज्जरक्खे ७, अज्जरक्खशिष्यः अज्जनागे ८, अज्जनागशिष्यः अज्जजेहिले ९, अज्जजेहिलशिष्यः अज्जविण्हू १०, अज्जविण्हुशिष्यः अज्जकालए ११, अज्जकालगस्य द्वौ शिष्यौ–अज्जसंपलिए १ अज्जभद्दे २ एतयोः द्वयोः शिष्यः अज्जवुड्ढे १४ अज्जवुड्ढशिष्यः सङ्घपालितः १५ सङ्घपालितशिष्यः अज्जहत्थी १६ अज्जहत्थिशिष्यः अज्जधम्मे १७ अज्जधम्मशिष्यः अज्जसीहे १८ अज्जसीहशिष्यः अज्जधम्मे १९ अज्जधम्मशिष्यः अज्जसंडिल्लः २० एवं स्थविराः अशीतिः जाताः विस्तरवाचनासत्काः ८०।

वंदामि फग्गुमित्तं च गोयमं धणगिरिं च वासिट्ठं। कुच्छं सिवभूइंपिय, कोसिय दुज्जंतकण्हे अ ॥१॥
ते वंदिऊण सिरसा, भद्दं वंदामि कासवसगुत्तं। नक्खं कासवगुत्तं, रक्खंपिय कासवं वंदे ॥२॥
वंदामि अज्जनागं च गोयमं जेहिलं च वासिट्ठं। विण्हुं माढरगुत्तं, कालगमवि गोयमं वंदे ॥३॥
गोयमगुत्तकुमारं, संपलियं तहय भद्दयं वंदे। थेरं च अज्जवुड्ढं, गोयमगुत्तं नमंसामि ॥४॥
तं वंदिऊण सिरसा, थिरसत्तचरित्तनाणसंपन्नं। थेरं च संघवालिय, गोयमगुत्तं पणिवयामि ॥५॥
वंदामि अज्जहत्थिं च, कासवं खंतिसागरं धीरं। गिम्हाण पढममासे कालगयं चेव सुद्धस्स ॥६॥
वंदामि अज्जधम्मं च, सुव्वयं सीललद्धिसंपन्नं। जस्स निक्खमणे देवो, छत्तं वरमुत्तमं वहइ ॥७॥

---

१ वन्देऽहं फल्गुमित्रं च गौतमं धनगिरिं च वाशिष्ठम् ॥ कुच्छं शिवभूतिमपि च कौशिक–दुर्यान्त–कृष्णं च ॥ १ ॥ तं वन्दित्वा शिरसा, भद्रं वन्दे काश्यपसगोत्रम् ॥ नक्षं काश्यपगोत्रं, रक्षमपि च काश्यपं वन्दे ॥ २ ॥ वन्देऽहम् आर्यनागं च, गौतमं जेहिलं च वाशिष्ठम् ॥ विष्णुं माढरगोत्रं, कालकमपि गौतमं वन्दे ॥ ३ ॥ गौतमगुप्तकुमारं संपलितं तथा च भद्रकं वन्दे ॥ स्थविरं चाऽऽर्यवृद्धं गौतमगोत्रं नमस्कुर्वे ॥ ४ ॥ तं वन्दित्वा शिरसा, स्थिरसत्त्व–चरित्र–ज्ञानसंपन्नम् ॥ स्थविरं च सङ्घपालितं, गौतमगोत्रं प्रणमामि ॥ ५ ॥ वन्दे आर्यहस्तिनं च, काश्यपं क्षान्तिसागरं धीरम् ॥ ग्रीष्मस्य प्रथममासे, कालगतं चैत्रशुक्लस्य ॥ ६ ॥ वन्दे आर्यधर्मं च,

हत्थं कासवगुत्तं, धम्मं सिवसाहगं पणिवयामि । सीहं कासवगुत्तं, धम्मंपिय कासवं वंदे ॥८॥
तं वंदिऊण सिरसा, थिरसत्तचरित्तनाणसंपन्नं । थेरं च अज्जजंबुं, गोयमगुत्तं नमंसामि ॥९॥
मिउमद्दवसंपन्नं, उवउत्तं नाणदंसणचरित्ते। थेरं च नंदियंपिय, कासवगुत्तं पणिवयामि ॥१०॥
तत्तो य थिरचरित्तं, उत्तमसम्मत्तसत्तसंजुत्तं । देसिगणिखमासमणं, माढरगुत्तं नमंसामि ॥११॥
तत्तो अणुओगधरं, धीरं मइसागरं महासत्तं । थिरगुत्तखमासमणं, वच्छसगुत्तं पणिवयामि ॥१२॥
तत्तो य नाणदंसण—चरित्ततवसुट्ठियं गुणमहंतं । थेरं कुमारधम्मं, वंदामि गणिं गुणोवेयं ॥१३॥

---

गुप्तं शीलब्धिसंपन्नम् ॥ यस्य निष्क्रमणे देवः छत्रं वरमुत्तमं वहति ॥ ७ ॥ हस्तिनं काश्यपगोत्रं, धर्मं शिवसाधकं प्रणमामि ॥ सिंहं काश्यपगोत्रं, धर्ममपि च काश्यपं वन्दे ॥ ८ ॥ तं वन्दित्वा शिरसा, स्थिरसत्त्व—चरित्र—ज्ञानसंपन्नम् ॥ स्थविरं चाऽऽर्यजम्बुं, गौतमगोत्रं नमस्कुर्वे ॥९॥ मृदुमार्दवसंपन्नं, उपयुक्तं ज्ञान—दर्शन—चरित्रेषु ॥ स्थविरं च नन्दितपितरं काश्यपगोत्रं प्रणमामि ॥ १० ॥ ततश्च स्थिरचारित्रं, उत्तमसम्यक्त्वसत्त्वसंयुक्तम् ॥ देशिगणिक्षमाश्रमणं, माढरगोत्रं नमस्कुर्वे ॥११॥ ततोऽनुयोगधरं, धीरं मतिसागरं महासत्त्वम् ॥ स्थिरगुप्तक्षमाश्रमणं, वत्सगोत्रं प्रणमामि ॥ १२ ॥ ततश्च ज्ञान—दर्शन—चरित्र—तपस्सु स्थितं गुणमहान्तम् ॥ स्थविरं कुमारधर्मं, वन्दे

सुत्तत्थरयणभरिए, खमदमसद्दवगुणेहिं संपन्ने । देविड्ढिखमासमणे, कासवगुत्ते पणिवयामि ॥१४॥

॥ इति स्थविरावली—सूत्रम् ॥

अथ श्रीसुधर्मस्वामि १ जम्बूस्वामि २ प्रभवस्वामि ३ शय्यंभवसूरिः ४ स्थविराः संक्षिप्तवाचनासत्काः चत्वारः सन्ति, तेषां मीलने स्थविराः चतुरशीतिः ८४, शाखाः पञ्चचत्वारिंशत् ४५, गणा अष्टौ ८, कुलानि सप्तविंशतिः २७ सन्ति। अत्रान्तरे "वंदामि फग्गुमित्तं च" इत्यादि गाथावृन्दं बहुषु आदर्शेषु दृश्यते, कतिपयपुस्तकेषु च "थेरस्स णं अज्जफग्गुमित्तस्स गोयमसगुत्तस्स अज्जधणगिरी थेरे अंतेवासी वासिट्ठगुत्ते" इत्यादि यावत् "थेरस्स णं अज्जसीहस्स कासवगुत्तस्स अज्जधम्मे थेरे अंतेवासी कासवगुत्ते थेरस्स णं अज्जधम्मस्स कासवगुत्तस्स अज्जसंडिल्ले थेरे अंतेवासी" इति पर्यन्तं दृश्यते, तदनन्तरं च "वंदामि फग्गुमित्तं च" इत्यादिगाथाः, तत्र च गद्योऽर्थः पुनः पद्यैः संगृहीत इति न पौनरुक्त्यं भावनीयं। गाथाश्च सुगमा एव अतो न विवृताः।

तथा अत्र स्थविरावलीमध्ये श्रीआर्यरक्षितादयो नोक्ताः, परं तेऽपि स्थविरा एव इति तेषां सम्बन्धो लिख्यते—

गणिं गुणोपेतम् ॥ १३ ॥ सूत्रा-ऽर्थरत्नभरितं, क्षम-दम-मार्दवगुणैः संपन्नम् ॥ देवर्धिक्षमाश्रमणं, काश्यपगोत्रं प्रणमामि ॥ १४ ॥

दशपुरे नगरे सोमदेवः पुरोहितः, रुद्रसोमा भार्या, तयोः पुत्रः आर्यरक्षितो विदेशे गत्वा चतुर्दश विद्याः पठित्वा आगतः, राज्ञा हस्तिस्कन्धे समारोप्य महामहोत्सवेन गृहे प्रापितः, मातुः चरणौ ननाम। परं माता न तादृशी हर्षिता, कथं? इति पृष्टा प्राह–"अहं तु परमार्हता श्राविका, त्वया तु नरकपातकारिण्यो विद्या भणिताः, किं ताभिः? यदि मां मन्यसे, सुबुद्धिश्च तदा दृष्टिवादं पठ।" ततः तं भणितुं इच्छन् दृष्टीनां=दर्शनानां वादो=विचारणा "दृष्टिवाद" इति नामापि शोभनं अस्य इति ध्यायन्, रात्रौ मातरं पृष्ट्वा तत् पठनाय चलितः। इक्षुवाटकस्थस्य स्वमातुलस्य तोसलिपुत्राचार्यस्य समीपे अग्रे गच्छतः सम्मुखं मिलनार्थं आगच्छन् पितृमित्रद्विजः तस्य हस्ते सार्धनव ९॥ इक्षुयष्टयो दृष्टाः। शकुनं विचारितं, दृष्टिवादं सार्धनवपूर्वाणि यावत् पठिष्यामि। ततः ता इक्षुयष्टीः मातुः अर्पणाय आदिश्य गतः। तेषां उपाश्रयद्वारे ढड्ढरश्रावकेण समं गुरून् वन्दित्वा अग्रे उपविष्टः, श्राद्धवत् वन्दनात् गुरुभिः अभिनवश्राद्धः ढड्ढरश्राद्धश्च उक्तः। साधुभिः उपलक्षितोऽयं श्रीगुरूणां भागिनेयो भवति। गुरुभिः देशनां दत्त्वा योग्यतां ज्ञात्वा सांसारिकभीत्या अन्यत्र गत्वा दीक्षितः। स्वपार्श्वस्थं श्रुतं पाठितं। पूर्वाध्ययनार्थं श्रीवज्रस्वामिसमीपे मुक्तः, ततो गच्छन् उज्जयिन्यां श्रीभद्रगुप्तसूरिकृताऽनशनं निरयापयामास। तेन कथितं–"वज्रस्वामितः पृथगुपाश्रये स्थेयं। यतः तेन सह सोपक्रमायुष्क एकरात्रिमपि वसेत्, स तेनैव सह म्रियते" इति। ततः तत्र गत्वा श्रीवज्रस्वामिनं नत्वा उपाश्रये उपधिं मुक्त्वा स्वयं पृथक् स्थितः। श्रीवज्रस्वामिना च तदागमनरात्रौ स्वप्नो दृष्टो

यथा—"अस्मत् पायसपात्रं केनचित् प्राघूर्णकेन आगत्य पीतं, किंचित् स्तोकमेव स्थितं।" ततः प्रातः आगतस्य आर्यरक्षितस्य पूर्वाणि अध्यापयन् दशमपूर्वयमकेषु अधीयमानेषु पितृभिः सन्देशकारकैः आकारणेऽपि अनागमनेऽपि तस्य लघुभ्राता फल्गुरक्षितो मातृप्रमुखैः मुक्तः, सोऽपि प्रतिबोध्य दीक्षितः। ततः स्वजनान् प्रतिबोधयितुं गमनाय समुत्सुकः पप्रच्छ—"दशमं पूर्वं अद्यापि कियत् तिष्ठति ?।" गुरुभिः प्रोक्तं—"बिन्दुमात्रं पठितं समुद्रतुल्यं तिष्ठति।" ततो भणनाय भग्नोत्साहोऽपि कियत् पपाठ। ततो गुरुभिः शेषश्रुतस्य स्वस्मिन् विच्छेदं विज्ञाय अनुज्ञा दत्ता। ततः फल्गुरक्षितो दशपुरे गतो, राज्ञा प्रवेशोत्सवः कृतः, मातृ-भगिन्यादीन् असारसंसारस्वरूपं दर्शयित्वा प्राव्राजयत्। पिता तु पुत्रानुरागेण प्रव्रजितः स्नुषादिलज्जया धौतिक १ यज्ञोपवीत २ छत्रिक ३ उपानह ४ कमण्डलूनि ५ न मुञ्चति। ततो गुरुशिक्षिता बालादयो वदन्ति—"सर्वान् साधून् वयं वन्दामहे, परं छत्रिकावन्तं न।" ततो वन्दनावञ्चितः छत्रिकां मुमोच। एवं क्रमेण [कमण्डलुं] कुण्डिकां यज्ञोपवीतं उपानहौ च अमुञ्चत्, धौतिकं तु तथापि न मुक्तवान्। अन्यदा अनशनं कृत्वा कोऽपि साधुः मृतः, गुरुशिक्षया वैयावृत्तिकरणार्थं साधुषु विवदमानेषु सोमदेवेन पृष्टं—"किमत्र महानिर्जरा वर्तते ? ।" गुरुणा प्रोक्तं—"एवं।" "तर्हि अहं वहामि झम्पानं [शिबिकां]।" गुरुणा प्रोक्तं—"उपसर्गसहने शक्तिः भवति तदा वहत, नो चेत् नहि, अन्यथा अरिष्टं भवति।" ततः तं उत्क्षिप्य [उत्थाप्य] मार्गे व्रजन् गुरुशिक्षितैः बालैः धौतिकमपकृष्य चोलपट्टं परिधापितः। पश्चात् स्थितस्नुषादिप्रव्रजितपरिवारेण दृष्टो

लज्जितः प्राह–"अथ चोलपट्टपरिधापनेन किं?, यद् द्रष्टव्यं तद् दृष्टं" इति। गुरुभिः प्रोक्तं–"चोलपट्टः तिष्ठतु।" तथा भिक्षार्थं न याति, लज्जा वही। ततो गुरुभिः साधूनां प्रोक्तं–"भवद्भिः न आनीय देया, स्वयं यास्यति।" इत्युक्त्वा गुरवोऽन्यत्र विहृताः। साधुभिः आनीय स्वयं आहारः कृतः, तस्मै न दत्तः। स च क्षुधित एव तस्थौ। द्वितीयदिने गुरव आगताः, "किं न वृद्धस्य आहारो दत्तः?" इति कृत्रिमः कोपः कृतः। साधुभिः प्रोक्तं–"स्वयं कथं न याति?।" ततो गुरवः स्वयं तदर्थं पचुरिताः, ततोऽविनयं ज्ञात्वा स्वयमेव तत्र गतः कस्यापि इभ्यस्य गृहे, परं अज्ञानात् अपद्वारेण गच्छन् गृहस्वामिना प्रोक्तं–"भो! मुख्यद्वारेण एहि।" स ऊचे–"भो! लक्ष्मी यत्र तत्र आयान्ती भव्या, को विचारः?।" तत्र द्वात्रिंशन्मोदकान् भिक्षया लब्ध्वा आगतः, गुरुभिः विचारितं–"द्वात्रिंशत् शिष्या अस्माकं भविष्यन्ति, प्रथमलाभत्वात् ते मोदकाः साधूनां दत्ताः। पुनः गत्वा परमान्नं आनीय स्वयं बुभुजे। लब्धिसंपन्नत्वात् गच्छाधारश्च जज्ञे। तस्य गच्छे त्रयः साधवः पुष्पमित्रा लब्धिसंपन्नाः–दुर्बलिकापुष्पमित्र १ घृतपुष्पमित्र २ वस्त्रपुष्पमित्राः ३ चत्वारश्च महाप्रज्ञाः–दुर्बलिकापुष्पमित्रः १ वन्ध्यः २ फल्गुरक्षितः ३ गोष्ठामाहिलाः ४ अन्यदा इन्द्रेण श्रीसीमन्धरस्वामिवचसा कालिकाचार्यवत् निगोदसूक्ष्मविचारपृच्छया परीक्षिताः, वन्दित्वा स्तुतिं कृत्वा शालाद्वारं परावृत्य गत इन्द्रः स्वस्थानं। ततः श्रीआर्यरक्षितसूरिभिः बुद्धिहानिं ज्ञात्वा अनुयोगश्चतुर्धाऽपि पृथक् पृथक् व्यवस्थापितः। एवंविधाः श्रीआर्यरक्षितसूरयः स्थविरा जाताः। एवं विद्याधरगच्छीयौ वृद्धवादि–सिद्धसेनौ, तयोः सम्ब-

न्धलेशो यथा—एकः साधुः वृद्धत्वेऽपि उच्चैःस्वरेण पठन् राज्ञा दृष्टः, प्रोक्तं च—"त्वं किं मुसलं फुल्लयिष्यसि ? ।" ततः तेन वाग्देवीं आराध्य विद्यां प्राप्य चतुष्पथे मुसलं ऊर्ध्वं मण्डयित्वा राजसमक्षं फुल्लयितं । काव्यं च प्राह—"मुद्गोः शृङ्गं शक्रयष्टिप्रमाणं, शीतो वन्हिर्मारुतो निष्प्रकम्पः । यस्मै यद्वा रोचते तत् न किञ्चित्, वृद्धो वादी भाषते कः किमाह ॥ १ ॥" तेन वृद्धवादिना सिद्धसेनो विप्रो वादे जितः तस्यैव शिष्यो जातः । सिद्धसेनेन श्रीविक्रमादित्यनामा राजा प्रतिबोधितः। विक्रमादित्येन च श्रीशत्रुञ्जययात्रा कृता। तस्य सङ्घे १७० स्वर्णमया देवालया आसन्। पुनः श्रीसूरिणां उपदेशेन अन्येऽपि राजानः तीर्थोद्धारं चक्रुः । श्रीसूरिसांनिध्यात् विक्रमादित्यो राजा संवत्सरं प्रवर्तयामास। पूर्वं तु श्रीवीरसंवत्सरं आसीत् ॥ इति वृद्धवादिसिद्धसेनसम्बन्धः ॥ एवं श्रीहरिभद्रसूरिरपि महाप्रभावकः, तत्सम्बन्धो यथा—

हरिभद्रनामा विप्रो महाव्याकरणादिशास्त्रपारगः सन् प्रतिज्ञां चक्रे—"यस्य उक्तस्य अर्थं अहं न वेद्मि, तस्य शिष्यो भविष्यामि। एकदा सन्ध्यायां नगरमध्ये गच्छन् साध्व्या गुण्यमानां गाथां शुश्राव—

"[1]चक्किदुगं हरिपणगं, पणगं चक्कीण—केसवो चक्की। केसव चक्की केसव, दु—चक्की केसीय चक्की य ॥ १ ॥" श्रुत्वा च प्राह—"भो साध्वि! कोऽयं चिगचिगायमानः शब्दो जायमानोऽस्ति? ।" साध्वी प्राह—"नवीने

१ चक्रिद्विकं हरिपञ्चकं पञ्चकं चक्रिणां केशवश्चक्री, केशवश्चक्री केशवद्विचक्रिकेशिनौ च चक्री च ॥ १२ चक्रवर्तिनः ९ वासुदेवाश्च,

ठिग्मिते चिगचिगाटो जायते।" एतत् श्रुत्वा विप्रो दध्यौ–"मया हारितं, अर्थाऽनवगमात्। कोऽर्थोऽस्या गाथायाः ?।" साध्वी प्राह–"अस्माभिः प्रायो गृहस्थस्य अग्रेऽर्थो न कथ्यते। अस्मद्गुरव उद्याने सन्ति ते कथयिष्यन्ति।" ततः तत्र गत्वा गाथार्थं श्रुत्वा प्रतिज्ञापालनार्थं दीक्षां ललौ। जैनशास्त्राण्यपि भणित्वा सूरिपदं प्रापः। तस्य श्रीहरिभद्रसूरेः हंस–परमहंसौ शिष्यौ बहुशास्त्रपारगौ अभूतां। परशासनविचाररहस्यग्रहणार्थं बौद्धाचार्यसमीपे पठितुं गतौ, छात्रीभूत्वा बौद्धगुरुपार्श्वे पेठतुः। एकदा पुस्तकेषु खटिकां दत्तां दृष्टाऽक्षरेषु ज्ञातं सूरिणा कावपि जैनौ स्तः। तत्परीक्षार्थं गुरुः उपरिभूमौ छात्रभणनार्थं उपविष्टः। छात्रा उपरि आगत्य भणन्ति, सोपानकेषु जिनप्रतिमा मुक्ता परीक्षार्थं, बौद्धसाधवः प्रतिमोपरि पादौ दत्त्वा उत्तरन्ति। हंस–परमहंसौ जिनप्रतिमां वीक्ष्य खटिकया प्रतिमाहृदये यज्ञोपवीतं कृत्वा उत्तीर्णौ। ततो बौद्धैः ज्ञातौ मरणभयात् शङ्कितौ स्वपुस्तिकां लात्वा स्वदेशं प्रति चेलतुः। बौद्धवचनात् राज्ञा पश्चात् कटकं प्रेषितं, प्रथमं तेन सहस्रयोद्धा हंसो हतः, पश्चात् बहुबलं आगच्छन् दृष्ट्वा चित्रकोटदुर्गपर्यासन्नागतः परमहंसोऽपि हतः। तेन पूर्वमेव स्वपुस्तिकां आकाशमार्गे गुरुसमीपे क्षिप्ता आसीत्, तत्सैन्यं पश्चात् गतं। एतत्स्वरूपं ज्ञात्वा गुरुः कोपाक्रान्तो जातः। गुरुणा उत्तप्ततैलपूरितः कटाहः कृतः मन्त्रं जपित्वा यदा गुरुः कटाहे कर्करं क्षिपति तदा बौद्धः तपस्वी मन्त्राकर्षितः तस्मिन् कटाहे पतित्वा म्रियते, एवं गुरुणा बहवो बौद्धाः आकर्षिताः तथापि ईर्ष्या न निवर्तते, तदा एकः श्राद्धः एतां गाथां श्रावयामास—

"जह जलइ जलउ लोए, कुसत्थपवणाहओ कसायग्गी। तं चुज्जं जं जिणवयणअमियसित्तो वि पज्जलइ ॥ १ ॥" एतां गाथां श्रुत्वा श्रीहरिभद्रसूरिः कोपात् उपशान्तः। कुत्रापि एवं लिखितमस्ति-याकिनी महत्तरा श्राविकां लात्वा शालायां आगत्य गुरून् पञ्चेन्द्रियवधालोचनां पप्रच्छ। गुरुणा पञ्चकल्याणे प्रोक्ते साध्वी प्राह-"अज्ञानेनापि एकस्मिन् पञ्चेन्द्रियवधे एतावती आलोचना दीयते, तदा जानतां भवतां एतावद्बौद्धाऽकर्षणे कियती समेष्यति?।" ततः कोपात् उपशान्तेन पश्चात्तापं कृत्वा बौद्धा मुक्ताः, स्वपापशुद्धिकृते आकर्षितबौद्धप्रमाणानि १४४४ प्रकरणानि पूजापञ्चाशकादि ५० पञ्चाशक-अष्टक-षोडशादीनि अकरोत्। पुनः श्रीआवश्यकबृहद्वृत्तिप्रमुखा वृत्तयोऽपि कृतवान्, एवंविधाः श्रीहरिभद्रसूरयो जाताः। एवं वप्पभट्टिसूरिरपि प्रभावको येन गोपनगरस्वामी 'आम' नामा राजा प्रतिबोधितः, गुरुवचनात् येन शत्रुञ्जययात्रा कृता, तीर्थोद्धारश्च कारितः। अभिग्रहबद्धस्य गच्छतो देवतया 'खिरसंडी' ग्रामे शत्रुञ्जयावतारस्य प्रासादप्रतिमापादुकामण्डितस्य दर्शने अभिग्रहोऽपि पूर्णो जातः। तत्र शत्रुञ्जयाभिग्रहः पूर्यते। पुनः तेन आमभूपेन गोपनगरे १०८ गजोच्चैस्तरप्रासादे १८ भारहेममयी श्रीवीरप्रतिमा स्थापिता। सा च अद्यापि भूमध्येऽस्ति एवंविधाः श्रीवप्पभट्टिसूरयः, एवं पादलिप्ताचार्योऽभूत् यः पादलेपेन आकाशे उड्डीय शत्रुञ्जय-गिरिनार-आबू-अष्टापद-संमेतशिखरादितीर्थेषु देवान् वन्दित्वा पारणमकरोत्। पुनः यत्कृता निर्वाणकलिकादयो ग्रन्थाः, एवं श्रीम-

१ यथा ज्वलति ज्वलनं लोके कुशास्त्रपवनाहतः कषायाग्निः। तच्चोद्यं यज्जिनवचनामृतसिक्तोऽपि प्रज्वलति ॥

लयगिरिः यत्कृता विशेषावश्यकवृत्तिप्रमुखा अनेके अतिसुगमा ग्रन्थाः सन्ति । एवं श्रीहेमचन्द्रसूरिः पूर्णतल्लगच्छे सार्धत्रिकोटिग्रन्थकर्ता अष्टादशदेशस्वामिश्रीकुमारपालप्रतिबोधको लब्धपद्मावतीवरो बभूव । एवं उकेशवंशगच्छे श्रीरत्नप्रभसूरिः येन ओसियानगरे कोरण्टानगरे च समकालं प्रतिष्ठा कृता, रूपद्वयकरणेन चमत्कारश्च दर्शितः । एवं श्रीमानदेवसूरिः शान्तिस्तवकृत् । एवं भक्तामरस्तोत्रकर्ता श्रीमानतुङ्गसूरिः, एवं श्रीखरतरगच्छे नवाङ्गीवृत्तिकारकश्रीस्तम्भनपार्श्वप्रकटकश्रीअभयदेवसूरिः । एवं श्रीतपागच्छे भाष्यकर्मग्रन्थादिशास्त्रकारकश्रीदेवेन्द्रसूरिः । पुनरेवं वादिवेताल-श्रीशान्तिसूरिः । पुनरेवं परकायप्रवेशकृत् श्रीजीवदेवसूरिः । पुनरेवं कुमुदचन्द्रदिगम्बरवादिजेता श्रीवादिदेवसूरिः । एवं अनेके प्रभावकपुरुषाः श्रीजिनशासने जाताः सन्ति । तेऽपि स्थविरावलीप्रान्ते वाच्याः । तथा श्रीकालिकाचार्योऽपि स्थविरः, परं कालिकाचार्याः त्रयो जाताः । तत्रैकः श्रीवीरात् सं० ३७२ वर्षे श्रीश्यामाचार्योऽपरनामा कालिकाचार्यः श्रीप्रज्ञापनासूत्रकर्ता पूर्वविदां वंशे । श्रीसुधर्मस्वामिन आरभ्य त्रयोविंशतितमः पुरुषो जातः, येन ब्राह्मणीभूतसौधर्मेन्द्रस्याग्रे निगोदविचारः कथितः । केचित् वदन्ति-अयं कालिकाचार्यः तथाविधगाथादर्शनात् वीरात् सं० ३२० वर्षे जातः । केचित् वदन्ति ३२५ वर्षे । केचित् वदन्ति चतुर्थ्यां पर्युषणापर्वप्रवर्तक एव निगोदविचारो व्याख्यातः । यथास्थितं बहुश्रुता एव विदन्तीति १ । द्वितीयस्तु कालिकाचार्यो वीरात् सं० ४५३ वर्षे सरस्वतीभ्राता गर्दभिल्लोच्छेदको बलमित्रभानुमित्रयोः भागिनेयो जातः ॥ अत्रापि यः चतुर्थ्यां पर्युषणाप्रवर्तककालिकाचार्यः स एव तयोर्मातुलः प्रोक्तोऽस्ति,

यदस्ति तत् प्रमाणं २। तृतीयस्तु कालिकाचार्यः श्रीवीरनिर्वाणात् सं० ९९३ वर्षे श्रीविक्रमादित्यसंवत्सरात् ५२३ वर्षे जातो, येन श्रीवीरवाक्यात् श्रीपर्युषणापर्व श्रीभाद्रपदसुदिपञ्चमीतः चतुर्थ्यां प्रवर्तितं ३। एवं कालिकाचार्याः त्रयो वाच्याः, तेषां विस्तरसंबन्धस्तु मत्कृतकालिकाचार्यकथातः पृथगेव ज्ञेयः।

*तथा यदि नव वाचना जायन्ते तदा स्थविरावल्या एकं व्याख्यानं, सति वेलासंभवे च कालिकाचार्यकथापि वाच्या। अथ च यदि एकादश–त्रयोदशवाचना भवन्ति तदा एकं स्थविरावलीव्याख्यानं। द्वितीयं कालिकाचार्यकथा सा मत्कृता अतिसरसा पृथगेवास्ति। इत्यनेन अष्टमवाचनायां श्रीस्थविरावली व्याख्याता। अग्रे नवमवाचनायां श्रीसाधु २८ सामाचारी गुर्वावली च व्याख्यास्यते। स वर्तमानयोगः।*

एवं अस्मिन् श्रीपर्युषणापर्वणि एके दानं ददति–इत्यादि स श्रीवीरवर्धमानस्वामिप्रसादः। एवं ततः परंपरया श्रीसुधर्मस्वामिवज्रस्वामिनो यावत् स्वगच्छपरंपरया वर्तमानभट्टारकाज्ञया श्रीसङ्घः प्रवर्ततां इति वाच्यं॥

व्याख्यानं कल्पसूत्रस्य, सुगमं स्फुटमष्टमम्। शिष्यार्थं पाठकाश्चक्रुः श्रीमत्समयसुन्दराः॥ १॥

इति श्रीकल्पसूत्रस्य अष्टमं व्याख्यानं श्रीसमयसुन्दरोपाध्यायविरचितं सम्पूर्णम्॥

बप्पभट्टि-सूरि-पाद-लिप्ताचार्य-सम्बन्धः

# अथ नवमं व्याख्यानम् ॥

॥ अर्हं ॥ अथ नवमं व्याख्यायते । तत्र पूर्वं प्रथमवाचनया श्रीपञ्चपरमेष्ठिनमस्कारो व्याख्यातः । पुनः श्रीमहावीरदेवस्य संक्षेपवाचनया षट्कल्याणकानि व्याख्यातानि १, द्वितीयवाचनया च श्रीमहावीरदेवस्य च्यवनकल्याणकं गर्भापहारकल्याणकं च व्याख्यातं २, तृतीयवाचनया च चतुर्दश स्वप्ना व्याख्याताः ३, चतुर्थवाचनया च श्रीमहावीरदेवस्य जन्मकल्याणकं व्याख्यातं ४, पञ्चमवाचनया च श्रीमहावीरदेवस्य दीक्षा १ ज्ञान २ निर्वाण ३ कल्याणकत्रयं व्याख्यातं ५, षष्ठवाचनया च श्रीपार्श्वनाथ–श्रीनेमिनाथतीर्थङ्करयोः पञ्च पञ्च कल्याणकानि व्याख्यातानि ६, सप्तमवाचनया च अन्तरकालः, श्रीऋषभदेवस्य पञ्चकल्याणकानि व्याख्यातानि ७, अष्टमवाचनया च स्थविरावली व्याख्याता ८ ।

अथ नवमवाचनायां साधुसामाचारी व्याख्यायते। तत्र प्रथमं आषाढचतुर्मासकात् कतिभिः दिनैः पर्युषणाः कर्त्तव्याः इति दिनसंख्या प्रश्नोत्तररूपा प्रथमसामाचारी प्रोच्यते, तत्राह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ ॥ १ ॥ से केणट्ठेणं भंते ! एवं वुच्चइ–'समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ ?,' जओ णं पाएणं अगारीणं अगाराइं कडियाइं उक्कंपियाइं छन्नाइं लित्ताइं गुत्ताइं घट्ठाइं मट्ठाइं संपधूमियाइं खाओदगाइं खायनिद्धमणाइं अप्पणो अट्ठाए कडाइं परिभुत्ताइं परिणामियाइं भवंति, से तेणट्ठेणं एवं वुच्चइ–'समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ' ॥ २ ॥ जहा णं समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ तहा णं गणहरावि वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसविंति ॥ ३ ॥ जहा णं गणहरा वासाणं सवीसइराए जाव पज्जोसविंति तहा णं गणहरसीसावि वासाणं जाव पज्जोसविंति ॥ ४ ॥ जहा णं गणहरसीसा वासाणं जाव पज्जोसविंति तहा णं थेरावि वासावासं पज्जोसविंति ॥५॥ जहा णं थेरा वासाणं जाव पज्जोसविंति तहा णं जे इमे अज्जत्ताए समणा निग्गंथा विहरंति

तेऽविअ णं वासाणं जाव पज्जोसविंति ॥ ६ ॥ जहा णं जे इमे अज्जत्ताए समणा निग्गंथा वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसविंति तहा णं अम्हंपि आयरिया उवज्झाया वासाणं जाव पज्जोसविंति ॥ ७ ॥ जहा णं अम्हं पि आयरिया उवज्झाया वासाणं जाव पज्जोसविंति तहा णं अम्हेऽवि वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेमो, अंतराऽवि य से कप्पइ, नो से कप्पइ तं रयणिं उवाइणावित्तए ॥ ८ ॥ (१)

व्याख्या—"तेणं कालेणं" तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः आषाढचतुर्मासकदिनात् आरभ्य सविंशतिरात्रे मासे व्यतिक्रान्ते पञ्चाशद्दिनेषु गतेषु इत्यर्थः। "पज्जोसवेइ त्ति" पर्युषणां अकार्षीत्?। "से केणट्ठेणं" इत्यादि प्रश्नवाक्यं। उत्तरं आह—"जओ णं" इत्यादि। यतः प्रायेण अगारिणां=गृहस्थानां अगाराणि=गृहाणि एवंविधानि जातानि भवन्ति। किंविशिष्टानि अगाराणि?। "कडियाइं" कटेन युक्तानि कटयुक्तानि। पुनः किंविशिष्टानि अगाराणि?। "उक्कंपियाइं" धवलितानि। चूर्णिकारस्तु एवं आह—"कडियाइं पासेहिंतो उक्कंपियाइं उवरिं।" इति। पुनः किंविशिष्टानि अगाराणि?। "छन्नाइं" तृणादिभिः आच्छादितानि। पुनः किंविशिष्टानि अगाराणि "लित्ताइं"—लिप्तानि छगणाद्यैः। क्वचित् "गुत्ताइं" इति पाठे गुप्तानि वृत्ति-

करणद्वारपिधानादिभिः। पुनः किंविशिष्टानि अगाराणि ?। "घट्ठाइं" विषमभूमिभञ्जनात्। पुनः किंविशिष्टानि अगाराणि ?। "मट्ठाइं"[श्लक्ष्णीकृतानि–]सुकुमालीकृतानि, क्वचित् "संमट्ठाइं त्ति" पाठः, तत्र समन्तात् मृष्टानि–मसृणीकृतानि। पुनः किंविशिष्टानि अगाराणि?। "संपधूमिआइं" सौगन्ध्यापादनार्थं धूपितैः वासितानि। पुनः किंविशिष्टानि अगाराणि?। "खाओदगाइं" कृतप्रणालीरूपजलमार्गाणि। पुनः किंविशिष्टानि अगाराणि?। "खायनिद्धमणाइं" खातं निर्धमनं खालं गृहात् सलिलं येन निर्गच्छति येषु तानि, एवंविधानि गृहाणि "अप्पणो अट्ठाए त्ति" गृहस्थैः आत्मार्थं कृतानि परिकर्मितानि, करोतेः काण्डं करोति इत्यादिवत् परिकर्मार्थत्वात्। पुनः किंविशिष्टानि अगाराणि ? "परिभुंताइं" परिभुक्तानि, तैः स्वयं परिभुज्यमानत्वात्। अत एव परिणामितानि–अचित्तीकृतानि–प्रासुकीकृतानि भवन्ति इत्यर्थः। ततः सविंशतिरात्रे[त्रि]मासे गते अमी अधिकरणदोषा न भवन्ति। यदि पुनः प्रथममेव स्थिताः स्मः इति ब्रूयुः, तदा ते गृहस्था मुनीनां स्थित्या सुभिक्षं संभाव्य तप्तलोहगोलककल्पा दन्तालक्षेत्रकर्षणगृहाच्छादनादीनि कुर्युः, तथा च अधिकरणदोषाः, अतः तत्परिहाराय पञ्चाशत् दिनैः वयं अत्र स्थिताः स्म इति वाच्यं इति १, यथा श्रीमहावीरः पञ्चाशत् दिनैः पर्युषणां अकार्षीत्, तथा सुधर्मादिगणधरा अपि २, यथा गणधराः तथा गणधरशिष्याः जम्बूप्रमुखा अपि ३, यथा गणधरशिष्याः तथा स्थविरा अपि स्थविरकल्पिका अपि ४, यथा स्थविराः तथा "जे इमे अज्जत्ताए" अद्यकालीना आर्यतया व्रतस्थविरत्वेन इत्येके श्रमणा निर्ग्रन्था विहरन्ति। एतेऽपि

पञ्चाशत् दिनैः एव पर्युषणां कुर्वन्ति, यथा इमे अद्यकालीनाः श्रमणाः, तथा अस्माकं आचार्या-उपाध्यायाश्च कुर्वन्ति । यथा अस्माकं आचार्या-उपाध्यायाः तथा वयमपि पञ्चाशत् दिनैः कुर्मः ॥

अथ अपवादं आह-"अंतरा वि अ से कप्पइ पज्जोसवित्तए" अन्तराऽपि च अर्वाक् अपि कल्पते पर्युषितुं परं न कल्पते तां रजनीं भाद्रपदशुक्लपञ्चमीं "उवाइणावित्तए त्ति" अतिक्रमितुं "उप=निवासे" इति आगमिको धातुः, "वस निवासे" गणसम्बन्धिको वा । इह हि पर्युषणा द्विधा-गृहिज्ञाता गृहि-अज्ञाता च । तत्र अज्ञातायां वर्षायोग्यपीठफलकादिद्रव्यक्षेत्रकालभावस्थापना क्रियते, सा स्थापना आषाढपूर्णिमायां पञ्चपञ्चदिनवृद्ध्या यावत् भाद्रपदशुक्लपञ्चम्यां च एकादशसु पर्वतिथिषु क्रियन्ते १, गृहिज्ञातायां तु यस्यां सांवत्सरिकाऽतीचारालोचनं १ [लुञ्चनं] पर्युषणायां कल्पसूत्रभणनं २ चैत्यपरीपाटी ३ अष्टमं ४ सांवत्सरिकप्रतिक्रमणं ५ च क्रियते, यया च व्रतपर्यायवर्षाणि गण्यन्ते सा भाद्रपदशुक्लपञ्चम्यां युगप्रधानकालिकसूर्यादेशात् चतुर्थ्यां अपि जनप्रकटं कार्या । यत्तु अभिवर्धितवर्षे दिनविंशत्या पर्युषितव्यं, तत् सिद्धान्तटिप्पणानुसारेण, तत्र हि युगमध्ये पौषः, युगान्ते च आषाढ एव वर्धते नाऽन्ये मासाः, तानि च अधुना न सम्यक् ज्ञायन्ते अतो दिनपञ्चाशतैव पर्युषितव्यं । कालावग्रहश्च अत्र जघन्यतो दिन ७० मानः, उत्कर्षतो वर्षायोग्यक्षेत्रान्तराऽभावात् आषाढे, न वृष्टेः अनुपरमात्, मार्गशीर्षेण सह षण्मासः । द्रव्यादिस्थापना चैवं-द्रव्यस्थापना पीठ-फलक-तृण-डगल-रक्षा-मल्लकादीनां परिभोगः १ सचित्तादीनां च परित्यागः २ तत्र

सचित्तः शिष्यो न परिव्राज्यते, अचित्तं वस्त्रादि न गृह्यते, मिश्रं सोपधिकः शिष्यः। एवं आहारविकृति-संस्तारकादिद्रव्येषु परिभोग-परिहारौ योज्यौ १। क्षेत्रस्थापना-सक्रोशं योजनं, कारणे वा ग्लानवैद्यौषधादौ चत्वारि पञ्च वा योजनानि २। कालस्थापना-चत्वारो मासा यत्र तत्र कल्पन्ते ३, भावस्थापना-क्रोधादीनां विवेकः ईर्याभाषणादिसमितिषु चोपयोग इति ॥ इति प्रथमा सामाचारी ॥ १ ॥

अथ वर्षाऽवग्रहमानरूपा द्वितीया सामाचारी प्रोच्यते, तत्राह—

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा सवओ समंता सक्कोसं जोयणं उग्गहं ओगिण्हित्ता णं चिट्ठिउं अहालंदमवि उग्गहे ॥ ९ ॥ (२)

व्याख्या-"वासावासं पज्जोसवियाणं" वर्षाकाले पर्युषितानां स्थितानां कल्पते, निर्ग्रन्थानां निर्ग्रन्थीनां वा सर्वतः समन्तात् चतुर्दिक्षु विदिक्षु च सक्रोशं योजनं अवग्रहं अवगृह्य अहालंदमपीति, "अथ" इति अव्ययं निपातः, "लंदमिति" कालस्याख्या यथा-लन्दमपि-स्तोककालमपि अवग्रहे स्थातुं कल्पते, न बहिः, लंद-कालमपि स्थातुं कल्पते तत्र उदकार्द्रः करो यावता कालेन शुष्यति तावान् कालो जघन्यं लंदं, उत्कृष्टं पञ्चाहोरात्रः, तयोः अन्तरे=मध्यमं, यथा-रेफप्रकृतिरपि अरेफप्रकृतिरपीति। एवं लंदमपि अवग्रहे स्थातुं कल्पते, अलंदं अपि यावत् षण्मासान् एकत्र अवग्रहे स्थातुं कल्पते। उपाश्रयात् सार्धक्रोशद्वयं चतसृषु दिक्षु ऊर्ध्वा-

गोमध्यग्रामात् विना गजेन्द्रपदादिगिरेः मेखलास्थितानां षट्सु दिक्षु गमनाऽगमनेन पञ्चक्रोशावग्रहः। यच्च अनन्तरं विदिक्षु इत्युक्तं तत् व्यावहारिक-विदिगपेक्षया, भवति हि ग्रामो मूलग्रामात् आग्नेय्यादिविदिक्षु नैश्चयिकविदिक्षु न एकप्रदेशात्मकत्वात् न गमाऽगमसंभवः, अटवीजलादिना व्याघाते तु त्रिदिक्षो द्विदिक्ष एकदिक्षो वा अवग्रहो भावनीयः॥ इति द्वितीया सामाचारी॥ २॥

अथ तृतीयां नित्योदकनदीलङ्घनरूपां सामाचारीं प्राह—

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा सव्वओ समंता सक्कोसं जोयणं भिक्खायरियाए गंतुं पडिनियत्तए॥ १०॥ जत्थ नई निच्चोयगा निच्चसंदणा, नो से कप्पइ सव्वओ समंता सक्कोसं जोयणं भिक्खायरियाए गंतुं पडिनियत्तए॥ ११॥ एरावई कुणालाए, जत्थ चक्किया सिया एगं पायं जले किच्चा एगं पायं थले किच्चा, एवं चक्किया एवं णं कप्पइ सव्वओ समंता सक्कोसं जोयणं गंतुं पडिनियत्तए॥ १२॥ एवं च नो चक्किया, एवं से नो कप्पइ सव्वओ समंता सक्कोसं जोयणं गंतुं पडिनियत्तए॥ १३॥ (३)

व्याख्या-"वासावासं पज्जोसवियाणं" वासावासं पर्युषितानां-निर्ग्रन्थानां निर्ग्रन्थीनां वा भिक्षानिमित्तं

एतादृशीं नदीं लङ्घितुं पञ्चक्रोशान् गन्तुं प्रत्यागन्तुं च कल्पते। कीदृशी नदी? । नित्योदका नित्यस्तोकजला। पुनः नित्यस्यन्दना=निरंतरसततवाहिनी, 'तो' इति ततः तस्य साधोः कल्पते। कया सदृशी?, इत्याह—एरावती-नाम्नी नदी कुणालानामनगर्यां द्विक्रोशं सदा वहति, तादृशी नदी लङ्घितुं कल्पते। कथं? । स्तोकजलत्वात् यत्र चक्किया शक्नुयात् सिया यदि लङ्घनविधिं आह—एकं पादं जले=जलमध्ये कृत्वा=निक्षिप्य एकं च पादं स्थले आकाशे कृत्वा द्वाभ्यां पादाभ्यां अविलोडयन् गन्तुं शक्नुयात्, तदा तत्परतः स्थितग्रामादौ भिक्षाचर्या कल्पते, नाऽन्यथा। एकं पादं जलान्तः क्षिपति, द्वितीयं च पादं जलात् उपरि उत्पाटयति तदा कल्पते। यत्र च जलं विलोड्यते तत्र गन्तुं च न कल्पते इत्यर्थः। यत्र च न शक्नुयात् गत्वा प्रत्यागन्तुं तत्र न गच्छेत्। यत्र जङ्घार्धं यावत् जलं स दकसंघट्टः १, नाभिं यावत् जलं स लेपः २, तत्परतो लेपोपरि ३ ततः ऋतुबद्धे काले भिक्षाचर्यायां यत्र त्रयोदकसंघट्टाः, वर्षासु च सप्त भवेयुः तत्र क्षेत्रं न उपहन्यते, चतुरादिभिश्च तैः अष्टादिभिश्च तैः उपहन्यते, ते च ऋतुबद्धे गतागतेन षट् वर्षासु चतुर्दश १४ स्युः, लेपश्चैकोऽपि क्षेत्रं उपहन्ति, लेपोपरि तु किं वाच्यं? तथा यदि चतुरो मासान् एकद्वित्र्यादिदिनान् वा उपोषितः स्थातुं न शक्नोति, तदा जघन्यतोऽपि पूर्वक्रियमाणनमस्कारसहितादेः पौरुष्यादितपोवृद्धिं कुर्यात् इति॥ इति तृतीया सामाचारी ॥ ३ ॥

अथ साधूनां परस्परदानरूपां चतुर्थीं सामाचारीं प्राह—

वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ—'दावे भंते !', एवं से कप्पइ

दावित्तए, नो से कप्पइ पडिगाहित्तए ॥ १४ ॥ वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ–'पडिगाहेहि भंते !', एवं से कप्पइ पडिगाहित्तए, नो से कप्पइ दावित्तए ॥ १५ ॥ वासावासं पज्जोसवियाणं० 'दावे भंते ! पडिगाहे भंते !', एवं से कप्पइ दावित्तएवि पडिगाहित्तए वि ॥ १६ ॥ (४)

व्याख्या–"वासावासं पज्जोसवियाणं" "अत्थे" अस्ति एतत् यत् एकेषां साधूनां पुरत एवं उक्तपूर्वं भवति गुरुभिः, इति गम्यं। चूर्णौ तु "अत्थेगइआ आयरिया" इत्युक्तं, "अत्थं भासइ आयरिओ" इति वचनात्। अर्थ एव–अनुयोग एकायिता एकाग्र अर्थैकायितः तेषां, अथवा अस्ति एतत् यत् एकेषां आचार्याणां इदं उक्तपूर्वं भवतीति व्याख्येयं। तत्र च षष्ठी तृतीयार्थे, ततश्च आचार्यैः इदमुक्तं भवति यत्–"दावे भंते !" हे भदन्त! हे कल्याणिन्! साधो ! "दावे" इति ग्लानाय दद्याः। स्वार्थिको णो वा, दापयेः=दद्याः अशनादिकं आनीय इति गम्यं। अनेन च ग्लानदानादेशेन अद्य चतुर्मासकादौ स्वयं न प्रतिगृह्णीयात् इत्युक्तं। एवं उक्ते "से" तस्य साधोः कल्पते, दातुं अर्थात् ग्लानाय, न स्वयं प्रतिग्रहीतुं गुरुणा अननुज्ञातत्वात्। अथ गुरुणोक्तं स्वयं प्रतिग्रहणीयाः ग्लानाय अन्यो दास्यति न वा अद्य भोक्ष्यते इति, ततः प्रतिग्रहीतुं कल्पते न ग्लानाय दातुं, अथ गुरुणोक्तं स्यात्–"भदन्त ! दद्याश्च ग्लानाय प्रतिगृह्णीयाश्च यत् अद्य त्वं अक्षमोऽसि"

इति। तदा दानं स्वस्मै प्रतिग्रहणं च कल्पते। गुरुभिः अनुक्ते चेत् ग्लानाय आनयति स्वयं वा गृह्णाति तदा परिष्ठापनिकादोषोऽजीर्णादिना ग्लानत्वं वा मोहोद्भवो वा क्षीरादौ च धरणाधरणे आत्मसंयमविराधना॥ इति चतुर्थी सामाचारी॥ ४॥

अथ रसविकृति-त्यागरूपां पञ्चमीं सामाचारीं प्राह—

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा हट्ठाणं तुट्ठाणं आरोगाणं बलियसरीराणं इमाओ नव रसविगईओ अभिक्खणं २ आहारित्तए, तं जहा—खीरं १ दहिं २ नवणीयं ३ सप्पिं ४ तिल्लं ५ गुडं ६ महुं ७ मज्जं ८ मंसं ९॥ १७॥ (५)

व्याख्या—"वासावासं पज्जोसवियाणं" वर्षाकाले स्थितानां साधूनां साध्वीनां च एवंविधानां नवरसविकृतयो वारं वारं गृहीतुं न कल्पन्ते। किंविशिष्टानां निर्ग्रन्थानां ?। हृष्टानां—तरुणत्वेन समर्थानां। युवानोऽपि केचित् सरोगाः स्युः इत्याह—"आरोगाणं", क्वचित् "आरुग्गाणं" इति पाठः, तत्र आरोग्यं अस्ति एषामिति, अभ्रादित्वात् अप्रत्यये आरोग्याः तेषां, तादृशा अपि केचित् कृशाङ्गाः स्युः इत्याह—बलिकशरीराणां रसप्रधाना विकृतयो रसविकृतयः ता अभीक्ष्णं=पुनः पुनः न कल्पन्ते, रसग्रहणं तासां मोहोद्भवहेतुत्वख्यापनार्थं, अभीक्ष्णग्रहणं पुष्टालम्बने कदाचित् तासां परिभोगानुज्ञार्थं, नवग्रहणात् कदाचित् पक्वान्नं गृह्यते। विकृतयो द्वेधा—

दुग्धदधिप्रभृतयः असञ्चयिकाः ग्लानत्वे वा गुरुबालवृद्धतपस्विगच्छोपग्रहार्थं वा श्रावकादरनिमन्त्रणात् वा ग्राह्याः, घृततैलगुडाद्याः सञ्चयिकाः ताः प्रतिलाभयन् गृही वाच्यः महान् कालोऽस्ति, ततो ग्लानादिकार्ये ग्रहीष्यामि, स वदेत्–'यूयं गृह्णीत मम चातुर्मासीं यावत् दानार्थं प्रभूताः सन्ति,' ततो ग्राह्याः, बालादीनां न देयाः, न तरुणानां। निष्कारणं मद्यादिवर्जनं यावज्जीवमस्ति, तथापि अत्यन्ताऽपवादे कदाचित् बाह्यभोगार्थं ग्रहणेऽपि कृतपर्युषणानां सर्वथा निषेधः ॥ इति पञ्चमी सामाचारी ॥ ५ ॥

अथ ग्लानार्थं ग्रहणविधिरूपां षष्ठीं सामाचारीं प्राह—

वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ–अट्ठो भंते ! गिलाणस्स, से य वइज्जा–अट्ठो, से य पुच्छियव्वे–केवइएणं अट्ठो ?, से वएज्जा–एवइएणं अट्ठो गिलाणस्स, जं से पमाणं वयइ से य पमाणओ घित्तव्वे, से य विन्नविज्जा, से य विन्नवेमाणे लभिज्जा, से य पमाणपत्ते होउ अलाहि, इय वत्तव्वं सिआ, से किमाहु भंते ! ?, एवइएणं अट्ठो गिलाणस्स, सिया णं एवं वयंतं परो वइज्जा–'पडिगाहेह अज्जो !, पच्छा तुमं भोक्खसि वा पाहिसि वा,' एवं से कप्पइ पडिगाहित्तए, नो से कप्पइ गिलाणनीसाए पडिगाहित्तए ॥ १८ ॥ (६)

व्याख्या—"वासावासं पज्जोसवियाणं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च अस्ति एतदेकेषां वैयावृत्तिकरादीनां एवं=उक्तपूर्वं भवति, गुरुं प्रति इति शेषः। हे भदन्त! भगवन्! अर्थः=प्रयोजनं ग्लानस्य विकृत्या इति काक्वा प्रश्नाऽवगतिः। एवं उक्ते सति गुरुः वदेत्—अर्थः "से य पुच्छेइ त्ति" तं च ग्लानं स वैयावृत्तिकरः पृच्छति। क्वचित् "से य पुच्छियव्वे" इति पाठः, तत्र स ग्लानः प्रष्टव्यः। किं पृच्छति?, इत्याह—"केवइएणं अट्ठो" कियता विकृतिजातेन क्षीरादिना तव अर्थः? तेन च ग्लानेन स्वप्रमाणे उक्ते स वैयावृत्तिकरो गुरोः अग्रे आगत्य ब्रूयात्—"एवइएणं अट्ठो गिलाणस्स" इति इयतार्थो ग्लानस्य। ततो गुरुः आह—"जं से त्ति" यत्प्रमाणं स ग्लानो वदति तत्प्रमाणेन "से" इति तद्विकृतिज्ञातं ग्राह्यं। तथा "से य विन्नविज्जा" स च वैयावृत्तिकरादिः विज्ञपयेत्=याचेत गृहस्थपार्श्वात्। "विज्ञाप"—धातुः अत्र याच्ञायां, स याचमानो लभेत तद्वस्तु, तच्च प्रमाणप्राप्तं—पर्याप्तं जातं। ततश्च "होउ अलाहि" इति साधुप्रसिद्ध "इत्थं" इति शब्दस्यार्थः भवतु इति पदं "अलाहि त्ति" सूतं इत्यर्थः। "अलाहि निवारणे" इति वचनात् अन्यन्मा दाः इति वक्तव्यं स्यात्। गृहस्थं प्रति ततो गृही प्राह—"से किमाहु भंते" अथ किमाहुर्भदन्ताः?, किमर्थं सृतमिति ब्रुवते भवन्त इत्यर्थः। साधुराह—"एवइएणं अट्ठो गिलाणस्स" एतावता अर्थो ग्लानस्य, "सिया" कदाचित् "णं" एनं साधुं एवं वदन्तं पुरो दाता गृही वदेत्। किं वदेत्?, इत्याह—"अज्जो" इत्यादि। हे आर्य! प्रतिगृहाण त्वं पश्चात् अधिकं तत् त्वं भोक्ष्यसे=भुञ्जीथाः पक्वान्नादि। पास्यसि पिबेः द्रवं क्षीरादि, क्वचित् "पाहिसि त्ति" स्थाने "दाहिसि त्ति"

गाढः, तत्राऽतीव त्वं स्वयं वा भुञ्जीथाः, अन्यस्य साधोर्वा दद्या इति । एवं उक्ते गृहिणा "से" तस्य साधोः कल्पते प्रतिग्रहीतुं, न पुनः ग्लाननिश्रया गार्द्ध्यात् स्वयं ग्रहीतुं ग्लानाद्यर्थं याचितं मण्डल्यां नानेयं इत्याकूतं ॥ इति षष्ठी सामाचारी ॥ ६ ॥

अथ एवंविधे कुले अदृष्टं न याचनीयं इति स्वरूपां सप्तमीं सामाचारीं आह—

वासावासं पज्जोसवियाणं अत्थि णं थेराणं तहप्पगाराइं कुलाइं कडाइं पत्तिआइं थिज्जाइं वेसासियाइं संमयाइं बहुमयाइं अणुमयाइं भवंति, तत्थ से नो कप्पइ अदक्खु वइत्तए— 'अत्थि ते आउसो ! इमं वा २?' से किमाहु भंते ! ?, सड्ढी गिही गिण्हइ वा तेणियंपि कुज्जा ॥ १९ ॥ (७)

व्याख्या–"वासावासं पज्जोसवियाणं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च एवंविधेषु कुलेषु अदृष्टं वस्तु याचितुं न कल्पते। किंविशिष्टानि कुलानि ?। "तहप्पगाराइं" तथाप्रकाराणि अजुगुप्सितानि कुलानि गृहाणि। पुनः किंविशिष्टानि कुलानि?। "कडाइं" कृतानि, तैः अन्यैर्वा श्रावकीकृतानि। पुनः किंविशिष्टानि– कुलानि ?। "पत्तियाइं" प्रत्ययितानि प्रीतिकराणि वा। पुनः किंविशिष्टानि कुलानि ?। "थिज्जाइं" स्थैर्यं अस्ति एष्विति स्थैर्याणि, प्रीतौ दाने वा। पुनः किंविशिष्टानि कुलानि ?। "वेसासियाइं" ध्रुवं लप्स्येऽहं तत्र

इति विश्वासो येषु इति वैश्वासिकानि। पुनः किंविशिष्टानि कुलानि ?। "संमयाइं" समन्तयाति-प्रवेशानि। पुनः किंविशिष्टानि कुलानि ?। "बहुमयाइं" बह्वोऽपि साधवो नैको द्वौ वा मता येषु, बहूनां वा गृहमानुषाणां मतः साधुप्रवेशो येषु तानि बहुमतानि। पुनः किंविशिष्टानि कुलानि ?। "अणुमयाइं" अनुमतानि=दातुं अनुज्ञातानि, अथवा अणुः=क्षुल्लोऽपि मतो येषु, सर्वसाधुसाधारणत्वात् नतु मुखं दृष्ट्वा तिलकं कर्षयन्तीति येषु कुलेषु, "से" तस्य साधोः "अदक्खु" इति वाच्यं, वस्तु अदृष्ट्वा न कल्पते वक्तुं यथा-अस्ति ते आयुष्मन्! अमुकं अमुकं वा वस्तु इति, अत्र "से किमाहु भंते" इति सर्वत्र दृश्यते, परं एतत् पदं अतिरिक्तं संभाव्यते वृत्तौ अव्याख्यातत्वात्। कुतः?। यतः "सड्ढी" श्रद्धावान् दानवासनिको गृही तत्साधुयाचितं वस्तु गृह्णीत वा मूल्येन वा क्रीणीयात्, चौर्येणापि आनीय तत् वस्तु वितरेत्। ओदन=सक्तुमण्डकादि पूर्वकथिते उष्णोदके दुग्धे वा क्षिपेत्, आपणात् वा आनयेत्, प्रामित्यं वा कुर्यात् इति। कृपणगृहेषु तु अदृष्ट्वापि याचने न दोष इत्यर्थः। स तु सदपि=दृष्टं अपि कृपणत्वात् न ददाति, कुतोऽसत् अदृष्टं दद्यात्?॥ इति सप्तमी सामाचारी॥

अथ अष्टमीं सामाचारीं गोचरीगमनरूपां प्राह—

वासावासं पज्जोसवियस्स निच्चभत्तियस्स भिक्खुस्स कप्पइ एगं गोअरकालं गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, नन्नत्थाऽऽयरियवेयावच्चेण वा एवं उव-

उज्झायवेयावच्चेण वा तवस्सिवेयावच्चेण वा गिलाणवेयावच्चेण वा खुड्डएण वा खुड्डियाए वा अवंजणजायएण वा ॥ २० ॥ वासावासं पज्जोसवियस्स चउत्थभत्तियस्स भिक्खुस्स अयं एवइए विसेसे–जं से पाओ निक्खम्म पुव्वामेव वियडगं भुच्चा पिच्चा पडिग्गहगं संलिहिय संपमज्जिय से य संथरिज्जा कप्पइ से तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवित्तए, से य नो संथरिज्जा एवं से कप्पइ दुच्चंपि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २१ ॥ वासावासं पज्जोसवियस्स छट्ठभत्तियस्स भिक्खुस्स कप्पंति दो गोअरकाला गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २२ ॥ वासावासं पज्जोसवियस्स अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ गोअरकाला गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २३ ॥ वासावासं पज्जोसवियस्स विगिट्ठभत्तिअस्स भिक्खुस्स कप्पंति सव्वेऽवि गोअरकाला गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २४ ॥ (८)

व्याख्या—"वासावासं पज्जोसवियस्स" वर्षाकाले स्थितस्य "निच्चभत्तियस्स" नित्यं एकाशनिनः भिक्षोः "एगं गोयरकालं" एकस्मिन् गोचरचर्याकाले सूत्रपौरुष्यार्थपौरुष्ययोः अनन्तरमित्यर्थः। "गाहावइकुलं" गृहस्थगृहं भक्तार्थं वा पानार्थं वा गन्तुं कल्पते। अपवादं आह—"नन्नत्थेति" णकारो वाक्यादौ अलङ्कारार्थः। अन्यत्र आचार्यवैयावृत्त्यात् तत् अन्यत्र वर्जयित्वा इत्यर्थः। आचार्यवैयावृत्त्यं हि यदि एकवारं भुक्तेन कर्तुं न पारयति तदा द्विरपि भुङ्क्ते। तपसो हि वैयावृत्त्यं गरीयः, एवं उपाध्याय—तपस्वि—ग्लान—वैयावृत्त्यकरेष्वपि। पुनः "अवंजणजायएणं वा" न व्यञ्जनानि—वस्तिकूर्चकक्षादिरोमाणि जातानि यस्य असौ अव्यञ्जनजातः। स्वार्थे कः, अव्यञ्जनजातकात् क्षुल्लकात् अन्यत्र यावत् अद्यापि तस्य व्यञ्जनानि नोद्भिद्यन्ते तावत् द्विरपि भोजनं न दुष्यतीत्यर्थः। एवं क्षुल्लिकापि। अत्र च आचार्यश्च वैयावृत्त्यं अस्याऽस्तीति अभ्रादित्वात् अप्रत्यये वैयावृत्त्यश्च वैयावृत्त्यकर आचार्यवैयावृत्त्यौ ताभ्यां अन्यत्र एवं उपाध्यायादिष्वपि नेयं, आचार्योपाध्याय-तपस्वि—ग्लान—क्षुल्लकानां द्विर्भुक्तस्यापि अनुज्ञातत्वात्। एवमपि व्याख्या कार्या १। एवं चतुर्थभक्तिकस्य भिक्षोः अयं वक्ष्यमाण एतावान् विशेषः—यत् स आचार्योपाध्याय—तपस्वि—ग्लान—क्षुल्लकेभ्योऽन्यः साधुः चतुर्थभोजी प्रातः निष्क्रम्य—उपाश्रयात् आवश्यिक्या निर्गत्य पूर्वमेव विकटमुद्गमादि शुद्धं प्रासुकाहारं भुक्त्वा पीत्वा च तक्रादिकं संसृष्टकल्पं वा पतद्ग्रहं—पात्रं संलिख्य=निर्लेपीकृत्य संप्रमृज्य च—प्रक्षाल्य "से य त्ति" यदि संस्तरेत्=निर्वहेत् तदा तत्र दिने तेनैव भक्तार्थेन—भोजनेन परिवसेत्। अथ न संस्तरेत् स्तोकत्वात् तदा

"दुगं पि" द्वितीयवेलायां अपि भिक्षेत इत्यर्थः २। एवं षष्ठभक्तिकस्य द्वौ गोचरकालौ येन स कल्पेऽपि उपोषणं कर्ता ३। अष्टमभक्तिकस्य तु त्रयो गोचरकालाः, न च प्रातरदितमेव धारयेत्। सञ्चयसंसक्तिसर्पाघ्राणादि-दोषप्रसङ्गात् ४। "विगिट्ठभत्तिअस्स त्ति" अष्टमात् ऊर्ध्वं तपो विकृष्टभक्तं तस्य सर्वेऽपि गोचरकालाः कल्पन्ते चतुरोऽपि प्रहरान् ५॥ इति अष्टमी सामाचारी ॥ ८ ॥

अथ आहारविधिं उक्त्वा नवमीं पानकसामाचारीं आह—

वासावासं पज्जोसवियस्स निच्चभत्तियस्स भिक्खुस्स कप्पंति सव्वाइं पाणगाइं पडिगाहित्तए। वासावासं पज्जोसवियस्स चउत्थभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा—ओसेइमं [उस्सेइमं] संसेइमं चाउलोदगं। वासावासं पज्जोसवियस्स छट्ठभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा—तिलोदगं वा तुसोदगं वा जवोदगं वा। वासावासं पज्जोसवियस्स अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा—आयामे वा सोवीरे वा सुद्धवियडे वा। वासावासं पज्जोसवियस्स विगिट्ठभत्तियस्स भिक्खुस्स कप्पइ एगे उसिणवियडे पडिगाहित्तए, सेऽविय णं असित्थे, नोऽविय णं ससित्थे। वासावासं

पज्जोसवियस्स भत्तपडियाइक्खियस्स भिक्खुस्स कप्पइ एगे उसिणवियडे पडिगाहित्तए, सेऽविय णं असित्थे, नो चेव णं ससित्थे, सेऽविय णं परिपूए, नो चेव णं अपरिपूए, सेऽविय णं परिमिए, नो चेव णं अपरिमिए, सेऽविअ णं बहुसंपन्ने, नो चेव णं अबहुसंपन्ने ॥ २५ ॥ (९)

व्याख्या–"वासावासं पज्जोसवियस्स" व्याख्या–एवं आहारविधिं उक्त्वा प्रत्याख्यानमध्येऽपि पानकविधिं आह–वर्षाकाले स्थितस्य भिक्षोः नित्यभक्तिकस्य नित्यं एकाशनिनः सर्वाणि पानकानि पानैषणोक्तानि वक्ष्यमाणानि वा उत्स्वेदिमादीनि ग्रहीतुं कल्पन्ते १। तथा चतुर्थभक्तिकस्य भिक्षोः एतानि त्रीणि पानकानि ग्रहीतुं कल्पन्ते, तथाहि–"ओसेइमं" उत्स्वेदिमं–पिष्टजलं पिष्टभृतहस्तादिक्षालनजलं वा १, "संसेइमं" संस्वेदिमं संसेकिमं वा–यत् पर्णादि उत्काल्य शीतोदकेन सिच्यते तत् २, "चाउलोदगं वा" तन्दुलधावनोदकं ३। २। वर्षावासं स्थितस्य भिक्षोः षष्ठभक्तिकस्य इमानि त्रीणि पानकानि ग्रहीतुं कल्पन्ते, तथाहि–"तिलोदगं वा" महाराष्ट्रादिषु अचित्ततिलधावनं १, "तुसोदगं वा" तुषोदकं=व्रीह्यादिधावनं २, यवोदकं=यवधावनं ३। तथा वर्षाकाले स्थितस्य भिक्षोः अष्टमभक्तिकस्य इमानि त्रीणि पानकानि प्रतिग्रहीतुं कल्पन्ते, तथाहि–"आयामे वा" आयामकोऽवस्रावणं १ "सोवीरे" सौवीरकं–काञ्जिकं २ शुद्धविकटं–उष्णोदकं वर्णान्तरप्रासं शुद्धजलं वा ३ केवलोष्णजलं तु "उसिणवियडे" इत्यनेन एवोक्तं ४। वर्षाकाले स्थितस्य विकृष्टभक्तिकस्य

साधोः एकं "उसिणवियडे त्ति" उष्णजलं प्रतिग्रहीतुं कल्पते। तदपि कीदृशं? । "असिक्थं" सिक्थवर्जितं, यतः प्रायेण अष्टमात् ऊर्ध्वं तपस्विनः देहं देवताऽधिष्ठितं भवति ५। तथा वर्षाकाले स्थितस्य भिक्षोः प्रत्याख्यातभक्तस्य 'भत्तपडियाइक्खियस्स त्ति' अनशनिन इत्यर्थः । एकं उष्णजलमेव प्रतिग्रहीतुं कल्पते। तदपि "असिक्थं" सिक्थवर्जितं परं "न ससिक्थं" तदपि परिपूतं वस्त्रगलितं अपरिपूते तृणकाष्ठादेः गले लगनात्। तदपि परिमितं, अन्यथा अजीर्णं स्यात् ३। क्वचित् "सेवि य णं बहुसंपुन्ने" इत्यपि दृश्यते, तत्र ईषत्=अपरिसमाप्तं संपूर्णं–बहुसंपूर्णं 'नाम्नः प्राक् बहुर्वा' इति बहुप्रत्ययः । अति स्तोकतरे हि तृणमात्रस्यापि नोपशम इति ॥ इति नवमी सामाचारी ॥ ९ ॥

अथ दशमीं सामाचारीं दत्ति–संख्यारूपां प्राह—

वासावासं पज्जोसविअस्स संखादत्तियस्स भिक्खुस्स कप्पंति पंच दत्तीओ भोअणस्स पडिगाहित्तए पंच पाणगस्स, अहवा चत्तारि भोअणस्स पंच पाणगस्स, अहवा पंच भोअणस्स चत्तारि पाणगस्स, तत्थ णं एगा दत्ती लोणासायणमित्तमवि पडिगाहिआ सिया कप्पइ से तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवित्तए, नो से कप्पइ दुच्चंपि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २६ ॥ (१०)

व्याख्या—"वासावासं" वर्षाकाले स्थितस्य भिक्षोः 'संखादत्तियस्स' संख्यया उपलक्षिता दत्तयो यस्य स संख्यादत्तिकः तस्य दत्तिपरिमाणवत इत्यर्थः। तत्र लवणाऽऽस्वादनमात्रमपि प्रतिगृहीता दत्तिः स्यात्। यतो लवणं किल स्तोकं दीयते यदि तावन्मात्रं भक्तपानस्य गृह्णाति तदा साऽपि दत्तिर्गण्यते। अथ येन साधुना पञ्चभोजनस्य पञ्चैव पानकस्य दत्तयः अभिग्रहत्वेन कृताः सन्ति, तदा भोजनस्य पानकमध्ये पानकस्य भोजनमध्ये न क्षेप्तव्याः। एवं अथवा चतस्रो भोजनस्य पञ्च च पानकस्य, अथवा पञ्चभोजनस्य चतस्रश्च पानकस्य, अत्रापि अन्यदीया दत्तिः अन्यस्मिन् न क्षेपणीया। पञ्चेति उपलक्षणं न्यूनत्वेन चतस्रस्तिस्रो द्वे एका अधिकत्वेन षट् सप्त वा यथाऽभिग्रहं वाच्याः। पुनरिदं रहस्यं—केनचित् पञ्च दत्तयो भोजनस्य लब्धाः तिस्रश्च पानकस्य, ततः पानकसत्का अवशिष्टास्ता भोजने क्षिपति वर्धयति इत्यर्थः। भोजनसत्का वा पानके इत्येवं समावेशो न कल्पते इत्यर्थः॥ इति दशमी सामाचारी॥ १०॥

अथ संखडिविचाररूपां एकादशमीं सामाचारीं आह—

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा जाव उवस्सयाओ सत्तघरं-तरं संखडिं संनियट्टचारिस्स इत्तए, एगे एवमाहंसु—नो कप्पइ जाव उवस्सयाओ परेण सत्त-

घरंतरं संखडिं संनियट्टचारिस्स इत्तए, एगे पुण एवमाहंसु—नो कप्पइ जाव उवस्सयाओ परं-
परेणं संखडिं संनियट्टचारिस्स इत्तए ॥ २७ ॥ ( ११ )

व्याख्या—"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च उपाश्रयात्—शय्यातरगृहात् आरभ्य
गायत् सप्तगृहमध्ये, संखडिं संस्क्रियते इति संस्कृतिः=ओदनपाकः, तां "इत्तए त्ति" गन्तुं न कल्पते,
पिण्डपानार्थं तत्र न गच्छेत् इत्यर्थः, तेषां गृहाणां संनिहितया साधुगुणहृतहृदयत्वेन उद्गमादिदोषसंभवात्।
एतावता—शय्यातरगृहं अन्यानि च षट् आसन्नगृहाणि वर्जयेत् इत्युक्तं, कस्य न कल्पते ?, इत्याह—"संनियट्ट-
चारिस्स" निषिद्धगृहेभ्यः संनिवृत्तः सन् चरति विहरति इति संनिवृत्तसंचारी—प्रतिषिद्धवर्जकः साधुः तस्य,
बहवः तु एवं व्याचक्षते—सप्तगृहान्तरं संखडिं जनसंकुलजेमनवारालक्षणां गन्तुं न कल्पते तत् अपि उक्तं
प्रतिभाति तत् प्रमाणीकर्तव्यं १। द्वितीयमते शय्यातरं—अन्यानि च सप्तगृहाणि वर्जयेत् इत्युक्तं २। तृतीय-
मते शय्यातरगृहं अनन्तरगृहं सप्त च अन्यानि वर्जयेत् इत्युक्तं। "उवस्सयाओ परेण त्ति" उपाश्रयात्
परतः सप्तगृहान्तरं एतुं गन्तुं न कल्पते। "परंपरेणं त्ति" परम्परया व्यवधानेन सप्तगृहान्तरं एतुं=गन्तुं न
कल्पते, शय्यातरगृहात् अनन्तरं एकं गृहं ततः सप्त गृहाणीति परम्परता ३। इति एकादशी सामाचारी ॥ ११ ॥

अथ वृष्टौ सत्यां जिनकल्पिकानां आहारग्रहणविधिरूपां द्वादशमीं सामाचारीं आह,—

वासावासं पज्जोसवियस्स नो कप्पइ पाणिपडिग्गहियस्स भिक्खुस्स कणगफुसियमित्तमवि वुट्ठिकायंसि निवयमाणंसि जाव गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २८ ॥ वासावासं पज्जोसवियस्स पाणिपडिग्गहियस्स भिक्खुस्स नो कप्पइ अगिहंसि पिंडवायं पडिगाहित्ता पज्जोसवित्तए, पज्जोसवेमाणस्स सहसा वुट्ठिकाए निवइज्जा देसं भुच्चा देसमादाय से पाणिणा पाणिं परिपिहित्ता उरंसि वा णं निलिज्जिज्जा, कक्खंसि वा णं समाहडिज्जा अहाछन्नाणि वा लेणाणि वा उवागच्छिज्जा, रुक्खमूलाणि वा उवागच्छिज्जा, जहा से पाणिंसि दए वा दगरए वा दगफुसिआ वा नो परिआवज्जइ ॥ २९ ॥ वासावासं पज्जोसवियस्स पाणिपडिग्गहियस्स भिक्खुस्स जं किंचि कणगफुसियमित्तंपि निवडति, नो से कप्पइ गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ ३० ॥ (१२)

व्याख्या–"वासावासं" वर्षाकाले स्थितस्य "पाणिपडिग्गहियस्स त्ति" जिनकल्पिकादेर्भिक्षोः "कणग-

कुसिगा त्ति" फुसारमात्रं अवश्यायो-महिकावर्षं वा वृष्टिकायोऽप्कायवृष्टिः तस्मिन् निपतति सति भिक्षार्थं गाथापतिकुले गन्तुं न कल्पते १। पुनः जिनकल्पिकादेः भिक्षोः "अगिहंसि त्ति" अनाच्छादिते आकाशे इत्यर्थः। "पिंडवायं पडिगाहित्ता" पिण्डपातं-आहारं प्रतिगृह्य "पज्जोसवित्तए" आहारयितुं न कल्पते २ कथं ?, कदाचित् अर्धभुक्तेऽपि वृष्टिः स्यात् [संभवति]। ननु जिनकल्पिकादयो देशोनदशपूर्वधरत्वेन अतिशयज्ञानिनः तैश्च प्रागेव उपयोगः कृतो भविष्यति, तत् कथं अर्धभुक्ते वृष्टिः संभवति ?। सत्यं, छाद्मस्थिकोपयोगः तथा वा स्यात् अन्यथा वा स्यात् इति अदोषः। अथ आकाशे भुञ्जानस्य यदि वर्षेत् तदा पिण्डपातस्य देशं एकदेशं भुक्त्वा देशं च आदाय पाणिं आहारैकदेशसहितं पाणिना-द्वितीयहस्तेन परिधाय=आच्छाद्य उरसि=हृदये निलीयेत् निक्षिप्येत् वा। "णं" इति तं साहारं पाणिं कक्षायां वा समाहरेत्=अन्तर्हितं कुर्यात्, एवं न कृत्वा यथा छन्नानि-गृहिभिः स्वनिमित्तं आच्छादितानि लयनानि-गृहाणि वृक्षमूलानि वा उपागच्छेत्। यथा "से" तस्य साधोः पाणौ=हस्ते दकादीनि=जलादीनि न पर्यापद्यन्ते न विराध्यन्ते न पतन्ति वा, तत्र दकं-बहवो बिन्दवः दकरजो बिन्दुमात्रं "दगफुसिआ" फुसारं अवश्याय इत्यर्थः। उक्तमेवार्थं निगमयन् आह-"वासावासं" इत्यादि ॥ जिनकल्पिकादेः पाणिपतद्ग्रहिकस्य साधोः यत्किंचित् "कणगफुसियमित्तं पि निवडइ नो से कप्पइ" कणो=लेशः तन्मात्रं कं=पानीयं "फुसिया" फुसारमात्रं कनकस्य "फुसिआ" तन्मात्रं अपि यदि निपतति तदा न कल्पते भिक्षार्थं गृहस्थगृहे गन्तुं ॥ इति द्वादशी सामाचारी ॥ १२ ॥

पूर्वमुक्तः पाणिपात्रस्य जिनकल्पिकस्य विधिः। अथ पतद्ग्रहधारिणः स्थविरकल्पिकस्य आहारग्रहणविधिरूपां त्रयोदशसामाचारीं आह—

वासावासं पज्जोसवियस्स पडिग्गहधारिस्स भिक्खुस्स नो कप्पइ वग्घारियवुट्ठिकायंसि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, कप्पइ से अप्पवुट्ठिकायंसि संतरुत्तरंसि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ ३१ ॥ (११००)

वासावासं पज्जोसविअस्स निग्गंथस्स निग्गंथीए वा गाहावइकुलं पिंडवायपडियाए अणुपविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा अहे उवस्सयंसि वा अहे वियडगिहंसि वा अहे रुक्खमूलंसि वा उवगच्छित्तए ॥ ३२॥ तत्थ से पुवागमणेणं पुवाउत्ते चाउलोदणे पच्छाउत्ते भिलिंगसूवे, कप्पइ से चाउलोदणे पडिगाहित्तए, नो से कप्पइ भिलिंगसूवे पडिगाहित्तए ॥ ३३ ॥ तत्थ से पुवागमणेणं पुवाउत्ते भिलिंगसूवे पच्छाउत्ते चाउलोदणे, कप्पइ से भिलिंगसूवे पडिगाहित्तए, नो से कप्पइ चाउलोदणे पडिगाहित्तए ॥ ३४ ॥ तत्थ से पुवागमणेणं दोऽवि पुवाउत्ताइं कप्पंति से दोऽवि पडिगाहित्तए, तत्थ से पुवागमणेणं दोऽवि पच्छा-

जे से तत्थ पुवागमणेणं पुवाउत्ते से कप्पइ
उत्ताइं, एवं नो से कप्पंति दोऽवि पडिगाहित्तए, जे से तत्थ पुवागमणेणं पुवाउत्ते से कप्पइ
पडिगाहित्तए, जे से तत्थ पुवागमणेणं पच्छाउत्ते नो से कप्पइ पडिगाहित्तए ॥ ३५ ॥ वासा-
वासं पज्जोसवियस्स निग्गंथस्स निग्गंथीए वा गाहावइकुलं पिंडवायपडियाए अणुपविट्ठस्स
निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा अहे उवस्सयंसि वा अहे विय-
डगिहंसि वा अहे रुक्खमूलंसि वा उवागच्छित्तए, नो से कप्पइ पुवगहिएणं भत्तपाणेणं वेलं
उवायणावित्तए, कप्पइ से पुवामेव वियडगं भुच्चा ( पिच्चा ) पडिग्गहगं संलिहिय २ संपम-
ज्जिय २ एगाययं भंडगं कट्टु सावसेसे सूरे जेणेव उवस्सए तेणेव उवागच्छित्तए, नो से कप्पइ
तं रयणिं तत्थेव उवायणावित्तए ॥ ३६ ॥ वासावासं पज्जोसवियस्स निग्गंथस्स निग्गंथीए वा
गाहावइकुलं पिंडवायपडियाए अणुपविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से
अहे आरामंसि वा अहे उवस्सयंसि वा अहे वियडगिहंसि वा अहे रुक्खमूलंसि वा उवाग-
च्छित्तए॥३७॥ तत्थ नो कप्पइ एगस्स निग्गंथस्स एगाए य निग्गंथीए एगयओ चिट्ठित्तए १,

तथ नो कप्पइ एगस्य निग्गंथस्य दुण्हं निग्गंथीणं एगयओ चिट्ठित्तए २, तत्थ नो कप्पइ दुण्हं निग्गंथाणं एगाए य निग्गंथीए एगयओ चिट्ठित्तए ३, तत्थ नो कप्पइ दुण्हं निग्गंथाणं दुण्हं निग्गंथीण य एगयओ चिट्ठित्तए ४, अत्थि य इत्थ केइ पंचमे खुड्डए वा खुड्डियाइ वा अन्नेसिं वा संलोए सपडिदुवारे एव ण्हं कप्पइ एगयओ चिट्ठित्तए ॥ ३८ ॥ वासावासं पज्जोसवियस्स निग्गंथस्स गाहावइकुलं पिंडवायपडियाए अणुपविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा अहे उवस्सयंसि वा अहे वियडगिहंसि वा अहे रुक्खमूलंसि वा उवागच्छित्तए, तत्थ नो कप्पइ एगस्स निग्गंथस्स एगाए य अगारीए एगयओ चिट्ठित्तए, एवं चउभंगी, अत्थि णं इत्थ केइ पंचमए थेरे वा थेरियाइ वा अन्नेसिं वा संलोए सपडिदुवारे, एवं कप्पइ एगयओ चिट्ठित्तए । एवं चेव निग्गंथीए अगारस्स य भाणियव्वं ॥ ३९ ॥ (१३)

व्याख्या–"वासावासं" उक्तः पाणिपात्रकस्य जिनकल्पिकस्य विधिः, अथ पतद्ग्रहधारिणः स्थविरकल्पिकस्य विधिं आह—वर्षाकालं स्थितस्य पतद्ग्रहधारिणः साधोः "वग्घारियवुट्ठिकायंसि" अच्छिन्नधारा वृष्टिः

यस्यां यस्यां वा वर्षाकल्पः श्च्योतति तीव्रं वा वर्षाकल्पं वा भित्त्वा अन्तःकायं आर्द्रयति या वृष्टिः तस्यां तस्यां विततं भक्तपानादिनिमित्तं गृहस्थगृहे गन्तुं न कल्पते १। अपवादं आह–अशिवादिकारणैः श्रुतपाठकसत्यां विततं भक्तपानादिनिमित्तं ... कथंकारं?। अल्पवृष्टौ सत्यां तु "संतरुत्तरंसि त्ति" आन्तरः तपस्विभिक्षुदऽसत्रा ऊर्णिकाप्रावृता विहरन्ति। कथंकारं?। अल्पवृष्टौ सत्यां तु "संतरुत्तरंसि त्ति" आन्तरः सौत्रकल्पः उत्तर और्णिकस्ताभ्यां कल्पाभ्यां प्रावृतस्य साधोः कल्पते गन्तुं। चूर्णिकारस्तु एवं आह–"अंतरं रयहरणं पडिग्गहो वा उत्तरं पाऊणकप्पो तेहिं सहे" त्ति १। पुनः वर्षाकालं स्थितस्य आहारार्थं गृहस्थगृहे प्रविष्टस्य निर्ग्रन्थस्य "निगिज्झिय" २ स्थित्वा स्थित्वा वृष्टिकायो निपतेन मेघो वर्षति तदा तस्य साधोः कल्पते गन्तुं "आरामे वा अहे उवस्सयंसि वा" आत्मनः साम्भोगिकानां इतरेषां वा उपाश्रयस्य अधः तस्याभावे विकटगृहे–आस्थानमण्डपिकायां ग्राम्यपर्षदि तत्र स्थितो हि वेलां वृष्टेः स्थितास्थितस्वरूपं च जानाति, अनाकुलीयश्च स्यात्। वृक्षमूले वा–निर्गलकरीरादौ २। तत्र विकटगृहवृक्षमूलादौ स्थितस्य साधोः "पुव्वागमणेणं त्ति" आगमनात् तत्र पूर्वकालं अथवा पूर्वं साधुरागतः पश्चाद् दायको राद्धुं प्रवृत्तः इति पूर्वागमनेन हेतुना पूर्वायुक्तः तन्दुलोदनः कल्पते, पश्चादायुक्तोऽभिलिङ्गसूपो न कल्पते। पूर्वायुक्तः साध्वागमात् पूर्वमेव गृहस्थैः मार्गे पक्तुं आरब्धः तन्दुलोदनः संप्रति ग्रहीतुं कल्पते। साधौ च आगते यः पक्तुमारब्धः स पश्चादायुक्तोऽभिलिङ्गसूपो मसूरदालिः उडदालिर्वा सस्नेहरूपो वा न कल्पते, उद्गमादिदोषसंभवात्, एवं यदि आगमनात् पूर्वं पूर्वायुक्तोऽभिलिङ्गः सूपः पश्चादायुक्तः तन्दुलोदनः तदा अभिलिङ्गसूपो ग्रहीतुं कल्पते न तन्दु-

लोदनः २ एवं तन्दुलोदनोऽभिलिङ्गसूपश्च एतत् द्वयमपि पश्चादायुक्तं तदा द्वयमपि ग्रहीतुं साधोः न कल्पते ३। एवं यदि द्वयमपि एतत् पूर्वायुक्तं तदा द्वयमपि साधोः ग्रहीतुं कल्पते। पुनः सङ्ग्रहं आह-"जे से" इत्यादि। यः तत्र साध्वागमनात् पूर्वायुक्तः "से" तस्य साधोः ग्रहीतुं कल्पते, यतः तत्र साध्वागमनात् पश्चादायुक्तः "से" तस्य साधोः न ग्रहीतुं कल्पते इत्यर्थः ३। तथा वर्षाकाले स्थितस्य साधोः भिक्षार्थं प्रविष्टस्य वृष्टिसद्भावेन आरामे वा, उपाश्रयस्य अधो वा, विकटगृहस्य अधो वा, वृक्षमूलस्य अधो वा, स्थितस्य साधोः न कल्पते। पूर्वगृहीतेन भक्तपानेन वेलां अतिक्रमयितुं, तत्र च तिष्ठतः कदाचित् वर्षं नोपरमति तत्र का मर्यादा? इत्याह-कल्पते तस्य साधोः विकटं उद्गमादिदोपशुद्धं भुक्त्वा पीत्वा च पतद्ग्रहं संलिख्य २ संप्रमार्ज्य २ एकत्र आयतं-सुबद्धं भाण्डकं-पात्रकादिकं उपकरणं कृत्वा वपुषा सह प्रावृत्य वर्षत्यपि अनस्तमिते सूर्ये यत्रैव उपाश्रयः तत्रैव आगन्तुं कल्पते, परं नो कल्पते तस्य साधोः तत्रैव तां रात्रिं अतिक्रमितुं, कथं तत्र बहिर्वसतां बहवो दोषाः, एकस्य तु आत्मपरोभयसमुत्थाः, साधवो वा वसतौ अधृतिं कुर्वन्ति ४। पुनः वर्षाकाले स्थितस्य साधोः विकटगृहवृक्षमूलादौ तिष्ठतः। केन विधिना स्थातव्यं?, इत्याह-एकः साधुः एकया साध्व्या सह तत्र स्थाने न तिष्ठेत्। कथं?, शङ्कादिदोषसद्भावात्। कथं एकाकित्वं साधोः?, इति उच्यते-सङ्घाटक उपोषितो वा १ असुखितो वा २ कारणिको वा ३ स्यात् एकाकी १। अत्र चतुर्भङ्गी एवं-एकः साधुः एकया साध्व्या समं न तिष्ठेत् १ एवं एकः साधुः साध्वीद्वयेन समं अपि नो तिष्ठेत् २ एवं साधु-

द्वयेनापि समं एका साध्वी न तिष्ठेत् ३ एवं साधुद्वयेनापि समं साध्वीद्वयं नो तिष्ठेत् ४ तर्हि कथं तिष्ठेत् ?, इत्याह—अस्ति च अत्र कश्चित् पञ्चमः क्षुल्लकः साधूनां क्षुल्लिका वा साध्वीनां तदा तिष्ठेत्, साधुर्हि आत्मना द्वितीय उत्सर्गतः १ संयत्यस्तु त्र्यादयः "षट्कर्णो भिद्यते मन्त्रः" इति न्यायात्। पक्षान्तरं आह—यदि क्षुल्लकादिर्न स्यात् तदा तत्र अन्येषां ध्रुवकर्मिकलोहकारादीनां वर्पत्यपि अमुक्तस्वकर्मणां संलोके—दृष्टिपथे तत्रापि सप्रतिद्वारे सर्वगृहाणां वा द्वारे एवं वा स्थातुं कल्पते। "एवं ण्हं" इति वाक्यालङ्कारे। एवमेव चतुर्भङ्गी गृहिण्या सह ज्ञेया। तथाहि—एकः साधुः एका गृहिणी १, एकः साधुः गृहिणीद्वयं २, साधुद्वयं गृहिणी एका ३, साधुद्वयं गृहिणीद्वयं ४, एवमपि न तिष्ठेत्। एवं अगारं अस्याऽस्तीति अभ्रादित्वात् अप्रत्यये अगारो=गृही, तेनापि समं चतुर्भङ्गी ज्ञेया—एका साध्वी एको गृहस्थः १, साध्वीद्वयं एको गृहस्थः २, एका साध्वी गृहस्थद्वयं ३, साध्वीद्वयं गृहस्थयोः अपि द्वयं ४ एवमपि सति नो स्थातव्यं ३॥ इति त्रयोदशी सामाचारी ॥ १३ ॥

अथ अपृष्टार्थं विहरणनिषेधरूपां चतुर्दशीं सामाचारीं आह—

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा अपरिण्णएणं अपरिण्णयस्स अट्ठाए असणं वा १ पाणं वा २ खाइमं वा ३ साइमं वा ४ जाव पडिगाहित्तए ॥ ४० ॥ से किमाहु भंते !?, इच्छा परो अपरिण्णए भुंजिज्जा, इच्छा परो न भुंजिज्जा ॥ ४१ ॥ (१४)

व्याख्या-"वासावासं" वर्षाकाले स्थितानां साधूनां नो कल्पते, अपरिज्ञातेन साधूनां अपरिज्ञातस्य निमित्तं अशनं वा १ पाणं वा २ खादिमं वा ३ स्वादिमं वा ४ आहारं प्रतिग्रहीतुं। अपरिज्ञाते इति कोऽर्थः ?। त्वं मम योग्यं अशनादि आनय इति अपरिज्ञप्तेन=अभणितेन हिण्डकसाधुना। अपरिज्ञसस्येति कोऽर्थः ?। अहं तव योग्यं अशनादि आनयिष्ये इति। अपरिज्ञसस्य=अनुक्तस्य। तत्र किं कारणं ?, इति प्रश्नयति- "किमाहु भंते! त्ति"। अत्र किं कारणं ? भदन्ता आहुः, गुरुः आह-"इच्छेत्यादि"। इच्छा चेत् अस्ति तदा परो-यस्मै आनीतं स भुञ्जीत, इच्छा चेत् न अभोजनरुचिः तदा न भुञ्जीत। यदि च परोऽनिच्छन् दाक्षिण्यात् भुङ्क्ते तदा तस्य ग्लानिः स्यात्, अजीर्णादिना च, यदि न=भुङ्क्ते तदा वर्षासु जलहरितबाहुल्येन स्थण्डिलदौर्लभ्यात् परिष्ठापनादोषः स्यात्, तस्मात् पृष्ट्वा आनेयं ॥ इति चतुर्दशी सामाचारी ॥ १४ ॥

अथ ससस्नेहायतनरूपां पञ्चदशीं सामाचारीं आह—

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा उदउल्लेण वा ससिणिद्धेण वा काएणं असणं वा १ पाणं वा २ खाइमं वा ३ साइमं वा ४ आहारित्तए ॥ ४२ ॥ से किमाहु भंते !?, सत्त सिणेहाययणा पण्णत्ता, तं जहा-पाणी १ पाणिलेहा २ नहा ३ नह-

सिहा ४ भमुहा ५ अहरोट्ठा ६ उत्तरोट्ठा ७। अह पुण एवं जाणिज्जा–विगओदगे मे काए छिन्नसिणेहे, एवं से कप्पइ असणं वा १ पाणं २ खाइमं वा साइमं वा ४ आहारित्तए ॥४३॥ (१५)

व्याख्या–"वासावासं" वर्षाकाले स्थितानां साधूनां साध्वीनां च नो कल्पते, एवंविधेन कायेन अशनं वा पानं वा खादिमं वा स्वादिमं वा। "आहारित्तए त्ति" भोक्तुं। किंविशिष्टेन कायेन ?। उदकार्द्रेण गलद्बिन्दुयुक्तेन। पुनः किंविशिष्टेन कायेन ?। सस्निग्धेन–ईषद्बिन्दुयुक्तेन "से किमाहु भंते !" स भगवान् तीर्थङ्करः किमाह ?, अत्र कारणं गुरुः आह–"सत्तेत्यादि"। सप्त स्नेहायतनानि–जलाऽवस्थानस्थानानि येषु जलं चिरेण शुष्यति, तानि सप्त स्थानानि इमानि–पाणी=हस्तौ १ पाणिरेखा=आयूरेखादयः, तासु चिरं उदकं तिष्ठति २ नखा–अखण्डाः ३ नखशिखाः–तेषां अग्रभागाः ४ भ्रूः=नेत्रोर्ध्वरोमाणि ५ अहरोट्ठा=दाढिका ६ उत्तरोट्ठा=श्मश्रूणि ७ अथ पुनरेवं जानीयात्–मम कायो विगतोदको जातः=उदकबिन्दुरहितो जातः। पुनः किंविशिष्टः कायः ?। छिन्नस्नेहः–सर्वथा उद्या[नः]नः तदा अशनादि कुर्यात् ॥ इति पञ्चदशी सामाचारी ॥ १५ ॥

अथ अष्टसूक्ष्मस्वरूपप्रतिपादिकां षोडशीं सामाचारीं आह–

वासावासं पज्जोसवियाणं इह खलु निग्गंथाण वा निग्गंथीण वा इमाइं अट्ठ सुहुमाइं जाइं

छउमत्थेणं निग्गंथेण वा निग्गंथीए वा अभिक्खणं २ जाणियवाइं पासिअवाइं पडिलेहियवाइं भवंति, तं जहा–पाणसुहुमं १ पणगसुहुमं २ बीअसुहुमं ३ हरियसुहुमं ४ पुप्फसुहुमं ५ अंडसुहुमं ६ लेणसुहुमं ७ सिणेहसुहुमं ८ ॥४४॥ से किं तं पाणसुहुमे ?, पाणसुहुमे पंचविहे पन्नत्ते, तं जहा–किण्हे १, नीले २, लोहिए ३, हालिद्दे ४, सुक्किल्ले ५। अत्थि कुंथु अणुद्धरी नामं, जा ठिया अचलमाणा छउमत्थाणं निग्गंथाण वा निग्गंथीण वा नो चक्खुफासं हव्वमागच्छइ, जा अट्ठिया चलमाणा छउमत्थाणं निग्गंथाण वा निग्गंथीण वा चक्खुफासं हव्वमागच्छइ, जा छउमत्थेणं निग्गंथेण वा निग्गंथीए वा अभिक्खणं २ जाणियव्वा पासियव्वा पडिलेहियव्वा हवइ से तं पाणसुहुमे ॥ १ ॥ से किं तं पणगसुहुमे ?, पणगसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे, नीले, लोहिए हालिद्दे, सुक्किल्ले । अत्थि पणगसुहुमे तद्दव्वसमाणवण्णे नामं पण्णत्ते, जे छउमत्थेणं निग्गंथेण वा निग्गंथीए वा जाणियव्वे पासियव्वे पडिलेहिअव्वे भवइ । से तं पणगसुहुमे ॥ २ ॥ से किं तं बीअसुहुमे ?, बीयसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे, नीले,

लोहिए, हालिद्दे, सुक्किल्ले। अत्थि वीअसुहुमे कण्णियासमाणवण्णए नामं पन्नत्ते, ते छउमत्थेणं निग्गंथेण वा निग्गंथीए वा जाणियव्वे पासियव्वे पडिलेहियव्वे भवइ। से तं वीअसुहुमे॥ ३॥ से किं तं हरियसुहुमे ?, हरियसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे नीले लोहिए हालिद्दे सुक्किल्ले। अत्थि हरिअसुहुमे पुढवीसमाणवण्णए नामं पण्णत्ते, जे निग्गंथेण वा निग्गंथीए वा अभिक्खणं २ जाणियव्वे पासियव्वे पडिलेहियव्वे भवइ। से तं हरियसुहुमे ॥ ४॥ से किं तं पुप्फसुहुमे ?, पुप्फसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे नीले लोहिए हालिद्दे सुक्किल्ले। अत्थि पुप्फसुहुमे रुक्खसमाणवण्णे नामं पण्णत्ते, जे छउमत्थेणं निग्गंथेण वा निग्गंथीए वा जाणियव्वे पासियव्वे पडिलेहियव्वे भवइ। से तं पुप्फसुहुमे ॥ ५॥ से किं तं अंडसुहुमे ?, अंडसुहुमे पंचविहे पण्णत्ते, तं जहा–उद्दंसंडे, उक्कलियंडे पिपीलिअंडे, हलिअंडे, हल्लोहलिअंडे, जे निग्गंथेण वा निग्गंथीए वा जाणियव्वे पासियव्वे पडिलेहियव्वे भवइ। से तं अंडसुहुमे ॥ ६॥ से किं तं लेणसुहुमे ?, लेणसुहुमे पंचविहे पण्णत्ते, तं जहा–उत्तिंगलेणे, भिंगुलेणे, उज्जुए, तालमूलए,

संबुक्कावट्टे नामं पंचमे, जे छउमत्थेण निग्गंथेण वा निग्गंथीए वा जाणियव्वे पासियव्वे पडिलेहियव्वे भवइ। से तं लेणसुहुमे ॥ ७ ॥ से किं तं सिणेहसुहुमे ?, सिणेहसुहुमे पंचविहे पण्णत्ते, तं जहा–उस्सा, हिमए, महिया, करए, हरतणुए। जे छउमत्थेणं निग्गंथेण वा निग्गंथीए वा अभिक्खणं २ जाणियव्वे पासियव्वे पडिलेहियव्वे भवइ। से तं सिणेहसुहुमे ८ ॥ ४५ ॥ (१६)

व्याख्या–"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च इमानि अष्टौ सूक्ष्माणि यानि छद्मस्थेन निर्ग्रन्थेन निर्ग्रन्थ्या वा अभीक्ष्णं अभीक्ष्णं=पुनः पुनः यत्र यत्र स्थाननिषीदनादाननिक्षेपादि करोति। तत्र सूक्ष्मत्वात् अल्पाधारत्वाच्च सूक्ष्माणि ज्ञातव्यानि सूत्रोपदेशेन "पासियव्वाइं" द्रष्टव्यानि, चक्षुषा ज्ञात्वा दृष्ट्वा च "पडिलेहियव्वाइं" प्रतिलेखितव्यानि–परिहर्तव्यतया विचारणीयानि भवन्ति। इमानि कानि ?, इत्याह–"तं जहा" तद्यथा—प्राणसूक्ष्मं १, पनकसूक्ष्मं २, बीजसूक्ष्मं ३, हरितसूक्ष्मं ४, पुष्पसूक्ष्मं ५, अण्डसूक्ष्मं ६, लयनसूक्ष्मं [लेन] ७, स्नेहसूक्ष्मं ८। शिष्यः प्राह–"किं तत् प्राणसूक्ष्मं ?।" गुरुः प्राह–"प्राणसूक्ष्मं पञ्चविधं प्रज्ञप्तं तीर्थङ्करगणधरैः एकैकस्मिन् वर्णे सहस्रशो भेदा बहुप्रकाराश्च संयोगाः, ते सर्वेऽपि पञ्चसु कृष्णादिषु अन्तर्भवन्ति। पञ्चभेदान् वर्णेनाह–प्राणसूक्ष्मं कृष्णं १ नीलं २ लोहितं ३ हारिद्रं ४ शुक्लं ५ च, तत्र प्राणसूक्ष्मं तु द्वीन्द्रियादयः प्राणाः, यथा–अनुद्धरी कुन्थुः, स हि चलन्नेव दृश्यते, न स्थितः सन् सूक्ष्मत्वात्, तत्

प्राणसूक्ष्मं १। शिष्यः प्राह–"किं तत् पनकं ?।" गुरुः आह–"पनकसूक्ष्मं पञ्चविधं कृष्णादिवर्णभेदेन प्रोक्तं। पनक–उल्ली: स च प्रायो वर्षाकाले भूमिकाष्ठभाण्डादिषु जायते, यत्र च उत्पद्यते तद्द्रव्यसमवर्णश्च "नामं पन्नत्ते त्ति" नामेति प्रसिद्धौ, तत् पनकसूक्ष्मं २। अथ किं तद् बीजसूक्ष्मं? बीजसूक्ष्ममपि कृष्णादिपञ्चवर्णभेदेन पञ्चविधं भवति। किं तत्?। कणिका–शाल्यादिबीजानां मुखमूले 'नही' इति लोकरूढिः, नखिका तत् छद्मस्थेन ज्ञातव्यं १ द्रष्टव्यं २ प्रतिलेखितव्यं च ३। अथ किं तत्?। हरितसूक्ष्मं, हरितसूक्ष्ममपि कृष्णादिपञ्चवर्णभेदेन पञ्चविधं, तत् हरितसूक्ष्मं पृथिवीसमानवर्णं, तच्च अल्पसंहननत्वात् स्तोकेनापि विनश्यति, तदपि छद्मस्थेन ज्ञातव्यं द्रष्टव्यं प्रतिलेखितव्यं च इति हरितसूक्ष्मं ४। अथ किं तत् पुष्पसूक्ष्मं? पुष्पसूक्ष्ममपि कृष्णादिपञ्च-वर्णभेदेन पञ्चविधं, तच्च पुष्पसूक्ष्मं वटोदुम्बरादीनां तत् समवर्णत्वात् अलक्ष्यं, तच्च उच्छ्वासेनापि विराध्यते, तदपि ज्ञातव्यं द्रष्टव्यं प्रतिलेखितव्यं च। इति पुष्पसूक्ष्मं ५। अथ किं तत् अण्डसूक्ष्मं?। अण्डसूक्ष्ममपि कृष्णादिपञ्चविधवर्णभेदेन पञ्चविधं, तद् यथा–उद्दंशाः=मधुमक्षिकामत्कुणाद्याः तेषां अण्डानि १ पुनः "उक्कलिअंडे" उत्कलिता–लूतापुटं तदण्डानि २ "पिपीलिअंडे" पिपीलिकानां=कीटिकानां अण्डानि ३ पुनः "हलिअंडे" हलिका=गृहकोकिला ब्राह्मणी वा तदण्डानि ४ पुनः "हल्लोहलिअंडे" हल्लोहलिया अहिलोडी सरडी काकिंडी इत्येकार्थः, तस्याः अण्डानि एतानि हि सूक्ष्माणि स्युः। एतदपि हलिअण्डं ज्ञातव्यं द्रष्टव्यं प्रति-लेखितव्यं च सूक्ष्मत्वात् ६। अथ किं तत् लेनसूक्ष्मं?। लेनसूक्ष्मं अपि पञ्चविधं, तथाहि–"लेणे त्ति" लयनं=

आश्रयः, सत्त्वानां यत्र कीटिकाद्यनेकसूक्ष्मसत्त्वा भवन्ति। "उत्तिंगलेणे त्ति" उत्तिंगा=भूयकाः गर्दभाकृतयो जीवाः, तेषां लयनं=भूमौ उत्कीर्णगृहं उत्तिङ्गलयनं। "भिंगुलेणे त्ति" भृंगुः शुष्कभूराजी जलशोषानन्तरं केदारादिषु स्फुटिता दालिः इत्यर्थः २ "उज्जुए त्ति" बिलं ३ "तालमूलए त्ति" तालमूलकं–तालमूलाकाकारं अधः पृथु उपरि च सूक्ष्मं विवरं ४ "संबुक्कावट्टे त्ति" शम्बूकावर्त=भ्रमरगृहं ५ एतदपि लयनसूक्ष्मं ज्ञातव्यं द्रष्टव्यं प्रतिलेखितव्यं च ७। अथ किं तत् स्नेहसूक्ष्मं? स्नेहसूक्ष्ममपि पञ्चविधं, तथाहि–"उस्स त्ति" अवश्यायो–यः आकाशात् पतति १ "हिमए त्ति" हिमं स्त्यानोदबिन्दुः २ "महिया त्ति" महिका–धूमरी ३ "करए त्ति" करकाः=घनोपलाः ४ "हरतणुए त्ति" हरतनुः=भूमिनिःसृततृणाग्रबिन्दुरूपो यो यवाङ्कुरादौ दृश्यते ५ एतदपि स्नेहसूक्ष्मं पूर्वं ज्ञातव्यं ततो द्रष्टव्यं प्रतिलेखितव्यं च। ८। अष्टस्वपि स्थानेषु साधुना साध्व्या च वर्षाकाले विशेषतो यत्ना कार्या॥ इति षोडशी सामाचारी॥ १६॥

अथ गुरुं पृष्ट्वा विहरण १ विकृतिग्रहणं २ चिकित्सा ३ संलेखना ४ धर्मजागरिकादि ५ कर्तव्यरूपां सप्तदशसामाचारीं प्राह—

वासावासं पज्जोसविए भिक्खू इच्छिज्जा गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, नो से कप्पइ अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं

गणहरं गणावच्छेअयं जं वा पुरओ काउं विहरइ, कप्पइ से आपुच्छिउं आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेअयं जं वा पुरओ काउं विहरइ—"इच्छामि णं भंते! तुब्भेहिं अब्भणुण्णाए समाणे गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा,' ते य से वियरिज्जा एवं से कप्पइ गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, ते य से नो वियरिज्जा एवं से नो कप्पइ गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा। से किमाहु भंते!?, आयरिया पच्चवायं जाणंति ॥ ४६ ॥ एवं विहारभूमिं वा वियारभूमिं वा अन्नं वा जंकिंचि पओअणं, एवं गामाणुगामं दूइज्जित्तए ॥ ४७ ॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अण्णयरिं विगइं आहारित्तए, नो से कप्पइ से अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा जं वा पुरओ कट्टु विहरइ, कप्पइ से आपुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा जं वा पुरओ काउं विहरइ आहारित्तए—'इच्छामि णं भंते!

तुब्भेहिं अब्भणुण्णाए समाणे अन्नयरिं विगइं आहारित्तए, तं एवइयं वा एवइखुत्तो वा, ते य से वियरिज्जा एवं से कप्पइ अण्णयरिं विगइं आहारित्तए, ते य से नो वियरिज्जा एवं से नो कप्पइ अण्णयरिं विगइं आहारित्तए, से किमाहु भंते!?, आयरिया पच्चवायं जाणंति ॥ ४८ ॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अण्णयरिं तेइच्छियं आउट्टित्तए, नो से कप्पइ से अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा जं वा पुरओ काउं विहरइ, कप्पइ से आपुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा जं वा पुरओ काउं विहरइ–'इच्छामि णं भंते! तुब्भेहिं अब्भणुण्णाए समाणे अण्णयरि तेइच्छियं आउट्टित्तए,' तं एवइयं वा एवइखुत्तो वा, ते य से वियरिज्जा एवं से कप्पइ अण्णयरिं तेइच्छियं आउट्टित्तए, ते य से नो कप्पइ अण्णयरिं तेइच्छियं आउट्टित्तए। से किमाहु भंते!?, आयरिया पच्चवायं जाणंति ॥ ४९ ॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अण्णयरं ओरालं कल्लाणं सिवं धण्णं

मंगल्लं सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए, नो से कप्पइ अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा जं वा पुरओ काउं विहरइ, कप्पइ से आपुच्छित्ता आयरियं वा उवज्झायं वा थेरं वा पवित्तिं गणिं गणहरं गणावच्छेययं वा जं वा पुरओ काउं विहरइ,–'इच्छामि णं भंते! तुब्भेहिं अब्भणुण्णाए समाणे अण्णयरं ओरालं कल्लाणं सिवं धण्णं मंगल्लं सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए,' तं एवइयं वा एवइखुत्तो वा, ते य से वियरिज्जा एवं से कप्पइ अण्णयरं ओरालं कल्लाणं सिवं धण्णं मंगल्लं सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए, ते य से नो वियरिज्जा एवं से नो कप्पइ अण्णयरं ओरालं कल्लाणं सिवं धण्णं मंगल्लं सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए। से किमाहु भंते!?, आयरिया पच्चवायं जाणंति ॥ ५० ॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अपच्छिममारणंतियसंलेहणाजूसणाजूसिए भत्तपाणपडियाइक्खिए पाओवगए कालं अणवकंखमाणे विहरित्तए वा

निक्खमित्तए वा पविसित्तए वा, असणं वा पाणं वा खाइमं वा साइमं वा आहारित्तए वा उच्चारं वा पासवणं वा परिट्ठावित्तए, सज्झायं वा करित्तए, वा धम्मजागरियं वा जागरित्तए, नो से कप्पइ अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा जं वा पुरओ काउं विहरइ, कप्पइ से आपुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा जं वा पुरओ काउं विहरइ,—'इच्छामि णं भंते! तुब्भेहिं अब्भणुण्णाए समाणे अपच्छिममारणंतियसंलेहणाजूसणाजूसिए भत्तपाणपडियाइक्खिए पाओवगए कालं अणवकंखमाणे विहरित्तए वा निक्खमित्तए वा पविसित्तए वा असणं वा पाणं वा खाइमं वा साइमं वा आहारित्तए वा, उच्चारं वा पासवणं वा परिट्ठावित्तए, सज्झायं वा करित्तए, धम्मजागरियं वा जागरित्तए, तं एवइयं वा एवइखुत्तो वा, ते य से वियरिज्जा एवं से कप्पइ, ते य से नो वियरिज्जा नो से कप्पइ, से किमाहु भंते!?, आयरिया पच्चवायं जाणंति ॥ ५१ ॥ (१७)

व्याख्या—"वासावासं" अथ ऋतुबद्धकालः १ वर्षालक्षणकालः २ कालद्वयसामान्या सामाचारी, वर्षासु विशेषेण उच्यते। वर्षाकाले स्थितो भिक्षुः इच्छेत् गाथापतिकुले गन्तुं भक्तपानाद्यर्थं तदा तस्य नो कल्पते। "अनापृच्छय आयरियं वे"त्यादि। आचार्यः=सूत्रार्थव्याख्याता दिगाचार्यो वा १ उपाध्यायः=सूत्राध्यापकः २ स्थविरो=ज्ञानादिषु सीदतां स्थिरीकर्ता उद्यतानां उपबृंहकश्च ३ प्रवर्तकः=ज्ञानादिषु प्रवर्तयिता, तत्र ज्ञाने पठ एवं गुणय=शृणु, उद्देशादीन् कुरु इति। दर्शने च दर्शनप्रभावकान् संमत्यादितर्कान् अभ्यस्य इति। चारित्रे शुद्धप्रायश्चित्तं उद्वह इति, अनेषणा दुःप्रत्युपेक्षितानि च मा कृथाः इति, यथाशक्ति द्वादशधा तपो विधेहि इति ४ गणी=यस्य पार्श्वे आचार्याः सूत्रादि अभ्यस्यन्ति गणिनो वा अन्ये आचार्याः सूत्राद्यर्थं उपसंपन्नाः ५ गणधरः=तीर्थकृत् शिष्यादिः ६ गणावच्छेदको=यः साधून् गृहीत्वा वहिः क्षेत्रे आस्ते गच्छार्थं क्षेत्रोपधिमार्गणादौ प्रभावनादिकर्ता सूत्रार्थोभयवित् ७ यद्वा संघाटिकाधिपतित्वेन सामान्यसाधुं अपि पुरस्कृत्य विहरति ८ एतान् आचार्यादीन् आपृच्छ्य तस्य साधोर्विहर्तुं कल्पते। कथं पृच्छति?, इत्याह—"इच्छामि भदंताः! भवद्भिरभ्यनुज्ञातः सन् गृहस्थगृहं भक्तपानाद्यर्थं गच्छामि" इत्युक्ते शिष्येण "ते य से वियरिज्जा" इति ते च आचार्यादयः "से" तस्य साधोः वितरेयुः=अनुज्ञां दद्युः, एवं तस्य कल्पते गृहस्थगृहे गन्तुं आहाराद्यर्थं, अथ अनुज्ञां ते आचार्यादय न दद्युः तदा न कल्पते। शिष्य आह—"किमाहु भंते!" भदन्ताः! किमेवं आहुः? उत्तरमाह—"आयरिया पच्चवायं जाणंति त्ति" इत्यादिबहुवचनान्ता गणस्य संसूचका भवन्तीति न्यायात्

आचार्यादयः प्रत्यपायं अपायं अपायपरिहारं च जानन्ति, प्रतिकूलोऽपायस्य प्रत्यपायः इति विग्रहेण अपायपरिहारेऽपि प्रत्यपायशब्दो वर्तते, अनापृच्छ्य गतानां वृष्टिर्वा भवेत्, प्रत्यनीका वा उपद्रवेयुः, कलहो वा केनचित् आचार्य-बाल-ग्लानादि-क्षपकप्रायोग्यं वा ग्राह्यं अभविष्यत् ते च अतिशयशालिनः तत् सर्वं विदित्वा तस्मै अदापयिष्यत् १। एवं विहारभूमिं वा वियारभूमिं चैत्यादिगमनं २ एवं विआरभूमिं वा विचारभूमिं शरीरचिन्ताद्यर्थं गमनं ३ पुनः "अन्नं वा जं किंचि पओयणं" अन्यत् वा प्रयोजनं लेपसीवनलिखनादि उच्छ्वासादिवर्जं सर्वं आपृच्छ्यैव कर्तव्यं इति तत्त्वं, गुरुपारतन्त्र्यस्यैव ज्ञानादिरूपत्वात्। "गामाणुग्गामं" ग्रामानुग्रामं "दुइज्जित्तए त्ति" हिण्डितुं भिक्षाद्यर्थं कारणे वा ग्लानादौ, अन्यथा हि वर्षासु ग्रामानुग्रामं हिण्डनं अनुचितमेव ४। एवं अन्यतरां विकृतिं वा ग्रहीतुं इच्छेत्, तद्ग्रहणमपि आचार्यादीनां आपृच्छ्यैव नो अनापृच्छ्य तत्रापि एव "इयंति" इयन्ती वा "एव इक्खुत्तो" इति एतावतो वारान् अत्रापि प्रत्यपायं आचार्या एव जानन्ति, यतः अस्य विकृतेः ग्रहणे अस्य अयमपायो मोहोद्भवादिः ग्लानत्वात् अस्य गुण एवेति ५। वर्षाकाले स्थितो भिक्षुः इच्छेत्, एवं "तेइच्छियत्ति" वातिक-पैत्तिक-श्लैष्मिक-सांनिपातिक-रोगाणां आतुर १ वैद्य २ प्रतिचारक ३ भैषज्य ४ रूपां चतुष्पादां चिकित्सां "आउट्टित्तए त्ति" कारयितुं इच्छेत्, तदापि गुरुं आपृच्छ्यैव कारयितव्या, न तु अनापृच्छ्य, अत्रापि प्रत्यपायं एव आचार्या जानन्ति। अत्र "आउट्टि" धातुः आगमिकः करणार्थे ६। एवं साधुः साध्वी वा इच्छेत् अन्यतरत् "तवो कम्मं ति" अर्धमासिकादितपः तदपि

गुरुं आपृच्छ्यैव परं न अनापृच्छ्य कर्तव्यं, अत्र प्रत्यपायान् अयं समर्थोऽसमर्थो वा, अयं वैयावृत्तिकरो वा अन्यो वा पारणकयोग्यं लाजाभरणादिसन्धुक्षणयोग्यं अस्ति नास्ति वा इत्यादिकान् आचार्या एव विदन्ति ७। एवं भिक्षुः अपश्चिमं=चरमं मरणं अपश्चिममरणं, न पुनः यत् प्रतिक्षणं आयुर्दलिकानुभवलक्षणं आवीचिकमरणं तदेव अन्तोऽपश्चिममरणान्तः तत्र भवाः आर्षत्वात् उत्तरपदवृद्धौ अपश्चिममारणान्तिकी सा चासौ संलेखना च संलिख्यते—कृशीक्रियते शरीरकषायादि अनया इति संलेखना, सा च द्रव्यभावभेदभिन्ना "चत्तारि विचित्ताइं" इत्यादिका अपश्चिममारणान्तिका संलेखना च तस्या जोषणं=सेवा, तया "जूसिअत्ति" क्षपितशरीरः अत एव प्रत्याख्यातभक्तपानः पादपोपगतः—कृतपादपोपगमनः अत एव कालं—जीवितकालं मरणकालं वा अनवकाङ्क्षन्=अनभिलषन् विहर्तुं इच्छेत्, तदापि गुरुं आपृच्छ्यैव नो अनापृच्छ्य, यतः प्रत्यपायात्। अयं निस्तारको न वा अस्य निर्यापकाः सन्ति न वा?। पुनः क्षपकस्य हि उदरमलशोधनार्थं त्वगेला-नागकेशर-तमालपत्र-मिश्रितशर्करा-क्वथित-शीतलक्षीर-लक्षणं समाधिपानकं पाययित्वा पूगीफलादिद्रव्यैः मधुरविरेचः कार्यते, निर्यापकास्तु उद्वर्तनाद्यर्थं तस्य अष्टचत्वारिंशत् विलोक्यन्ते ते सन्ति न वा? इत्यादिकान् आचार्या एव जानन्तीति ८ एवं भक्तपानादि ग्रहीतुं एवं उच्चारं वा प्रश्रवणं "परिट्ठावित्तए त्ति" परिष्ठापयितुं व्युत्स्रष्टुं ९ एवं धर्मजागरिकां आज्ञाऽपाय-विपाक-संस्थानविचय-भेदधर्मध्यानविधानादिना

जागरणं धर्मजागरिका तां जागरयितुं=अनुष्ठातुं। गुरुं आपृच्छयैव सर्वं कर्तव्यं नो अनापृच्छय, गुर्वाज्ञाकरणे सर्वं सफलं भवतीति रहस्यं १० ॥ इति सप्तदशी सामाचारी ॥ १७ ॥

अथ गोचर्या-गमनादिषु आतपदानार्थं मुक्तोपधिभलामनिकाधिकाररूपां अष्टादशसामाचारीं आह—

वासावासं पज्जोसविए भिक्खू इच्छिज्जा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा अण्णयरिं वा उवहिं आयावित्तए वा पयावित्तए वा, नो से कप्पइ एगं वा अणेगं वा अपडिण्णवित्ता गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, असणं वा पाणं वा खाइमं वा साइमं वा आहारित्तए, बहिया विहारभूमिं वा वियारभूमिं वा सज्झायं वा करित्तए, काउस्सग्गं वा ठाणं वा ठाइत्तए। अत्थि य इत्थ केइ अभिसमण्णागए अहासण्णिहिए एगे वा अणेगे वा, कप्पइ से एवं वइत्तए-'इमं ता अज्जो! तुमं मुहुत्तगं जाणेहि जाव ताव अहं गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, असणं वा पाणं वा खाइमं वा साइमं वा आहारित्तए, बहिया विहारभूमिं वियारभूमिं सज्झायं वा करित्तए, काउस्सग्गं वा ठाणं वा ठाइत्तए, से य से पडिसुणिज्जा एवं से कप्पइ गाहावइकुलं भत्ताए वा

पाणाए वा निक्खमित्तए वा पविसित्तए वा, असणं पाणं खाइमं साइमं आहारित्तए वा, वहिया विहारभूमिं वियारभूमिं सज्झायं करित्तए वा । से य से नो पडिसुणिज्जा एवं से नो कप्पइ गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, असणं पाणं खाइमं साइमं आहारित्तए वा वहिया विहारभूमिं वियारभूमिं सज्झाए करित्तए वा काउस्सग्गं वा ठाणं वा ठाइत्तए ॥ ५२ ॥ (१८)

व्याख्या–"वासावासं" वर्षाकाले स्थितो भिक्षुः इच्छेत् वस्त्रं वा पतद्ग्रहं पात्रं वा कम्बलं वा पादप्रोञ्छनं–रजोहरणं अन्यतरोपधिं वा "आयावित्तए त्ति" एकवारं आतापे दातुं "पयावित्तए त्ति" प्रतापयितुं पुनः पुनः अनातापने कुत्सापनकादयो दोषाः, वस्त्राद्युपधौ आतपे दत्ते एकं वा साधुं अनेकान् वा साधून् अनुज्ञाप्य अकीकारणं विना गृहस्थगृहे आहारार्थं गन्तुं न कल्पते । एवं 'वहिया' वहिर्गन्तुं विहारभूमिं विचारभूमिं स्वाध्यायं वा कर्तुं कायोत्सर्गं स्थातुं वा स्थानं–ऊर्ध्वस्थानं तच्च कायोत्सर्गलक्षणं न कल्पते वृष्टिचौरभयादिना । अथ यदि संनिहित–प्रत्यासन्नयतिः एको वा अनेके वा तस्य तं उपधिं चिन्तयति तदा कल्पते । चिन्तकाभावे तु जलक्लेद-चौर-हरणाप्काय-विराधनोपकरण-हान्यादयो दोषाः, स्थानं–ऊर्ध्वस्थानं तच्च कायोत्सर्ग-

लक्षणं "इमं ता" इत्यादि संयतिः एवं वदेत्–"हे आर्य! त्वं इदं वस्त्रादि तावत् मुहूर्तमात्रं जानीहि=विभावयेः, "जावताव त्ति" भाषामात्रं यावदर्थे, अहं गृहस्थगृहादौ आहाराद्यर्थं यामि, तदा स च संनिहितसाधुः "से" तस्य उपधिचिन्तनेन इच्छाकारयितुः प्रतिश्रृणुयात्=अङ्गीकुर्यात्, वचनं इति शेषः, तदा तस्य विहारभूमिं वा विचारभूमिं वा गन्तुं स्वाध्यायं वा कर्तुं कायोत्सर्गे वा स्थातुं सर्वं कल्पते। अन्येन साधुना अङ्गीकरणाभावे तु न कल्पते सर्वं पूर्वप्रतिपादितदोषः सद्भावात् ॥ इति अष्टादशी सामाचारी ॥ १८ ॥

अथ शय्यासनाभिग्रहाधिकाररूपां एकोनविंशतितमां सामाचारीं आह—

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा अणभिग्गहियसिज्जासणियाणं हुत्तए, आयाणमेयं, अणभिग्गहियसिज्जासणियस्स अणुच्चाकूइयस्स अणट्ठाबंधियस्स अमियासणियस्स अणातावियस्स असमियस्स अभिक्खणं २ अपडिलेहणासीलस्स अपमज्जणासीलस्स तहा तहा संजमे दुराराहए भवइ ॥ ५३ ॥ अणादाणमेयं, अभिग्गहियसिज्जासणियस्स उच्चाकूइयस्स अट्ठाबंधियस्स मियासणियस्स आयावियस्स समियस्स अभिक्खणं २ पडिलेहणासीलस्स पमज्जणासीलस्स तहा २ संजमे सुआराहए भवइ ॥ ५४ ॥ (१९)

व्याख्या-"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च अनभिगृहीतशय्यासनकेन भवितुं न कल्पते=न युक्तं, न अभिगृहीतानि शय्यासनानि येन सः अनभिगृहीतशय्यासनः, अनभिगृहीतशय्यासन एव अनभिगृहीतशय्यासनिकः, "स्वार्थे इकः" तेन यतो वर्षासु साधुना मणिकुट्टिमेऽपि पीठफलकानि अभिग्रहवता एव भाव्यं इत्यर्थः। अन्यथा शीतलायां भूमौ शयने आसने च कुन्थ्वादिप्राणविराधना अजीर्णादिदोषाः स्युः। एतत् कर्मणां दोषाणां वा आदानं-उपादानकारणं-एतत् किं अनभिगृहीतशय्यासनिकत्वं अथवा अभिग्रहो=निश्चयः? स्वपरिगृहीतमेव शय्यासनं मया भोक्तव्यं न अन्यपरिगृहीतं, न अभिग्रहो अनभिग्रहः। आदानत्वमेव द्रढयति-"अणभिग्गहिअ"त्यादि। सुगमं, यत् एवंविधस्य साधोः संयमो दुराराध्यो=दुष्प्रतिपाल्यो भवति। किंविशिष्टस्य साधोः?। "अणुच्चाकुइअस्स" अनुच्चाकुचिकस्य "कुच परिस्पन्दे" अकुचोऽपरिस्पन्दो=निश्चलो यस्य कम्बिका न चलन्ति, अदृढबन्धने हि सङ्घर्षात् मत्कुणकुन्थ्वादिवधः स्यात्, उच्चा हस्तादि यावत् येन पिपीलिकादिवधो न स्यात्, सर्पादिः वा न दशेच। उच्चा चासौ अकुचा च उच्चाकुचा कम्बादिमयी शय्या, सा विद्यते यस्याऽसौ उच्चाकुचिकः, न उच्चाकुचिकः अनुच्चाकुचिकः=नीचः सपरिस्पन्दशय्यासनः तस्य। पुनः किंविशिष्टस्य साधोः?। "अणट्ठाबंधिस्स" अनर्थबन्धिनः, पक्षमध्ये अनर्थं=निष्प्रयोजनं एकवारोपरि द्वौ त्रींश्चतुरो वारान् कम्बासु बन्धान् ददाति चतुरुपरि बहूनि वा अङ्गानि बध्नाति, तथा च स्वाध्यायपलिमन्थादयो दोषा भवन्ति, यदि च एकाङ्गिकं चम्पकादिपट्टं लभ्यते तदा सूत्र० ५९

तदेव ग्राह्यं, बन्धनादिप्रक्रियापरिहारात्। पुनः किंविशिष्टस्य साधोः? । "अभिआसणियस्स" अमित्तासनिकस्य–अबद्धासनकस्य, स्थानात् स्थानान्तरं हि मुहुर्मुहुः सङ्क्रामन् सत्त्ववधे प्रवर्तते, अनेकानि वा आसनानि सेवमानस्य। पुनः किंविशिष्टस्य साधोः?। "अणाताविअस्स" अनातापिनः–संस्तारकपात्रादीनां आतपे अदातुः, तत्र च पनकसक्त्यादयो दोषाः, उपभोगे च जीववधः।उपभोगाभावे च उपकरणमधिकरणमेवेति। पुनः किंविशिष्टस्य साधोः?। असमितस्य ईर्यादिषु तत्र आद्यतुर्यपञ्चसमितिषु असमितो जीवान् हन्ति, भाषाऽसमितौ असमितः सम्पातिमान् हन्ति। एषणासमितौ असमितो हस्तमात्रादौ, अप्कायः परिणतः न वेति, स्नेहच्छन्दं न जानाति, आदाननिक्षेपसमितौ असमितः पुनः पुनः स्थाननिषीदनाऽदाननिक्षेपादौ जीवान् हन्ति। पुनः किंविशिष्टस्य साधोः?। अभीक्ष्णं अभीक्ष्णं–पुनः पुनः अप्रतिलेखनाशीलस्य, चक्षुषा अदृष्ट्वा। पुनः किंविशिष्टस्य साधोः?। "अप्पमज्जणासीलस्स" अप्रमार्जनाशीलस्य–रजोहरणादिना अप्रमृज्य स्थानादिकर्तुः आभ्यां च दुष्प्रतिलेखिते दुष्प्रमार्जिते सङ्गृहीते, 'नञः' कुत्सार्थत्वात्, तथा तथा तेन तेन प्रकारेण संयमो दुराराध्यो–दुष्प्रतिपाल्यो भवति, यथा यथा तानि तानि स्थानानि करोति तथा तथा संयमाराधना दुष्करा इत्यर्थः। एतद्विपरीतस्य किं स्यात्?, इत्याह–"अणायाणमेयं" कर्मणां असंयमस्य वा अनादानं एतत् तेन शय्यासनाभिग्रहवता भाव्यं, कथं अनादाने पतितव्यं?, इत्याह–उच्चा अकुचा च शय्या कर्तव्या, अथार्य सकृच पक्षान्तर्बन्धनीया। अङ्कानि चत्वारि कार्याणि बद्धासनेन भाव्यं, १ कारणे एव उत्थानात् संस्तारकादीनि

आतापनीयानि २ ईर्यासमित्यादिषु समितेन यतनावता भाव्यं, ३ प्रतिलेखनाप्रमार्जनाशीलेन च भाव्यं ४। यथा यथा एतानि स्थानानि करोति तथा तथा संयमः सुखाराध्यः सुकरो वा भवतीति, ततश्च मोक्षो भवति॥ इति एकोनविंशतितमा सामाचारी ॥ १९ ॥

अथ स्थण्डिलाधिकाररूपां विंशतितमां सामाचारीं आह—

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा तओ उच्चारपासवणभूमीओ पडिलेहित्तए न तहा हेमंतगिम्हासु जहा णं वासासु, से किमाहु भंते !?, वासासु णं उस्सण्णं पाणा य तणा य बीया य पणगा य हरियाणि य भवंति ॥ ५५ ॥ (२०)

व्याख्या—“वासावासं” वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च, यथा—वर्षासु तिस्रः उच्चारप्रश्रवणभूमयः प्रतिलेखयितव्या भवन्ति तथा हेमन्तग्रीष्मकालयोः न। तत्राप्ययं विशेषः—तिस्रः उच्चारप्रश्रवणभूमयः अनधिसहिष्णोः अन्तः कर्तव्याः १ अधिसहिष्णोश्च बहिस्तिस्रः कार्याः २ दूरव्याघाते मध्या तदृव्याघाते आसन्नेति तिस्रः ३ अत्र आर्षत्वात् “ग्रीष्म” शब्दो बहुत्वे स्त्रीलिङ्गश्च। वासासु किमिति तत् भूमित्रयकरणं तत्राह—“वर्षासु उस्सण्णं ति” प्रायो बाहुल्येन इत्यर्थः। प्राणाश्च शङ्खनकेन्द्रगोपकृम्यादयः १ तृणानि=घासाः २ बीजानि=तत्तद्वनस्पतीनां अधुनोद्भिन्नानि ततो हरितानि जातानि ३ पनका—उल्लयः अथवा

"पाण य तण य त्ति" प्राणानां=जीवानां आयतनानि स्थानभूतानि बीजादीनि इति योज्यं। अयं भावो वर्षाकाले विशेषतः, पृथ्वी विशेषतः जीवाकुला भवति। तत उच्चारप्रश्रवणभूमित्रयं कार्यमेव ॥ इति विंशतितमा सामाचारी ॥ २० ॥

अथ मात्रकयतनाधिकाररूपां एकविंशतितमां सामाचारीं आह—

**वासावासं पज्जोसवियाणं कप्पइ निग्गंथाणं वा निग्गंथीण वा तओ मत्तगाइं गिण्हित्तए, तं जहा–उच्चारमत्तए, पासवणमत्तए, खेलमत्तए ॥ ५६ ॥ (२१)**

व्याख्या–"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च त्रीणि मात्राणि एव मात्रकाणि ग्रहीतुं कल्पते, तथाहि उच्चारमात्रकं १ प्रश्रवणमात्रकं २ खेलमात्रकं ३ चेति, मात्रकाणां अभावे वेलातिक्रमेण वेगधरणे आत्मविराधना स्यात्। वर्षति च बहिर्गमने संयमविराधना स्यात्। अत्र चूर्णिः–"बाहिं नेतस्स गुम्मिआइगहणं तेण मत्तए वोसिरित्ता। बाहिं णित्ता परिट्ठवेइ, पासवणे वि अभिग्गहिओ धरेइ। तस्साऽसइ जो जाहे वोसिरइ सो ताहे धारेइ ण निक्खिवइ सुवंतो वा उच्छंगे ठितयं चेव उवरिं दंडए वा दोरेणं बंधइ गोसे असंसत्तिआए भूमीए अन्नत्थ परिट्ठवेइ" ति ॥ इति एकविंशतितमा सामाचारी ॥ २१ ॥

अथ लोचाऽधिकाररूपां द्वाविंशतितमां सामाचारीं आह—

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा परं पज्जोसवणाओ गोलोमप्पमाणमित्तेऽवि केसे तं रयणिं उवायणावित्तए। अज्जेणं खुरमुंडेण वा लुक्कसिरएण वा होइयव्वं सिया। पक्खिया आरोवणा, मासिए खुरमुंडे, अद्धमासिए कत्तरिमुंडे, छम्मासिए लोए, संवच्छरिए वा थेरकप्पे ॥ ५७ ॥ (२२)

व्याख्या—"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च नो कल्पते पर्युषणातः परं आषाढचतुर्मासकात् अनन्तरं गोलोममात्रा अपि केशा न स्थापनीयाः आस्तां दीर्घाः, यावत् तां रजनीं भाद्रपदसितपञ्चमीं रात्रिं "उवायणावित्तए त्ति" अतिक्रमयितुं यतो "धुवलोओ उ जिणाणं निच्चं थेराण वासासु" इत्युक्तं, केशेषु हि अप्कायो विराध्यते, तत्सङ्गाच्च षट्पदिकाः संमूर्च्छन्ति कण्डूयमानश्च ताः खण्डयति नखक्षतं वा शिरसि स्यात्, यदि च क्षुरेण मुण्डापयति कर्तर्या [कर्तयति] वा तदा आज्ञाभङ्गाऽनवस्थामिथ्यात्वसंयमात्मविराधना षट्पदिकाच्छेदन–नापितपश्चात्कर्म–शासनाऽपभ्राजनादिदोषा भवन्ति, तस्मात् लोच एव श्रेयान्। यदि चाऽसहिष्णोः लोचे कृते ज्वरादिर्वा स्यात्, बालो वा रुदयात्, धर्मं वा त्यजेत्, ततो न तस्य लोचः कार्यः इत्याह—आर्येण साधुना क्षुरमुण्डेन वा लुञ्चितशिरोजेन वा भवितव्यं स्यात्। "लुक्क त्ति" लुञ्चिताः

शिरोजाः=केशा यस्य स लुञ्चितशिरोजः, तेन अपवादतो बालग्लानादिना क्षुरमुण्डेन उत्सर्गतो लुञ्चितशिरोजेन इत्यर्थः। केवलं प्रासुकोदकं आत्मना गृहीत्वा शिरः प्रक्षाल्य, नापितस्यापि प्रासुकपानीयेन करौ प्रक्षालयति। अथ यस्तु क्षुरेणापि कारयितुं अक्षमो व्रणादिमच्छिरा वा तस्य केशाः कर्तर्या कर्तनीयाः—कल्पनीयाः। "पक्खिआ आरोवणा त्ति" पाक्षिकं बन्धदानं संस्तारकदवरकाणां पक्षे पक्षे बन्धा मोक्तव्याः प्रतिलेखितव्याश्च इत्यर्थः। अथवा आरोपणाप्रायश्चित्तं पक्षे पक्षे ग्राह्यं सर्वकालं वर्षासु विशेषतः। अत्र लोचाधिकारमध्ये "पक्खिआ आरोवणा त्ति" पदं सूत्रमध्ये वर्तते, वृत्तिकृता च व्याख्यातं, परं अत्र अनुपयोगिकं इव दृश्यते, पश्चात् तत्परमार्थो गीतार्थगम्यः। अथ कियता कालेन को लोचः कारयितव्यः?, इत्याह—"मासिए खुरमुंडे त्ति" मासे मासे असहिष्णुना क्षुरमुण्डनं कारणीयं १ "अद्धमासिए कत्तरिमुंडे त्ति" यदि कर्तर्या कारयति तदा पक्षे पक्षे गुप्तं कारणीयं। क्षुरकर्तर्योश्च लोचे प्रायश्चित्तं निशीथोक्तं यथासङ्ख्यं लघुमासो १ पुरिमार्धं लघुमास एकासनं च देयं। "छम्मासिए लोए" षाण्मासिको लोचः "संवच्छरिए वा थेरकप्पे त्ति" स्थविराणां—वृद्धानां जराजर्जरत्वेन असामर्थ्यात् दृष्टिरक्षार्थं च, अर्थात् तरुणानां चातुर्मासिकः "संवच्छरो" वर्षारात्रः "संवच्छरं वा वि परं पमाणं, बीयं च वासं न तहिं वसिज्जा" इति वचनात्। ततः—संवत्सरे—वर्षासु भवः सांवत्सरिको वा लोचः स्थविरकल्पे स्थविरकल्पस्थितानां वर्षासु हि जिनकल्पिक—स्थविरकल्पिकानां ध्रुवो लोच इति वाशब्दो विकल्पार्थः। अपवादतो नित्यलोचाकरणेऽपि पर्युषणापर्वणि अवश्यं लोचः कार्य इति

सूचयति। अथवा एष सर्वः आपृच्छ्य भिक्षागमने विकृतिग्रहणादिः मात्रकावसानः सांवत्सरिको-वर्षाकाल-संबन्धी स्थविरकल्पः स्थविरमर्यादा, वाशब्दः किञ्चिज्जिनकल्पिकानां अपि सामान्यतां सूचयति, परं प्रायः स्थविराणां एवाऽयं कल्प इत्यर्थः॥ इति द्वाविंशतितमा सामाचारी॥ २२॥

अथ अधिकरणाऽनुदीरणाधिकाररूपां त्रयोविंशतितमां सामाचारीं आह—

वासावासं पज्जोसविआणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा परं पज्जोसवणाओ अहिगरणं वइत्तए, जे णं निग्गंथो वा निग्गंथी वा परं पज्जोसवणाओ अहिगरणं वयइ से णं 'अकप्पेणं अज्जो! वयसीति' वत्तव्वे सिया, जे णं निग्गंथो वा निग्गंथी वा परं पज्जोसवणाओ अहिगरणं वयइ से णं निज्जूहियव्वे सिया॥ ५८॥ (२३)

व्याख्या-"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां च निर्ग्रन्थीनां नो कल्पते, "परं पज्जोसवणाओ अहिगरणं वइत्तए" पर्युषणातः परं अधिकरणं-राटिः तद्वचनं अपि अधिकरणं वदितुं, अथ यो निर्ग्रन्थादिः पर्युषणातः परं अधिकरणं वदति, तस्य किं वक्तव्यं?, इत्याह-"से णं अकप्पेणं अज्जो वत्तव्वं सिआ" हे आर्य! अकल्पेन-अनाचारेण वदसि इति वक्तव्यः स्यात्, यतः पर्युषणादिनतोऽर्वाक् पर्युषणादिने एव वा यत् अधिकरणं उत्पन्नं तत् पर्युषणायां क्षामितव्यं। यच्च त्वं पर्युषणातः परं अपि अधिकरणं वदसि सोऽयं

अकल्प्य इति भावः। पुनः यो निर्ग्रन्थादिः पर्युषणातः परं अधिकरणं वदति स "निज्जूहियव्वे सिआ" इति निर्जूहितव्यः-ताम्बूलिकपत्रदृष्टान्तेन गच्छात् निष्कास्यः स्यात्, उपशान्तोपस्थितस्य च मूलं दातव्यं-नवीनं चारित्रं देयम् ॥ इति त्रयोविंशतितमा सामाचारी ॥ २३ ॥

अथ परस्परक्षामणाधिकाररूपां चतुर्विंशतितमां सामाचारीं आह—

वासावासं पज्जोसवियाणं इह खलु निग्गंथाण वा निग्गंथीण वा अज्जेव कक्खडे कडुए वुग्गहे समुप्पज्जिज्जा, सेहे राइणियं खामिज्जा, राइणिएऽवि सेहं खामिज्जा, (सं० १२००) खमियव्वं खमावियव्वं उवसमियव्वं उवसमावियव्वं सुमइसंपुच्छणाबहुलेणं होयव्वं। जो उवसमइ तस्स अत्थि आराहणा, जो न उवसमइ तस्स नत्थि आराहणा, तम्हा अप्पणा चेव उवसमियव्वं, से किमाहु भंते!?, उवसमसारं खु सामण्णं ॥ ५९ ॥ (२४)

व्याख्या-"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च इह प्रवचने अद्यैव पर्युषणादिने "कक्खड" कक्खडः-उच्चैःशब्दः "कडुए त्ति" कडुको-जकारमकारादिरूपो "वुग्गहे त्ति" विग्रहः=कलहः यदि समुत्पद्यते तदा शैक्षोऽवमरात्निकः रत्नाधिकं रात्निकं क्षामयति यद्यपि रात्निकः प्रथमं सामाचारीवितथाकरणे अपराद्धः तथापि शैक्षेण रात्निकः क्षामणीयः। अथ शैक्षोऽपुष्टधर्मा तदा रात्निकः तं प्रथमं क्षमयति, तस्मात्

क्षमयितव्यः स्वयमेव क्षामयितव्यः। परः अव्यक्तत्वात् नपुंसकत्वं किं तस्या गर्भे जातमिति तथा उपशमयितव्यं आत्मना उपशमः कर्तव्यः उपशमयितव्यः परः।

"जं अज्जिअं समीपत्तणहिँ तवनिअमयंभमइएहिँ। मा हुतयं कलहंता, उज्झिचह सागपत्तेहिँ ॥ १ ॥
जं अज्जिअं चरित्तं देसूणाए वि पुव्वकोडीए। तं पि कसाइमित्तो, हारेइ नरो मुहुत्तेणं ॥ २ ॥"

इत्यादिभिः उपदेशैः पुनः "समुइसंपुच्छणायहुलेण होयव्वं" इति संमुआ [इ] रागद्वेषरहिता मतिः तत्पूर्वं संपृच्छना सूत्रार्थेषु ग्लानाग्लानानां वा तद्बहुलेन भाव्यं रागद्वेषौ विहाय येन सह अधिकरणं आसीत् तेन सह सूत्रार्थे संप्रश्नः कार्यः, तद्दन्तश्च वोढव्यः। यदि एकतरस्य क्षमयतोऽपि एको न शाम्यति तदा किं?, इत्याह–"जो उवसमइ त्ति" य उपशाम्यति उपशमयति वा कषायान् तस्य अस्ति आराधना ज्ञानादीनां, यश्च नो उपशाम्यति तस्य नास्ति आराधना। तस्मात् आत्मना एव उपशमः कर्तव्यः। कुत एवं?, इत्याह–"उवसमसारं खु सामण्णं" खुः–निश्चयेन, श्रामण्यं=श्रमणभावः उपशमसारं उपशमप्रधानं।

"सामण्णमणुचरंतस्स, कसाया जस्स उक्कडा हुंति। मन्नामि उच्छुपुप्फं व, निप्फलं तस्स सामण्णं ॥ १ ॥"

इति वचनात् ॥ इति चतुर्विंशतितमा सामाचारी ॥ २४ ॥

अत्र समितिगुप्तिक्रोधमानमायालोभादीनां दृष्टान्ता वाच्याः। वर्षाकाले विशेषतः साधुना समित्यादयः पालनीयाः। ईर्यासमितौ वरदत्तो मुनिर्यथा–इन्द्रेण वरदत्तमुनेः प्रशंसा कृता–"अद्य भरतक्षेत्रे एतादृशो न

कोऽपि ईर्यासमितिपालकः।" ततो देवेन परीक्षार्थं आगत्य गजरूपं कृत्वा शुण्डादण्डेन आकाशे उल्लालितः। अधश्च सूक्ष्ममण्डूक्यः पृथिव्यां विकुर्विताः, तेन अधः पतता चिन्तितं–"मम मरणभयं नास्ति परं अहो! सूक्ष्ममण्डूकी जीवविराधना भविष्यति" इति चिन्तयन् तुष्टेन देवेन क्षामितः ॥ १ ॥

भाषासमितौ सङ्गतः–साधुः स शत्रुरुद्धात् नगरात् निर्गतः, वैरिभिः पृष्टं–"भो! नगरमध्ये सैन्यस्य बलाबलं कीदृशं?।" तदा साधुः प्राह–

"बहुं सुणेहिं कन्नेहिं, बहुं अच्छीहिं पिच्छई। न य दिट्ठं सुयं सव्वं, भिक्खू अक्खाउ मरहई ॥ १ ॥"

एवं पुनः पुनः वक्ति परं भाषां न भनक्ति, तदा पाठग्रहिल इति कृत्वा मुक्तः ॥ २ ॥

एषणासमितौ नन्दिषेण–वृत्तान्तः–वसुदेवजीवः पूर्वभवे नन्दिषेणो, ग्लानवैयावृत्त्यभिग्रही षष्ठकर्ता, इन्द्रप्रशंसायां देवेन अतीसारिसाधुविकुर्वणां कृत्वा तन्निमित्तं पानीयार्थं विहरणगमने जलस्य अशुद्धताकरणं देवस्य असावधानत्वे जलविहरणं ग्लानसाधुस्कन्धारोपणं अशुचिना खरण्टनं देवस्तुत्यादिकरणं च प्रसिद्धं ॥ ३ ॥

आदानादौ प्रतिलेखनाकरणे सोमिलः साधुः यथा क्वाऽपि सन्ध्यायां विहारकरणे साधुभिः गुरुवचनेन सकाले प्रतिलेखनाः कृताः स्थितौ च।, पुनः काले प्रतिलेखनाः कृताः। गुरुभिः प्रोक्तं–"भो सोमिल! त्वमपि प्रतिलेखनां कुरु।" तेन प्रोक्तं पुनः–"प्रतिलेखना किमर्थं क्रियते? मध्ये किं सर्पाः उत्पन्नाः सन्ति?।" इति उल्लण्ठवचनं भाषितं। तेन प्रभाते प्रतिलेखनासमये शिक्किकामध्यात् अकस्मात् देवेन सर्पान् निष्कास्य

भापितः साधुः नष्ट्वा गुरुसमीपे गत्वा सर्पनिर्गमनस्वरूपं प्राह । गुरुभिः प्रोक्तं–"भो साधो ! पूर्वं त्वया उल्लङ्घनं उक्तं, एवं नोच्यते प्रतिलेखनायां तु महती निर्जराऽस्ति । श्रेष्ठिसूनोरिव स हि प्रव्रजितः अभिग्रहं न जग्राह । यथा सर्वेषां साधूनां दण्डका मया प्रतिलिख्य प्रतिलिख्य हस्ते दातव्याः । एवं च कुर्वन् प्रभूतं कर्म क्षपयामास । सोमिलोऽपि तथैव कुर्वन् कर्म अक्षिपत् ॥ ४ ॥

उच्चारप्रश्रवणसमितौ सुव्रताचार्यः क्षुल्लकः स ह प्रव्रजितः । गुरुणा प्रोक्तं–"भो ! स्थण्डिलानि कुरु ।" स न करोति, वक्ति च–"किं तत्र उष्ट्राः स्थिताः सन्ति ?" इति रात्रौ मात्रकं परिष्ठापयन् उष्ट्ररूपेण देवतया भापितः । गुरुणा प्रोक्तं–"अदृष्टस्थण्डिले मात्रकादि अत्यजतां, देवता साहाय्यं स्यात्, यथा अत्रैव गच्छे अप्रतिलेखितस्थण्डिले अत्यजन् कायिक्या बाधितः देवतया उद्योते कृते इति अद्राक्षीत् । पुनः अन्धकारे जाते देवकृतं सर्वं स्वरूपं ज्ञात्वा पश्चात् आलोच्य सिद्धः, सोऽपि क्षुल्लकः तथैव अकरोत् ५ एवं पञ्चसमितयो यत्नासु विशेषतः प्रतिपालनीयाः ॥ ५ ॥

अथ गुप्तयः–तत्र मनोगुप्तौ कौङ्कणकः साधुः कायोत्सर्गे स्थितः, गुरुभिः प्रोक्तं–"बह्वी वेला जाता, भो ! किं ध्यायसि ? ।" तेन प्रोक्तं–"मया जीवदया ध्याता । का जीवदया ?" स ऊचे । पुत्राणां दयया क्षेत्रसूदनवल्लीनादि ध्यानं । गुरुणा प्रोक्तं–"मिथ्यादुष्कृतं देहि, एवं न ध्यातव्यं महान् आरम्भो लगति ।" सोऽपि तथैव त् १। वचनगुप्तौ गुणदत्तःसाधुः, स हि श्रीपुरे धनवतीपुत्रः सांसारिकवन्दापनाय गच्छन् जन्याया वयं न

ज्ञाप्या इति वाचं लात्वा चौरैः मुक्तः स्वस्थाने गतः। सर्वं मातृपितृप्रमुखं सांसारिकवर्गं वन्दाप्य, पुनः तयैव जन्यया सार्धं चलितः सन् तस्मिन् स्थाने प्राप्तः, तदा ते एव चौरा उत्थिताः, तैः जनन्यादि सर्वेऽपि मुषिताः सर्वं गृहीतं। तदा चौरैः उक्तं–"एष स एव साधुः य आत्मभिः जन्याज्ञापनविषये वारितोऽभूत्" इति तेषां वचनं जनन्या श्रुतं। तस्या हृदये महादुःखं लग्नं–अनेन साधुना पुत्रेणाऽपि चौरा ज्ञाताः, परं अस्माकं अग्रे न ज्ञापितं, तेन अहं अस्योपरि स्वोदरे क्षुरिकां प्रक्षिप्य मरिष्यामि" इति। चौरैः ज्ञातं–"अस्य साधोः एषा जननी, धन्योऽयं साधुः येन जनन्या अपि न ज्ञापितं।" ततो यत् धनादिकं चौरैः लुण्टितं आसीत् तत् सर्वं प्रत्यर्पितं। तदनु जनन्याः जन्यायाश्च सर्वेषां प्रमोदो जातः॥ २॥

कायगुप्तौ अरहन्नकसाधुर्यथा–अरहन्नकसाधुः विहारं कुर्वन् क्वापि स्थाने वाहलकं [ नाला ] प्राप्य विचारितवान्–"नीरमध्ये पादक्षेपदाने मम अप्कायविराधना भविष्यति" तेन कुर्दयित्वा द्वितीयतटे पतितः। आज्ञाभङ्गात् देवतया पादच्छेदः कृतः, पश्चात् देवतया शिक्षा दत्ता–"पानीयमध्ये गम्यते, परं एवं न कर्तव्यं" इति शिक्षां दत्त्वा पादः सज्जीकृतः॥ ३॥ इति गुप्तित्रयदृष्टान्ताः॥

तथा अस्मिन् श्रीपर्युषणापर्वणि समागते महावैरमपि त्याज्यं, विरोधे जाते क्षामणायां कृतायां एव प्रतिक्रमणं शुध्यति अन्यथा न। अत्रार्थे उदायनदृष्टान्तः, तथाहि—

चम्पायां नगर्यां कुमारनन्दिनामा एकः स्वर्णकारो वसति। परं स कीदृशः?। आजन्मस्त्रीलोलुपः, तेन

पञ्चशतस्त्रीणां पतिः भोक्ता न जातः। एकदा कुत्रचित् कुमारनन्दिस्वर्णकारेण हासा-प्रहासानाम्न्यौ देव्यौ दृष्टे। तयोः रूपेण मोहितः सन् प्रार्थनां कृतवान्। ताभ्यां प्रोक्तं-"आवयोः पतिः देवोऽभूत्। स च्युतः, तेन पतिं गवेषयावः, ततः त्वया पञ्चशैलकनाम्नि द्वीपे आगन्तव्यं यथा भोगयोगो भवेत्" इत्युक्त्वा ते हासा-प्रहासादेव्यौ स्वस्थाने गते। अथ कुमारनन्दिना तत्र गमनाय समुत्कण्ठितेन पटहो वादितो यथा-"(यो) मां पञ्चशैलद्वीपे प्रापयति तस्मै कोटिद्रव्यं दम्मि [ददामि]।" तत एकेन वृद्धनाविकेन तन्मार्गज्ञेन द्रव्यलोभेन अङ्गीकृत्य प्रोक्तं-"भो! अर्धं साम्प्रतं मम पुत्रादीनां देहि, अर्धं च पश्चात् दद्याः।" ततश्च तथैव कृते प्रवहणे चटितः। अग्रे समुद्रमध्ये वृद्धेन एको वटो दृष्टः। भद्रनन्दिनः प्रोक्तं-"भो! इदं प्रवहणं अग्रे दृश्यमानवटस्य अधो निःसरिष्यति, तत्र महान् आवर्तोऽस्ति, तत्र वाहनं भङ्क्ष्यति, परं त्वया वटशाखां गृहीत्वा वटे स्थातव्यं। तत्र च रात्रौ भारण्डपक्षिणः समेष्यन्ति, तत्पादे त्वया बन्धनेन देहो बन्धनीयः, ते च तत उड्डीय पञ्चशैलद्वीपे चूर्णिनिमित्तं यास्यन्ति, त्वयापि तत्र गत्वा बन्धच्छोटनेन देहं मोचनीयं, [मोचयित्वा] हासा-प्रहासापार्श्वे गन्तव्यं" इत्युक्ते तत्र स्थाने भग्नं वाहनं, स्वर्णकारोऽपि तथैव कृत्वा गतः, हासाप्रहासासमीपे कृता भोगार्थं प्रार्थना। ततः ताभ्यां प्रोक्तं-"भो! अनेन अशुचिदेहेन न आवाभ्यां सह भोगो भवति।" ततः ताभ्यां स कुमारनन्दी चम्पाया उद्याने आनीय मुक्तः। अथ भद्रनन्दिकुमारेण तत्प्राप्तिनिमित्तं इङ्गिनीमरणं अज्ञानकष्टं प्रारब्धं, तस्मिन् क्षणे तन्मित्रेण नागिलश्रावकेण वार्यमाणोऽपि न तिष्ठति स्म। ततो हासा-

प्रहासाध्यानं कुर्वन् अज्ञानकष्टात् तत्पतिर्देवस्तत्रोत्पन्नः। ताभ्यां सह स्वेप्सितान् भोगान् भुञ्जानः तिष्ठति। अथ कदाचित् नन्दीश्वरद्वीपे देवयात्रार्थं इन्द्राश्चतुर्विधदेवनिकायसहिताश्चलिताः। इन्द्रादेशेन हासाप्रहासा अपि तयोः यः पतिः स्यात् तस्य अधिकारोऽस्ति, इन्द्रादिदेवानां अग्रे मृदङ्गं वादयन् निःसरति, तेन ताभ्यां तस्य गले मृदङ्गो निक्षिप्तः। प्रोक्तं च–"अयं वादनीयः।" ततस्तेन गलात् उत्तार्य दूरे निक्षिप्तः–"न अहं वादयिष्यामि", मृदङ्गश्च पुनःपुनर्गले एव आगत्य पतति। ततः ताभ्यां प्रोक्तं–"अस्मत्पतेः अधिकारोऽस्ति, गले पतितो मृदङ्गो वादित (वादयितव्य) एव, छुटिः न अन्यथा, हासा प्रहासा च "रामादल गलइ पड्या वजाड्या छूटी जइं" इति लोकवाक्यं च जातं। ततो विद्युन्माली हासाप्रहासासहितो मृदङ्गं वादयन् मार्गे गच्छन् महर्द्धिकसुरान् दृष्ट्वा अल्पर्द्धिकमात्मानं निन्दन् नागिलजीवेन अच्युत १२ देवलोकोत्पन्नेन देवेन प्रोक्तं–"भो! मां जानासि?।" तत उपयोगदानेन ज्ञातं प्रोक्तं च–"हा मित्र नागिल! मया त्वया वारितेनापि तुच्छभोगकृते मनुष्यजन्म हारितं, येन ईदृशीं अवस्थां प्राप्तः। अथ किं करोमि?।" नागिलदेवेन प्रोक्तं–"भो! गोशीर्षचन्दनमयीं श्रीमहावीरदेवप्रतिमां कृत्वा पूजय, यथा बोधिबीजप्राप्तिर्भवेत्।" तेन तथैव कृत्वा कियन्तं कालं प्रतिमा पूजिता। पूजयित्वा ततः आयुः क्षणे [ये] प्रतिमागर्भां पेटीं कृत्वा पोतवणिजानां दत्त्वा प्रोक्तं–"इयं देवाधिदेवप्रतिमा वीतभयपत्तने गत्वा श्रीउदायनस्य राज्ञो देया।" ततः तैः सा पेटी आनीय सभायां राज्ञोऽग्रे मुक्त्वा कथितं च–"देवाधिदेवप्रतिमाऽस्ति," अन्यैः ब्रह्म–विष्णु–महेश्वराणां नामग्राहं उद्घाटिता, परं नोद्घटति। ततो राज्ञो

भोजनवेलायां अतिक्रमे प्रभावत्या आगत्य प्रोक्तं—"देवाभिदेवोऽर्हन् वीतराग एव" इति। तत उद्घाटिता पेटी देवतावसरे स्थापिता। प्रभावती श्राविका तां सदैव पूजयति। एकदा प्रभावत्या पूजां कुर्वत्या श्वेतवस्त्राणि याचितानि, दास्या दत्तानि, परं प्रभावत्या दृष्टिभ्रमेण रक्तानि ज्ञात्वा दासी तर्जिता। क्षणान्तरे श्वेतान्येव दृष्टानि, ज्ञातं ममायुः षण्मासमध्ये, ततो दीक्षार्थं राजा प्रार्थितः। राज्ञा प्रोक्तं—"त्वं देवो भविष्यसि, मम धर्मवेलायां सान्निध्यं करोषि, तदा आदेशं ददामि।" ततोऽङ्गीकृते, आदेशो दत्तः, दीक्षा गृहीता, देवो जातः। राजा योगिवृन्दमारणेन साधुवृन्दरक्षणेन श्रावकः कृतः। अथ तां प्रतिमां दीक्षाग्रहणप्रोक्तवचनानुयोगेन देवदत्ता दासी पूजयति। एकदा गन्धारः श्रावकः प्रतिग्रामं प्रतिपुरं देवान् वन्दमानः श्रीदेवाभिदेवप्रतिमां देवतादत्तां वन्दितुं वीतभये आजगाम। पूजिता प्रतिमा, परं तस्य एकदा ज्वरश्चटितो, दास्या सारशुश्रूषाकरणेन सज्जीकृतः, जातो नीरोगः। तेन गच्छता उपकारिणीति दास्यै गुटिकाद्वयं सप्रभावं दत्तं, माहात्म्यमपि कथितं—"अनया भक्षितया दिव्यरूपं भावि, अनया भक्षितया तव अभीष्टः स त्वां आदरिष्यति।" एवं कथयित्वा तस्मिन् गते एकां भक्षयित्वा दिव्यरूपं कृतं। नाम्ना च स्वर्णगुलिका जाता। द्वितीयभक्षणे लोकमुखात् स्त्रीलोलुपं चण्डप्रद्योतनं स्वरुचितं हृदि दध्यौ—"स मम वरो भवतु" इति। ततो गुटिकाभिहितदेवतया उज्जयिन्यां गत्वा चण्डप्रद्योतनाय दासीस्वरूपं सर्वं ज्ञापितं। ततो राजा अनलगिरिगजारूढो वीतभये समागत्य रात्रौ स्वर्णगुलिकां आकारयति स्म। दास्या च प्रोक्तं—"अहं प्रतिमां विना न

एष्यामि।" तत्र स्थाने च तत्सदृगिव संस्थाप्य ततस्तां अलात्वा परावृत्य उज्जयिन्यां गत्वा नवीनप्रतिमां लात्वा पुनः वीतभये गत्वा प्रतिमासहितां स्वर्णगुलिकां लात्वा प्रतिमास्थाने नवीनप्रतिमां स्थापयित्वा गत उज्जयिन्यां चण्डप्रद्योतनो राजा। ततः प्रभाते स्वकीयहस्तिनां त्रासात् मदगलनाच्च अनलगिरिसमारूढचण्डप्रद्योतनागमनं, प्रतिमापुष्पमालाम्लानतः, प्रतिमासहितदासीहरणं च ज्ञात्वा जातक्रोधो दशमुकुटबद्धराजाभिः सह लात्वा उज्जयिन्या अभिमुखं चचाल। उदायनो राजा आगतो जेसलमेरसमासन्नब्रह्मसरःस्थाने परं तत्र पानीयं न प्राप्यते। चिन्तातुरेण राज्ञा प्रभावती स्मृता, तया तत्र अक्षयं पानीयं कृतं, अद्यापि तत्र तथैव अस्ति १ एवं पुष्करस्थानेऽपि। उदायनसैन्यमागत्य उज्जयिनीसीम्नि पतितं। मार्गिता प्रतिमा, परं न ददाति स तां। ततः चण्डप्रद्योतनोऽपि चतुर्दशमुकुटबद्धराजपरिवृतः सर्वसैन्यं लात्वा आगत्य संमुखं स्थितः। अनलगिरिहस्तिनं विना युद्धं स्थापितं। कृते युद्धे भग्नश्चण्डप्रद्योतनः, ततो भ्रष्टप्रतिज्ञोऽनलगिरिहस्तिनं आरुह्य पुनः युध्यति स्म। तत उदायनराजेन पदातिना सता अनलगिरिं अधो गत्वा बाणैः विध्यते स्म। अनलगिरिणा उपरिष्टात् अधः क्षिप्तः, ततो जीवन् बद्धो निगडादिभिः ललाटे अक्षराणि लिखितानि—"मम दासीपतिः अयं" इति, दासी नष्टा। प्रतिमाग्रहणे देववाणी जाता—"मां अत्रैव रक्ष, मा वीतभये नय, तत्र धूलिकोट्टो भविष्यति।" ततो राज्ञा प्रतिमां तत्रैव मुक्त्वा, स्वयं तु चण्डप्रद्योतनं लात्वा चलितः, मार्गे श्रीपर्युषणापर्व समागतं। राजा तत्र तद्दिने स्थित्वा उपवासं चक्रे। सूपकारस्य च प्रोक्तं—"यत् रोचते तत्

चण्डप्रद्योतनरा[जे]जाय भोजनं दातव्यं।" राजा तु जिनप्रतिमापूजादि धर्मकृत्यं कर्तुं लग्नः। ततः सूपकारेण पृष्टः चण्डप्रद्योतनः-"का रुचिः अद्य भवतां?।" राज्ञा प्रोक्तं-"या उदायनराजस्य।" सूपकारेण प्रोक्तं-"अद्य तेषां उपवासः, श्रीपर्युषणापर्वत्वात् ते न भोक्ष्यन्ते।" ततः चण्डप्रद्योतनेन विचारितं-"अद्य पृथक् रसवतीकरणे विषप्रदानं भावि।" मरणभीत्या कथितं-"वयं अपि अद्य उपवासं करिष्यामः, वयमपि श्रीउदायनराजस्य साधर्मिकाः स्मः।" एतत् वचनं राज्ञा सूपकारमुखात् श्रुत्वा-"अहो! धूर्तसाधर्मिकोऽप्ययं साधर्मिकः। साधर्मिके च बद्धे न मम प्रतिक्रमणं शुध्यति" इति विचार्य चण्डप्रद्योतनं आहूय निगडादीनि बन्धनानि दूरीकृत्य ललाटे स्वर्णपट्टं बन्धयित्वा मुक्तश्चण्डप्रद्योतनः क्षामितश्च, सत्कृत्य मुक्तोऽवन्तीदेशे। उदायनराजवत् अन्येनापि क्षामणा कर्तव्या, क्रोधश्च मोच्यो यथा आराधकत्वं स्यात्॥

तथा अपराधं कृत्वा तस्मिन् अक्षामिते अनर्थपरम्परा स्यात् तत्रार्थे दृष्टान्तः, तथाहि—

एकस्मिन् ग्रामे कुम्भकारो भाण्डैः शकटं भृत्वा नगरमध्ये विक्रेतुं आगच्छति, ततः एकं वृषभं हर्तुं कृतमनस्कैः कैश्चिद् ग्रामीणपुरुषैः भणितं-"अहो! "एकवङ्गा गड्डी" एकेन बलीवर्देन गन्त्री याति।" लोकैः अपि श्रुतं। कुम्भकारेण अपि विचारितं-"नूनं एते दुष्टा मम एकं वृषभं हरिष्यन्ति, एते पश्यतोहराः, यतः सन्तमपि मम वृषभं असन्तं कुर्वन्ति।" ततः कुम्भकारो यावत् भाण्डविक्रयेण व्यग्रचित्तो जातः, तावत्तैः वृषभो हृतः व्यग्रचित्तः मम वृषभं अदृष्ट्वा 'बुम्बापातं' चक्रे-"अहो! मम द्वितीयो वृषभः केनापि हृतः।" लोका अपि

वदन्ति 'अस्माभिः श्रुतं आसीत् एकेन वृषभेन गन्त्री अभूत्।" ततो दुःखितो गतः स्वस्थानं, परं तेन कुम्भकारेण क्रोधेन सप्तवर्षाणि यावत् क्षेत्रखलानि धान्यसहितानि ज्वालितानि। ततो यक्षयात्रार्थं मिलिते लोके पटहघोषः कारितः–"अन्नं अस्माकं यो दहति स प्रकटीभवतु।" ततः स कुम्भकारो वेषविपर्ययं कृत्वा प्रोवाच–"एगबइल्ला गड्डी पासह तुम्हे वि डज्झइ खलाइ।" ततो लोकैः वृषभहरणकारणं ज्ञात्वा प्रोक्तं–"भो! दीयतां कुम्भकारस्य वृषभः, नो चेत् अन्यान्यपि सप्त वर्षाणि धान्यानि धक्ष्यति।" ततो दत्तो वृषभः, क्षामितः कुम्भकारः, तस्मात् पूर्वं अपराधो न कार्यः, कृते च क्षामणं श्रेयः, अन्यथा अनर्थपरंपरा स्यात् इति क्रोधोपरि कुम्भकारदृष्टान्तः॥

तथा अस्मिन् पर्वणि यः क्रोधं न मुञ्चति स सङ्घाद्बहिः कार्यः शटितनागवल्लीपत्रवत्। अत्रार्थे दृष्टान्तः–कोऽपि खेडवास्तव्यद्विजोऽभूत् तेन कृषिकर्म प्रारब्धं, बलीवर्दो दुर्बलो गलिर्न वहति तोत्रादिभिः कदर्थयितुं प्रारब्धः, तथापि न वहति, ततः तेनाऽतिक्रोधात्, मृत्पिण्डैः आहत्य आहत्य कुमरणेन मारितो गोहत्यापातकं लग्नं। महापुरुषपार्श्वे प्रायश्चित्तं पृष्टं–"दीयतां मम यथा शुद्धो भवामि।" तैः उक्तं–"कोपो गतः।" द्विजेनोक्तं–"एवं चेत् तं पश्यामि, तदा मृतं अपि मारयामि।" तदा तैः अपाङ्क्तेयः कृतः, अयोग्यत्वात्। एवं अनुपशान्तकोपः साधुरपि अपराधे जाते मृगावतीवत् मनःशुद्ध्या मिथ्या–दुष्कृतं देयं। तत्सम्बन्धलेशो यथा–एकदा श्रीमहावीरदेवः कौशाम्बीनगर्यां समवसृतः, तदा तत्र चन्द्रसूर्यौ स्वकीयमूलविमानेन वन्दितुं

समागतौ। तदा चन्दना-मृगावतीप्रमुखा अपि आसन्। चन्दना तु अस्तसमयं ज्ञात्वा तत उत्थाय स्वकीयोपाश्रये गता, मृगावती तु भगवद्दर्शनमोहिता स्थिता। ततः चन्द्रसूर्ययोः स्वस्थानं गतयोः अन्धकारः सर्वत्र प्रसृतः। ततो मृगावत्यपि चन्दनां अपश्यन्ती एकाकिनी भीता सती उपाश्रये समागता, ईर्यापथिकीं प्रतिक्रम्य शयनस्थां प्रवर्तिनीं चन्दनां प्रणम्य पादौ विश्रामयन्ती प्रोचे–"मम अपराधः क्षम्यतां।" चन्दनाऽपि तां प्रोचे–"हे भद्रे! उत्तमकुलोत्पन्ने! न युक्तं तव ईदृशं कर्तुं।" ततो मृगावती प्रोचे–"मया पापं कृतं, मिथ्या मे दुष्कृतं, अतः परं न ईदृशं कर्म करिष्यामि" इत्युक्त्वा पादयोः पपात। ततः चन्दनाया निद्रा समागता, मृगावत्यास्तु मनःशुद्ध्या मिथ्यादुष्कृतं ददत्या केवलज्ञानं समुत्पन्नं–"अन्धकारे घोरे सर्पं आगच्छन्तं ज्ञात्वा चन्दना हस्तं उत्क्षिप्य संस्तारके मुक्तः। ततः प्रबुद्धया चन्दनया प्रोक्तं–"किम्?" इति। मृगावत्योक्तं–"मा सर्पस्पर्शो भवतु" इति। चन्दनयोक्तं–"क सर्पः?।" मृगावत्योक्तं–"एष याति।" चन्दना प्राह–"अहं न पश्यामि, त्वं पश्यसि?, किं तव सातिशयं ज्ञानं?।" तयोक्तं–"ओम्" इति। "किं केवलज्ञानं?।" तयोक्तं–"एवं एव।" चन्दनाया अपि–"अहो! मया केवलिन्या आशातना कृता, अनित्यभावनां भावयन्त्याः केवलज्ञानं उत्पन्नं, एवं मिथ्यादुष्कृतं देयं। परं न कुम्भकार–क्षुल्लकयोः इव।" तत्सम्बन्धो यथा–कोऽपि शिष्यो लघुबालस्वभावेन चञ्चलत्वात् कुम्भकारभाण्डानि काणीकुर्वन् वारितोऽपि न तिष्ठति, उपालम्भे दत्ते मिथ्यादुष्कृतं ददाति। ततः कुम्भकारोऽपि कर्णयोः कर्करिकां क्षिप्त्वा भृशं निःपीड्य दुष्कृतं ददाति।

एवं प्रत्यहं कुम्भकार-क्षुल्लकौ एवमेव कुर्वाते, एवमेव मिथ्यादुष्कृतं ददाते। अनेन मिथ्यादुष्कृतदानेन काऽपि अर्थसिद्धिर्न। किं तर्हि कर्तव्यं?, इत्याह-श्वश्रूजामातृवत् 'अलियां-गलियां' इति कर्तव्यानि। तथा काचि-लोभिनी विधवा वृद्धा स्त्री आसीत्, तस्याश्च धनं प्रभूतं, पुत्रो नास्ति, परमेका पुत्री कुमारिका वर्तते, सा कस्यचित् कुलपुत्रकस्य परिणायिता। परं लोभित्वात् न जामातुः बहुतरं अधिकारापन्नं दत्तं, तेन रुष्टो जामाता। एवं होलिका-दीपालिका-दीवासादिसर्वपर्वसु न अत्याग्रहेण निमन्त्रितो, न जामाता श्वश्रूगृहे गतः। ततो लोकैः प्रोक्तं-"रे वृद्धे पापिणि लोभिनि! तव पुत्रप्रायो जामाता न तं भोजयसे?, धनेन किं करि-ष्यसि?।" ततो लोकादच्छुटितया जामाता भोजनाय निमन्त्रितः, प्रोक्तं च-"एकाकित्वेन आगन्तव्यं।" तस्य मित्रैः प्रोक्तं-"भो! अद्य तव श्वश्रूः सर्वं धनं दास्यति" इति। ततो जामाता गतः श्वश्रूगृहे भोक्तुं उपविष्टः, परिवेषिता क्षैरेयी, परं वाहडीनाले रूतपुम्भडकं क्षिप्तमस्ति, परिवेषणे वेला बह्वी लगति, अथ च घृतं स्तोकं निःसरति। सा तु खण्डानयनार्थं अपवरिकामध्ये गता, तदा जामात्रा श्वश्रूलक्षणानि जानता वाहडीनालात् रूतपुम्भडकं निष्कास्य, प्रच्छन्नतया दूरे निःक्षिप्तं। तया आगत्य वाहडीनालेन घृतं परिवेषितं। वाहडीनालं च वर्षति मेघे गृहप्रणालवत् जातं। तस्या उदरे ध्रसकः पतितो-"अहो! किं जातं?।" ततः तया खण्डपरिवेषानन्तरं प्रोक्तं-"हे जामातः! अद्य एकत्र जेमनेन रूसणकं भज्यते" इत्युक्त्वा भोज-नाय एकत्र तस्मिन्नेव स्थाले जामात्रा सह उपविष्टा। जामात्रा च स्थालकोणस्य ईषत् अधःकरणेन घृतं

श्वश्रू-जामातृ-दृष्टान्तः

आत्मसंमुखं कृतं। श्वश्रूजनेन—"अहो! गतं घृतं, किं करोमि?।" अतः तदानयनार्थं अपराधं अपराधं प्रति रेखां करोति क्षैरेयीमध्ये, वक्ति च—"अहो जामातः! तव एते अपराधाः—त्वं होलिकायां आकारितो नागतः, एवं दीपालिकायां, एवं दीवासापर्वणि, इति रेखां कृत्वा घृतं सर्वं अपकर्षितं आत्मसंमुखं आनीतं च। जामात्रा, विचारितं—"अहो! श्वश्रूजनेन बुद्ध्या उपायं कृत्वा घृतं सर्वं अपकर्षितं। अथ किं कर्तव्यं?।" ततो जामात्रा—"हे श्वश्रु! सर्वे अपराधा गताः, आवयोः मनोऽपि मिलितं, अथ सासू—जमाईवाला अलियां गलियां, कर्तव्यानि।" इत्युक्त्वा क्षैरेयी-घृत-खण्ड-भृतस्थालमध्ये हस्तं क्षिप्त्वा सर्वत्र भ्रामयित्वा त्रयमपि एकीकृत्य द्वाभ्यां भुक्तं, गतं रूसणकं। एवं धर्मार्थिभिः अपि कथञ्चित् रागद्वेषौ उत्पन्नौ तथापि तौ पर्वणि मुक्त्वा परस्परं शल्यं मुक्त्वा मनःशुद्ध्या मिलनीयं मिथ्यादुष्कृतं च देयं। एवं क्रोध १ मान २ माया ३ लोभो ४ परि पल्लीपति १ अगंकारिभट्टा २ ऐरावणीभूतपाण्डुभार्या ३ मथुरामङ्गु ४ प्रमुखाणां बहवो दृष्टान्ताः सन्ति, परं ग्रन्थविस्तरभिया न लिखिताः॥

तथा चतुर्मास्यां स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च विशेषतः क्रोधमानमायालोभैः आहारग्रहणं न युक्तं। तत्र श्रीमद्भद्रबाहुस्वामिकृतपिण्डनिर्युक्तिगतं सम्बन्धचतुष्टयं प्रोच्यते।

तत्र प्रथमं क्रोधपिण्डग्रहणोपरि घृतपूर–क्षपकदृष्टान्तो यथा—

हस्तिकल्पे नगरे एकः साधुः मासक्षपणपारणे भिक्षां हिण्डन् ब्राह्मणगृहे मृतकभक्तसङ्ख्यां प्रविष्टः। तत्र

ब्राह्मणानां घृतपूरा दीयन्ते, साधुः तत्र अनाद्रियमानः चिरं स्थितः, परं न कोऽपि साधवेऽदात्। ततो रुष्टः साधुः 'द्वितीयमृतकसङ्खड्यां दास्यते' इत्युक्त्वा गतः। "नाऽन्यथा ऋषिभाषितं" इति हेतोः द्वितीयो मृतः। तस्य सङ्खड्यां अपि गतः, परं न किमपि दत्तं। ततोऽतिकोपेन पुनः 'तृतीयमृतकसङ्खड्यां दास्यती'ति उक्त्वा गतः, तृतीयोऽपि मृतः पुनः साधुः गतः, परं न किमपि दत्तं, ततः अतिचण्डकोपेन पुनः अन्यमृतकसङ्खड्यां दास्यतीति वदन् केनापि स्थविरेण द्वारपालेन श्रुतः। ततः तेन स्वामिनः प्रोक्तं–"भो! अयं साधुः घृतपूरदानेन सुप्रसन्नः कार्यः, नो चेत् अन्येऽपि मरिष्यन्ति" इति। ततो गृहस्वामिना आकार्य घृतपूरैः साधुः प्रतिलाभितः। एवं यथा अनेन साधुना क्रोधेन घृतपूरा गृहीताः तथा अन्यैः न ग्राह्याः ॥ १ ॥

पुनः माने सेवइया साधुः, तथाहि–कोशलादेशे गिरिपुष्पकं नाम नगरं, तत्र "सेवइया"पर्वणि तरुणश्रमणानां एकेन साधुना प्रोक्तं–"भो! अद्य भिक्षावेलायां सर्वैः अपि सेवइयाभक्तं प्रचुरं लब्धं, तत्र का लब्धिः?, कथं अद्य "सेवइयापर्व" क्षणो वर्तते? परं स लब्धिपात्रं यः प्रभाते घृतखण्डसहितं सेवइयाभक्तं आनयति साधूनां च प्रतिलाभयति।" तदा एकेन चेल्लकेन अभिमानेन "अहं आनयिष्यामि" इति प्रतिज्ञां कृत्वा द्वितीयदिने बृहत्तराणि प्रभूतानि पात्रकाणि लात्वा गतः इभ्यगृहे, दृष्टाश्च तत्र तास्तादृशा, 'भापिता–गृहस्वामिनी देहि मे' तया लोभिन्या बाढं हक्कयित्वा निष्कासितो गृहात्। तेन चेल्लकेन अभिमानं कृत्वा प्रोक्तं–"पश्य त्वं, मया एता अवश्यं ग्रहीतव्या येन केन प्रकारेण।" तयाऽपि प्रोक्तं–"यदि त्वं एता गृह्णासि तदा मम

नासिकाग्रवर्तनं ज्ञेयं" इति। ततः साधुर्नि[र्गत्य]गतः, गच्छता च पृष्टं–"भो! इदं कस्य गृहं?, गृहस्वामी च कुत्र सांप्रतं वर्तते।" केनापि प्रोक्तं–"देवदत्तस्य गृहं, सोऽपि सभायां सांप्रतं वर्तते।" ततो गतः चेल्लकः सभायां पृष्टाः सभापुरुषाः–"भो! भवतां मध्ये देवदत्तः कः?।" तैः प्रोक्तं–"किं प्रयोजनं?।" चेल्लकेन प्रोक्तं–"तत्पार्श्वात् किमपि याचिष्ये।" तदा तैः भणितं–"किं तेन कृपणेन याचितेन?, वयं याचितव्याः यथा अर्थसिद्धिः भवेत्।" ततो देवदत्तेन भणितं–"यत् त्वं याचिष्यसे तत् अहं दास्यामि।" ततः साधुना सभासमक्षं प्रोक्तं–"भो देवदत्त! यदि त्वं एतेषां षण्णां स्त्रीवशवर्तिनां पुरुषाणां अन्यतमो न भवसि तदा याचे।" तैः भणितं–"के ते?।" चेल्लकेन भणितं–"श्वेताङ्गुलिः १ बकोड्डाही २ किङ्करः ३ तीर्थस्नातः ४ गृध्र-इव-रिङ्खी ५ हृदज्ञः ६। एते षट्पुरुषा अधमाः कथिताः।" तत्र श्वेताङ्गुलिसम्बन्धो यथा–एकेन निजभार्यावशवर्तिना कुलपुत्रकेन क्षुधातुरेण प्रभाते एवं भणितं–"हे भार्ये! अन्नपाकं कुरु, यदि तव रोचते येन अहं भुञ्जे।" ततः तया शय्यास्थितया एव भणितं–"यदि त्वं क्षुधितोऽसि तदा चुल्हीतो रक्षां निष्कास्य बहिर्निक्षिप, इन्धनं आनय, अग्निं प्रज्वालय, चुल्हीमस्तके हण्डिकां स्थापय, तन्मध्ये पानीयं क्षिप। पुनः कोष्ठकात् आनीय तण्डुलान् प्रक्षिप, ततोऽन्नपाकं कृत्वा मम कथय, येनाहं उत्थाय तवान्नं परिवेषयामि।" तेन प्रोक्तं–"हे प्रिये! यत् त्वया आज्ञप्तं तत् प्रमाणं।" ततः तथैव सर्वमकरोत्, तत एवं प्रत्यहं तस्य कुर्वतः–प्रभाते चुल्हीतो रक्षां बहिर्निक्षिपतो रक्षया कृत्वा अङ्गुलयः श्वेता दृश्यन्ते, तेन लोकेन "श्वेताङ्गुलिः" इति तस्य नाम दत्तं।

चेल्लको वक्ति–“भो देवदत्त! त्वमपि यदि एतत्सदृशोऽसि तदा न प्रार्थयामि, अन्यथा प्रार्थयामि।” देवदत्तेन प्रोक्तं–“न भवामि एतादृशः १॥” ततः पार्श्ववर्तितरुणपुरुषैः प्रोक्तं–“बकोड्डाही कोऽभूत्?, तत्सम्बन्धं ब्रूहि।” चेल्लकः प्राह–“श्रूयतां–एकः कोऽपि कुलपुत्रकः स्त्रीवशवर्ती आसीत्। शय्यासुप्तया स्त्रिया भणितं–“अहं पानीयं न आनयिष्यामि, त्वं उत्तिष्ठ, प्रतिदिनं सरोवरात् पानीयं आनय।” तेन अत्यन्तप्रेमपरवशेन अङ्गीकृतं। परं दिवसे लज्जमानो रात्रिपश्चिमप्रहरे सर्वलोकेभ्यः पूर्वं घटं मस्तके स्थापयित्वा पानीयार्थं सरोवरे याति। तत्र बकान् स्वेच्छया स्थितान् उड्डयति। प्रत्यहं एवं बकान् उड्डयतो दृष्ट्वा लोकैः “बकोड्डाही” इति नाम भणितं। तत् त्वमपि एतादृशो भवसि, तदा न याचे।” देवदत्तेनोक्तं–“नहि नहि।” पुनः तरुणैः उक्तं–“वद वद किङ्करः कः?।” चेल्लकः प्राह–“एकः कुलपुत्रकः, परं स्त्रीवशवर्ती अत्यन्तप्रेमानुरक्तः, प्रभाते एव शयनतः उत्थाय अञ्जलिं योजयित्वा आदेशं याचते–“हे प्रियतमे! वद किं करोमि।” तया भणितं–पानीयं कूपत आनय।” आनीतं, पुनः भणितं–“अथ किं करोमि?।” तया भणितं–“तन्दुलान् खण्डय।” खण्डिताः, पुनः भणितं–“किं करोमि?।” तया भणितं–“सर्वं अन्नपाकं कुरु।” कृतः, पुनः भणितं–“किं करोमि?।” तया भणितं–“आसनं मण्डय।” मण्डितं, पुनः भणितं–“किं करोमि?।” तया भणितं–“मां बाहुं गृहीत्वा आसने उपवेशय।” उपवेशिता, पुनः भणितं–“किं करोमि?।” तया भणितं–“रसवतीं परिवेषय।” परिवेषिता, पुनः भणितं–“किं करोमि?।” तया भणितं–यावत्कालं भुञ्जे तावत्कालं मक्षिकारक्षणं

कुरु।" कृतं, पुनः भणितं"–"किं करोमि?।" तया भणितं–"मम मलमूत्रमल्लके परिष्ठापय।" परिष्ठापितं, पुनः भणितं–"किं करोमि?।" तया भणितं–"अहं शये, त्वं मम पादौ विश्रामय" इति। एतादृशो भवसि तदा न याचे।" तेनोक्तं–"नाहं एतादृशः, यत् त्वं याचिष्यसे तत् दास्यामि॥" एवं अन्यत् सम्बन्धत्रयं श्रीपिण्डविशुद्धिवृहट्टीकातो ज्ञेयं। ततः सभातरुणैः प्रोक्तं–"भो चेल्लक! स्त्रीवशवर्तिनो दोषाः सर्वेऽपि अस्मिन् देवदत्ते वर्तन्ते। इति उपहासे कृते देवदत्तः प्राह–"भो भगवन्! मा एतेषां वचनं शृणु, याचस्व यत् ते रोचते"। चेल्लकेन भणितं–"देहि मे घृतखण्डसहिताः श्वेतवर्तिकाः।" ततो "ददामि" इत्युक्त्वा तं साधुं गृहीत्वा गृहाय चलितः। गृहद्वाराऽगमने चेल्लकेन भणितं–"भो! तव भार्यया समं मम क्लेशो जातोऽस्ति पूर्वं। तेन विचारय।" तेन देवदत्तेन प्रोक्तं–"भो! त्वं बहिरेव तिष्ठ, अहं गृहमध्ये गत्वा सुसज्जं कृत्वा आकारयामि, तदा आगच्छेः।" तथैव कृत्वा गृहमध्ये गत्वा पृष्टा भार्या–"अद्य ये ब्राह्मणा निमन्त्रिताः सन्ति तान् समाकारयामि, जाता भोजनसामग्री?।" तया प्रोक्तं–"ओम्" इति। देवदत्तेन ज्ञातं–"अस्यां सत्यां न दातुं शक्नोमि" इति प्रोक्तं, "निश्रेण्यां चटित्वा उपरिष्टात् घृतगुडादि प्रचुरं आनय।" सा चटिता उपरि, आकारितः साधुः। तेन साधुना उक्तं–"भो देवदत्त! इमां निश्रेणीं दूरे कुरु, यथा स्वेच्छया निश्चिन्तो विहरामि।" तेन तथा कृते साधुना स्वेच्छया घृतगुडसहिताः अदिताः श्वेतवर्तिकाः। सा उपरिस्था पश्यति, दुःखं करोति, कोलाहलं करोति, परं न किमपि कर्तुं शक्नोति। साधुरपि ताभिः पात्राणि भृत्वा निःसृतो, निर्गच्छन्

च तस्याः संमुखं विलोक्य नासिकाया उपरि अङ्गुलिभ्रामणं चक्रे। ज्ञापितं च-"तव नक्रकर्तनं जातमस्ति।" तत उपाश्रये समागत्य सर्वे साधवो भोजिताः। एवं एतद्वत् मानपिण्डो न ग्राह्यः॥ २॥ मायायां आषाढभूति-दृष्टान्तः, स तु प्रसिद्धत्वात् न लिखितः॥ ३॥ लोभे सिंहकेसरिकसाधुदृष्टान्तो यथा-चम्पानगर्यां उत्सवदिने पारणायां एकेन क्षपकसाधुना अभिग्रहो गृहीतः-"मया अद्य सिंहकेसरिकमोदका ग्रहीतव्याः।" ततः प्रतिगृहं भ्रमतः तस्य मोदकान् न कोऽपि ददाति, अन्यत्तु न लाति। ततः तस्य अलभमानस्य संक्लिष्टपरिणामेन चित्तं नष्टं। ततः प्रतिगृहं धर्मलाभं भणन् अर्धरात्रौ गतः कस्यचित् श्रावकस्य गृहे, तेन गम्भीरेण मातृ-पितृसमानेन धर्मलाभश्रवणात् ज्ञातं-"कोऽपि कर्मवशगः साधुः (इति)।" तेन उत्थाय वन्दितः। प्रोक्तं च-"भगवन्! किं विलोक्यते?।" तेनोक्तं-"सिंहकेसरिकमोदकाः।" तेनोक्तं-"गृहाण बहवः सन्ति निर्दोषाः।" ततः तेन दत्ताः, तेन गृहीताश्च, साधोः मनसि स्वास्थ्यं जातं। ततः श्रावकेण पृष्टं-"भगवन्! मया पुरि-मार्धप्रत्याख्यानं कृतमासीत् तत् पूर्णं न वा?।" मुनिना उपयोगदानेन गगनं दृष्टं-"आकाशे निर्मलास्तारा" इति नक्षत्रश्रेणिशोभितं चन्द्रमण्डलं विलोक्य प्रत्यागतचेतनो-"हा! मया किं कृतं?, को ममाचारः?" इति पश्चात्तापं कुर्वन् निवृत्तो नगरात् सूत्रोक्तविधिना मोदकान् परिष्ठापयन्-"अहो! कर्माणि दुर्जयानि!, अहो! कर्मणां परिपाकः!, हा! मया दुष्टं कृतं!" इत्यादि पश्चात्तापपूर्वं शुभध्यानेन केवलज्ञानं प्राप। अत्राऽयं भावो यथा-अनेन लोभेन सिंहकेसरिका मोदका गृहीताः, तथा अन्येन न ग्राह्याः। एवं अत्र अनेके दृष्टान्ताः

न्ति, परं अस्माभिः कियन्तो लिखिताः, अन्ये दृष्टान्ताः अन्यैः अन्यशास्त्रेभ्यो ज्ञेया वाच्याश्च ॥
इति चतुर्विंशतितमा सामाचारी ॥ २४ ॥

अथ उपाश्रयाधिकाररूपां पञ्चविंशतितमां सामाचारीं आह—

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा तओ उवस्सया गिण्हित्तए, तं जहा—वेउव्विया पडिलेहा २ साइज्जिया पमज्जणा ३ ॥ ६० ॥ (२५)

व्याख्या—"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च त्रय उपाश्रया वर्षासु ग्रहीतुं उपकल्पन्ते। संसक्ति–जलप्लावनादिदोषभयात् "तं" इति पदं तत्रार्थे संभाव्यते। "विउव्विया पडिलेहा" क्वचित् "वेउट्टिआ पडिलेहा" इति दृश्यते, उभयत्रापि पुनः पुनः इत्यर्थः। "साइज्जिआ पमज्जणा" इति। आर्षे "जे भिक्खू हत्थकम्मं करेइ करंतं वा साइज्जति" इति वचनात्। "साइज्जि" धातुः आस्वादने वर्तते, तत उपभुज्यमानो य उपाश्रयः स "कयमाणे कडे" इति न्यायात् "साइज्जिउ त्ति" भण्यते, तत्संबन्धिनी प्रमार्जना 'साइज्जिआ'। यस्मिन् उपाश्रये साधवः स्थिताः सन्ति तं उपाश्रयं प्रातः प्रमार्जयन्ति १ पुनः भिक्षां गतेषु साधुषु २ पुनः मध्यान्हे ३ पुनः प्रतिलेखनाकाले तृतीयप्रहरान्ते ४ इति वारचतुष्टयं प्रमार्जयन्ति वर्षासु, ऋतुबद्धे तु त्रिवारं। अयं च विधिः असंसक्ते, संसक्ते तु पुनः पुनः प्रमार्जयन्ति। शेषोपाश्रयद्वयं

प्रतिदिनं प्रतिलेखितं प्रत्यवेक्षन्ते, मा कोऽपि तत्र स्थास्यति, ममत्वं वा करिष्यतीति, तृतीयदिवसे पादप्रोञ्छनकेन प्रमार्जयन्ति, अत उक्तं "वेउव्विया पडिलेह त्ति" दृश्यते, तत्रापि प्रतिलेखना-प्रमार्जनयोः ऐक्यविवक्षया स एवार्थः। अत्रेदं रहस्यं-उपाश्रयाः त्रयः प्रोक्ताः, तत्र एक उपभुज्यमानः। कोऽर्थः?। यत्र साधवः स्थिताः सन्ति १, द्वौ उपाश्रयौ अन्यौ तौ प्रतिदिनं दृशा विलोकनीयौ। तृतीयदिने तु प्रमार्जनीयौ, तेषां नाम सूत्रमध्ये नास्ति, सूत्रमध्ये तु तेषां क्रिया प्रोक्ताऽस्ति ॥ इति पञ्चविंशतितमा सामाचारी ॥ २५ ॥

अथ गोचरचर्यादिगमने दिग्ज्ञापनाधिकाररूपां षड्विंशतितमां सामाचारीं आह—

वासावासं पज्जोसवियाणं निग्गंथाण वा निग्गंथीण वा कप्पइ अण्णयरिं दिसिं वा अणुदिसिं वा अवगिज्झिय भत्तपाणं गवेसित्तए। से किमाहु भंते!?, उस्सण्णं समणा भगवंतो वासासु तवसंपउत्ता भवंति, तवस्सी दुब्बले किलंते मुच्छिज्ज वा पवडिज्ज वा, तमेव दिसं वा अणुदिसं वा समणा भगवंतो पडिजागरंति ॥ ६१ ॥ (२६)

व्याख्या-"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च अन्यतमां दिशं पूर्वादिकां अनुदिशं-विदिशं आग्नेय्यादिकां अवगृह्य-अवगृह्य उद्दिश्य-उद्दिश्य अहं अमुकां दिशं अनुदिशं वा यास्यामि इति, अन्यसाधुभ्यः कथयित्वा वा भक्तपानं गवेषयितुं-विहर्तुं कल्पते। "से किमाहु भंते त्ति"। किमत्र

कारणं भदंत ! ? तत्र आचार्य आह–"ओसन्नेणं त्ति" प्रायेण श्रमणा भगवन्तो वर्षासु तपःसंप्रयुक्ताः भवन्ति प्रागश्चित्तवहनार्थं संयमार्थं स्निग्धकाले मोहजयार्थं वा षष्ठादितपश्चारिणो भवन्ति। ते च तपस्विनो दुर्बलाः अपमेव कृशाङ्गाः अत एव क्रान्ताः सन्तो मूर्च्छे[ये]युः वा प्रपतेयुर्वा। तत्र मूर्च्छा=इन्द्रियमनोवैकल्यं। प्रपतनं दौर्बल्यात् प्रस्खल्य भूमौ पतनं। तामेव दिशं अनुदिशं वा श्रमणा भगवन्तः प्रतिजाग्रति–प्रतिचरन्ति गवेषयन्ति। अयं भावार्थः–भक्तार्थं ग्रामादौ यस्यां दिशि विदिशि वा गच्छेयुः तां गुर्वादिभ्यः कथयित्वा गच्छन्ति, येन तेषां तत्र गतानां तपःक्रमादिमूर्च्छितानां प्रपतितानां वा पाश्चात्याः साधवः तस्यां दिशि विदिशि वा अन्वेत्य सारां कुर्वन्ति। अकथयित्वा अनुगतानां दिगपरिज्ञानात् कथं ते सारां कुर्युः॥ इति षड्विंशतितमा सामाचारी॥ २६॥

अथ ग्लानादिकार्यं गत्वा पुनरागमनाधिकाररूपां सप्तविंशतितमसामाचारीं आह—

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा गिलाणहेउं जाव चत्तारि पंच जोयणाइं गंतुं पडिनियत्तए, अंतराऽवि से कप्पइ वत्थए, नो से कप्पइ तं रयणिं तत्थेव उवायणावित्तए॥ ६२॥ (२७)

व्याख्या–"वासावासं" वर्षाकाले स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां च वर्षाकल्पौषधवैद्यार्थं ग्लानसारा-

करणार्थं वा यावत् चत्वारि पञ्च वा योजनानि गत्वा प्रतिनिवर्तेत, तत्प्राप्तौ तदैव व्याघुट्येत, नतु यत्र लब्धं तत्रैव वसेत, स्वस्थानं प्राप्तुं अक्षमश्चेत् तदा अन्तरापि वसेत्, न तु तत्रैव वसेत्। एवं हि वीर्याचारो हि आराधितो भवति। यत्र दिने वर्षाकल्पादि लब्धं तद्दिनरात्रिं तत्रैव न अतिक्रमेत्। यस्यां वेलायां लब्धं तस्यामेव वेलायां ततो निर्गत्य बहिः तिष्ठेत्, कारणे तु तादृशि तत्रापि वसेत् इति हृदयं ॥ इति सप्तविंशतितमा सामाचारी ॥ २७ ॥

अथ सामाचारीपालनस्य फलरूपां अष्टाविंशतितमसामाचारीं प्राह—

इच्चेइयं संवच्छरिअं थेरकप्पं अहासुत्तं अहाकप्पं अहामग्गं अहातच्चं सम्मं काएण फासित्ता पालित्ता सोभित्ता तीरित्ता किट्टित्ता आराहित्ता आणाए अणुपालित्ता अत्थेगइआ समणा निग्गंथा तेणेव भवग्गहणेणं सिज्झंति बुज्झंति मुच्चंति परिनिव्वाइंति सव्वदुक्खाणमंतं करिंति, अत्थेगइया दुच्चेणं भवग्गहणेणं सिज्झंति बुज्झंति मुच्चंति परिनिव्वाइंति सव्वदुक्खाणमंतं करिंति, अत्थेगइया तच्चेणं भवग्गहणेणं सिज्झंति बुज्झंति मुच्चंति परिनिव्वाइंति सव्वदुक्खाणमंतं करिंति, सत्तट्ठ भवग्गहणाइं पुण नाइक्कमंति ॥ ६३ ॥ (२८)

व्याख्या-"इगेइअं संवच्छरिअं त्ति" इतिः-उपदर्शने । एवं पूर्वोक्तं सांवत्सरिकं-वर्षारात्रिकं स्थविरकल्पं यद्यपि किंचित् जिनकल्पिकानां अपि सामान्यं तथापि भूम्ना स्थविराणां एव अत्र सामाचारीस्थविरकल्पमर्यादां यथा सूत्रेण भणितं न सूत्रव्यपेतं, तथा कुर्वतः कल्पो भवति। अन्यथा तु अकल्प इति यथाकल्पं १ एवं कुर्वतश्च ज्ञानादित्रयलक्षणो मार्ग इति यथामार्ग २ याथातथ्यं यथैव समुपदिष्टं भगवद्भिः ३ यथासम्यक यथास्थितं ४ "काएण त्ति" उपलक्षणत्वात् कायवाङ्मनोभिः। अथवा कायशब्देनैव योगत्रयं व्याख्यायते, तथाहि-कायेन=शरीरेण "कै गै रै शब्दे" कायते=उच्चार्यते अनेन कायो=वचनं तेन, कं=ज्ञानं तदेव आत्मा=स्वरूपं यस्य तत् कात्मनः बुद्ध्यात्मकत्वात् मनसः तेन ततश्च कायवाङ्मनोभिः इत्यर्थः । स्पृष्ट्वा=आसेव्य पालयित्वा-अतिचारेभ्यो रक्षित्वा, शोधयित्वा दोषदूरीकरणात् शोभयित्वा विधिवत्करणेन, तीरयित्वा-यावज्जीवं आराध्य यावज्जीवं आराधनेन अन्तं नीत्वा वा, कीर्तयित्वा अन्येभ्यः उपदिश्य न तु विराध्य यथावत् करणात्, आज्ञया भगवदुपदेशेन अनुपाल्य पूर्वैः पालितात् पश्चात् पालनेन तस्यैव पालितस्य फलं आह-"अत्थेगइया त्ति" सन्ति एके ये अत्युत्तमतया तत्पालनतया तस्मिन्नेव भवग्रहणे-भवे सिद्ध्यन्ति-निष्ठितार्था भवन्ति। बुद्ध्यन्ते=केवलज्ञानेन, मुच्यन्ते भवोपग्राहिकर्मांशेभ्यः, परिनिर्वान्ति-कर्मकृतसकलसन्तापविरहात् शीतीभवन्ति। किमुक्तं भवति?। सर्वदुःखानां=शारीरमानसानां अन्तं=विनाशं कुर्वन्ति, उत्तमतया अनुपालनया द्वितीये भवे, मध्यमया तृतीयभवे, जघन्ययापि अनुपालनया सप्त अष्टौ वा भवग्रहणानि

न अतिक्रामन्ति। अयमर्थः–सन्देहविषौषध्यां १ श्रीभगवतीवृत्तौ २ कल्पकिरणावल्यां ३ लिखितोऽस्ति ॥ इति अष्टाविंशतितमा सामाचारी ॥ २८ ॥

अथ न चैतत् स्वबुद्ध्या उच्यते, किंतु श्रीभगवदुपदेशपारतन्त्र्येण इत्याह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे रायगिहे नगरे गुणसिलए चेइए बहूणं समणाणं बहूणं समणीणं बहूणं सावयाणं बहूणं सावियाणं बहूणं देवाणं बहूणं देवीणं मज्झगए चेव एवमाइक्खइ, एवं भासइ, एवं पण्णवेइ, एवं परूवेइ, पज्जोसवणाकप्पो नामं अज्झयणं सअट्ठं सहेउअं सकारणं ससुत्तं सअट्ठं सउभयं सवागरणं भुज्जो भुज्जो उवदंसेइत्ति बेमि ॥ ६४ ॥ (ग्रं० १२१५)

॥ इति पज्जोसवणाकप्पो नाम दसासुअक्खंधस्स अट्ठमं अज्झयणं सम्मत्तं ॥

व्याख्या–"तेणं कालेणं तेणं समएणं" तस्मिन् काले चतुर्थारकप्रान्ते तस्मिन् समये श्रमणो भगवान् महावीरः राजगृहे नगरे गुणसिले चैत्ये, बहूनां श्रमणानां बहूनां श्रमणीनां बहूनां श्रावकाणां बहूनां श्राविकाणां

बहूनां देवानां बहूनां देवीनां च मध्यगतः 'चेव त्ति' अवधारणे मध्यगत एव, न पुनः एकान्ते अनेन उद्घाट्यशिरा इति उक्तः, एवं आख्याति यथोक्तं कथयति १ एवं भाषते वाग्योगेन २ एवं प्रज्ञापयति अनुपालितस्य फलं ज्ञापयति ३ एवं प्ररूपयति दर्पणतल इव प्रतिरूपं, श्रोतॄणां हृदये प्रतिरूपं सङ्क्रामयति ४ इदानीं आख्येयस्य नामधेयमाह-पर्युषणाकल्पं नामाध्ययनं भूयो भूयो=वारं वारं विस्मरणशीलश्रोतॄणां अनुग्रहणार्थं उपदर्शयति अनेकशः प्रदर्शयति। किंविशिष्टं पर्युषणाकल्पाध्ययनं?। सार्थं=प्रयोजनयुक्तं, न पुनः अन्तर्गडुकण्टकशाखामर्दनवद् अभिधेयशून्यं तथाविधवर्णानुपूर्वीमात्रवद्धं १ सहेतुकं, हेतुः=दोषदर्शनं-अननुपालयतोऽमी दोषा इति। यद्वा "सवीसइराए मासे वइक्कंते" इत्युक्ते को हेतुः?। "पाएणं अगारीणं अगाराइं" इत्यादिकः। सकारणं कारणं=अपवादो यथा-"आरेणा वि कप्पइ पज्जोसवित्तए" तेन सहितं, सकारणं ससूत्रं सार्थं सोभयमिति पदत्रयं प्रतीतं। अर्थसार्थकत्वं कथं अध्ययनस्य?। नहि अत्र टीकादौ इव अर्थः पृथक् पृथग् व्याख्यातोऽस्ति। सत्यं, सूत्रस्य अर्थेन अन्तरीयकत्वाद् अदोषः। तथा सव्याकरणं पृष्टापृष्टार्थकथनं व्याकरणं तत्सहितमिति "इति बेमि त्ति" इति ब्रवीमि इति श्रीभद्रबाहुस्वामी स्वशिष्यान् प्रति ब्रूते-न इदं स्वमनीषिकया ब्रवीमि, किंतु तीर्थङ्करगणधरोपदेशेन इति, इतः स्वरात् 'तस्येश्च द्विः' इति सूत्रेण इलोपे तकारस्य च द्वित्वे "उवदंसे त्ति" रूपं। पज्जोसवणाकप्पो सम्मत्तो त्ति" पर्युषणाकल्पः समाप्त इति, पर्युषणावर्षासु एकक्षेत्रनिवासः तस्य संबन्धी कल्पः सामाचारी साधून् प्रतीत्य विधिप्रतिषेधरूपा कर्तव्या इति, तदभिधेययोगात् अध्ययन-

मपि पर्युषणाकल्पः रत्नपरीक्षा–गजशिक्षादिवत्, स च श्रीदशाश्रुतस्कन्धादिसिद्धान्तस्य अध्ययनं अष्टमं समाप्तं समर्थितं इति ॥



॥ इति सामाचारीव्याख्यानम् ॥

व्याख्यानं कल्पसूत्रस्य नवमं सुगमं स्फुटम् । शिष्यार्थं पाठकाश्चक्रुः श्रीमत्समयसुन्दराः ॥ १ ॥

इति श्रीकल्पसूत्रस्य नवमं व्याख्यानं श्रीसमयसुन्दरोपाध्यायविरचितं सम्पूर्णम् ॥

# अथ टीकाकार–प्रशस्तिः ।

श्रीशासनाधीश्वरवर्धमानो, गुणैरनन्तैरतिवर्धमानः ।
यदीयतीर्थं ख-ख-खा-ऽज-नेत्र, ( २१००० ) वर्षाणि यावद्विजयि प्रसिद्धम् ॥ १ ॥
तदीयशिष्यो गणभृच्च पञ्चमः, सुधर्मनामाऽस्य परंपरायाम् ।
बभूव शाखा किल वज्रनाम्नी, चान्द्रं कुलं चन्द्रकलेव निर्मलम् ॥ २ ॥
तद्गच्छे त्वभिधानतः 'खरतरे' यैः 'स्तम्भना'धीश्वरो, भूमध्यात् प्रकटीकृतः पुनरपि स्नानोदकाद्दुग्गता ।
स्थानाङ्गादि[नि]नवाङ्गसूत्रविवृतिर्नव्याऽतिभव्या कृता, श्रीमन्तोऽभयदेवसूरिगुरवो जाता जगद्विश्रुताः ॥३॥
यो योगिनीभ्यो जगृहे ददौ च, वरान् वरान् जाग्रदनेकविद्यः ।
पञ्चापि पीरान् स्ववशीचकार, युगप्रधानो जिनदत्तसूरिः ॥ ४ ॥
पुनरपि तस्मिन् गच्छे बभूव जिनकुशलनामसूरिवरः । यस्य स्तूपनिवेशाः सुयशः पुञ्जा इवाभान्ति ॥५॥

तत्पट्टानुक्रमतः, श्रीमज्जिनचन्द्रसूरिनामानः। जाता युगप्रधानाः, दिल्लीपतिपातिसाहिकृताः ॥ ६ ॥
अकबररञ्जनपूर्वं द्वादशसूबेसु सर्वदेशेषु। स्फुटतरममारिपटहः, प्रवादितो यैश्च सूरिवरैः ॥ ७ ॥
यद्वारे किल कर्मचन्द्रसचिवः श्राद्धोऽभवद्दीप्तिमान्, येन श्रीगुरुराजनन्दिमहसि द्रव्यव्ययो निर्ममे।
कोटेः पादयुजः शराग्निसमये दुर्भिक्षवेलाकुले, सत्राकारविधानतो बहुजनाः सञ्जीविता येन च ॥ ८ ॥
यद्वारे पुनरत्र सोमजि-शिवाश्राद्धौ जगद्विश्रुतौ, याभ्यां राणपुरस्य रैवतगिरेः श्रीअर्बुदस्य स्फुटम्।
गौडिश्रीशत्रुञ्जयस्य च महान् सङ्घोऽनघः कारितो, गच्छे लम्भनिका कृता प्रतिपुरं रुक्मार्धमेकं पुनः ॥ ९ ॥
तेषां श्रीजिनचन्द्राणां, शिष्यः प्रथमतोऽभवत्। गणिः सकलचन्द्राख्यो, 'रीहडा'न्वयभूषणम् ॥ १० ॥
तच्छिष्यसमयसुन्दर-सदुपाध्यायैर्विनिर्मिताध्यायैः। कल्पलतानामाऽयं, ग्रन्थश्चक्रे प्रयत्नेन ॥ ११ ॥
प्रक्रियाहैमभाष्यादि-पाठकैश्च विशोधिता। हर्षनन्दनवादीन्द्रैः-चिन्तामणिविशारदैः ॥ १२ ॥
क्वचित् सूत्रवृत्त्योरनाबोधितो वा, क्वचित् सूत्रपाठान्तरभ्रान्तिमत्त्वात्।
क्वचिद्बुद्धिमान्द्याज्जिनाज्ञाविरुद्धं, मया वाचि मिथ्याऽस्तु तद्दुःकृतं मे ॥ १३ ॥
विषमं संस्कृतं भङ्क्त्वा, सुगमं च मया कृतम्। सर्वत्र न कृतः सन्धिः, तत्सर्वं सुखबोधये ॥ १४ ॥
सभासमक्षं व्याख्यानं, कल्पसूत्रस्य दुष्करम्। केषाञ्चिदल्पबुद्धीनां, बहूपायप्रलोकनात् ॥ १५ ॥

कृत्वा तदनुक्रमणां तां, मया कल्पलता कृता । सुगमा तत एतस्यां, एकस्यामेव कथ्यताम् ॥ १६ ॥
लूणकर्णसरे ग्रामे, प्रारब्धा कर्तुमादरात् । वर्षमध्ये कृता पूर्णा, मया चैषा रिणीपुरे ॥ १७ ॥
राज्ये श्रीजिनराजसूरिसुगुरोर्बुद्ध्या जितः स्वर्गुरो,–र्यद् भाग्यं भुवि लोकविस्मयकरं सौभाग्यमत्यद्भुतम् ।
कीर्त्तिस्तु प्रसरीसरीति जगति प्रौढप्रतापोदया–दा[ता]ज्ञात्युग्रतमा कृपातनुभृतां दारिद्र्यदुःखापहा ॥ १८ ॥
श्रीमद्भानवडे च पुण्डरगिरौ श्रीमेडतायां पुनः, श्रीपल्लीनगरे च लोद्रनगरे प्रौढा प्रतिष्ठा कृता ।
द्रव्यं भूरितरं व्ययीकृतमहो श्राद्धैर्महत्युत्सवे, राजन्ते जिनराजसूरिगुरवस्ते साम्प्रतं भूतले ॥ १९ ॥
गुरुराजे जिनसागर-सूरिवरे विजयिनि प्रकृतिसौम्ये । यत्सौभाग्ययशोभि–र्धवलीकृतभूतलं भाति ॥ २० ॥
तद्गुरूणां प्रसादेन, मया कल्पलता कृता । कल्पसूत्रमिदं यावत्, तावत् नन्दतु साऽपि हि ॥ २१ ॥

सर्वग्रन्थाग्रं ७७०० ॥ श्रीः ॥

इति श्रीसमयसुन्दरोपाध्यायविरचिता कल्पलतानाम्नी कल्पसूत्रटीका संपूर्णा ॥

॥ इति श्रीकल्पसूत्रं समाप्तम् ॥

सं० ९९३ वर्षे श्रीविक्रमसंवत्सराच्च सं० ५२३ वर्षे जातः, येन श्रीवीरवाक्यात् पर्युषणापर्व भाद्रपदसुदिपञ्चमीतः चतुर्थ्यामानीतं ॥ ३ ॥ एवं श्रीकालिकाचार्याः त्रयः पृथक् पृथक् जाताः, परं नामसादृश्यात् द्वयोः अग्रे तयोः कालिकाचार्ययोः एकीभूतैव संलग्ना कथा कथ्यते । अतो अत्र पूर्वं गर्दभिल्लोच्छेदक—श्रीकालिकाचार्यसम्बन्धः कथ्यते—

अस्मिन् जंबूद्वीपे भरतक्षेत्रे धारावासं नाम नगरं अभूत् । परं तत् नगरं कीदृशं अस्ति? । यस्मिन् नगरे अङ्गदेश—वङ्गदेश-तिलङ्गदेश-कलिङ्गदेश-वराङ्गदेश-प्रयागदेश-सुयागदेश-मुरण्डदेश-पुलिन्ददेश-सुरेन्द्रदेश-समुद्रदेश-चित्रकूटदेश-लाटदेश-धाटदेश-नाटदेश-विराटदेश-केलिवाटदेश-भाटदेश-वाटदेश-कुण्टदेश-बुंटदेश-घोडादेश-घाटदेश-मेदपाटदेश-मगधदेश-सोरठदेश-कच्छदेश-गुर्जरदेश-मालवदेश-काश्मीरदेश-कावलिदेश-भुटंतदेश-बदकसांनदेश-बंगालदेश-कोंकणदेश-पंचभर्तृदेश-श्रीराज्यदेश-परतकालदेश-हबसीदेश-फिरङ्गीदेश-पठाणदेश-जलमानसदेश-मरुस्थलदेश-पंचालदेश-सिन्धुदेश-दक्षिणदेश-पूर्वदेश-पश्चिमदेश-उत्तरदेश ( ५२ ) प्रमुखनानादेशवास्तव्यव्यवहारिणो विविधवस्तुक्रयाणकानि लात्वा आगत्य च व्यापारं कुर्वन्ति । पुनरिदं नगरं अष्टाविंशत् ( २८ ) वकारैः शोभितं वर्तते । ते चामी—"**वापी १ वप्र २ विहार ३ वर्ण ४ वनिता ५ वाग्मी ६ वनं ७ वाटिका ८ वैद्य ९ ब्राह्मण १० वेश्य ११ वादि १२ विबुध १३ वेश्या १४ वणिक् १५ वाहिनी १६ विद्या १७ वीर १८ विवेक १९ वित्त २० विनयो २१ वाचंयमः २२ वल्लिकाः २३ वस्त्रं २४ वारण २५ वाजि २६ वेसर २७ वरं २८ वैभिः पुरं शोभितं ॥ १ ॥**" पुनः यस्मिन् नगरे एवंविधा स्थितिः—"यस्यां देवगृहेषु दण्डघटना १ स्नेहक्षयो दीपकेष्वन्त-र्जाङ्गुलिकालयं द्विरसना खङ्गेषु मुष्टिर्यथा ३ । वादस्तर्कविचारणासु ४ विपणिश्रेणीषु मानस्थितिः ५, बन्धः कुन्तलवल्लरीषु ६ सततं लोकेषु नो दृश्यते ॥ १ ॥" इत्यादिऋद्धिसमृद्धिसहितं सुरलोकसदृशं (नगरं) ज्ञेयं ॥ अथ तस्मिन् धारावासानामनगरे वज्रसिंहनामा राजा राज्यं प्रतिपाल-

मति । एवं स राजा कीदृशोऽस्ति ? । गम्भीरगिरिकान्तप्रतापीक-साहसिक-अनेकदेशनायक-न्यायसत्यान्यायक-अमोघसायक-पुरोगासमानपायक
[illegible]दीप्यमानमूर्ति-[illegible]प्रताप-अमृतसममधुरालाप-साक्षात्कन्दर्पावतार-याचकजनाधार-दुष्टनिग्राहक-शिष्टजनप्रतिपालक-न्यायनीतिपथा-
[illegible]निधान-[illegible]-परनारीसहोदर-रूपपुरंदर-परदुःखभंजन-सबलशत्रुगंजन-यानकाळनिकलंक-निराकृततातक-
[illegible]-पीतज्ञानगुरु-जगडीगमराय-सुवर्णवर्णकाय-पातलओ कडिनउ लांक, नही कोई वाक, हृदये श्रीवत्सप्रत्यं-
[illegible] गाधात् चक्र एवंविधो राजा वज्रसिंहः । अथ तस्य राज्ञः सुरसुन्दरी इति नाम्नी पट्टराज्ञी वर्तते ।
एवं सा कीदृशी अस्ति ? । सर्व अन्तेउरमाहि प्रधान, सर्वगुणनिधान, भर्तारनी भक्त, धर्मनइ विषइ रक्त, राजानइ प्रेमपात्र, सुंदरगात्र शीलगुण-
[illegible] कमलनेत्र पुण्यक्षेत्र जेहनी मीठी वाणी सगली जाणी रूपवंतमांहे वखाणी घणुं स्युं इंद्राणी पिणि जे आगइ
[illegible] पाणी, वली जेहनइ अनेक अंगजो लगू तागीन ऊपरि वारवर्तइ छइ, कुण कुण कस्तूरी १ कपूरी २ जवाधि ३ मलयागिरी ४
[illegible] ५ पद्मावती ६ चन्द्रावती ७ चंद्राउलि ८ चापू ९ सांपू १० सरस्वति ११ गोमति १२ गंगाधरी १३ दीवाधरी १४ रामगिरी
१५ हंसली १६ सुली १७ हरिबोली १८ प्रमुखाः । अथ तस्या सुरसुन्दर्याः शुभस्वप्नसूचितः कालकुमारः पुत्रो जातः, सरस्वतीनाम्नी एका
पुत्री च । एवं स कुमारः कीदृशोऽस्ति ? । महारूपवान् सर्वपुरुषलक्षणशोभितः सर्वजनवल्लभो विशेषतो मातापित्रोः जीवत्प्राणो महासौभाग्यवान्
मातृपितृभिः पाल्यमानः चन्द्रकलेव वर्धमानो अष्टवार्षिको जातः । तस्मिन् समये मातापितृभ्यां विचारितं—"माता वैरी पिता शत्रु–र्बालो
येन न पाठितः । न शोभते सभामध्ये, हंसमध्ये बको यथा ॥ १ ॥" पुनरपि "पुत्रोऽतिमूर्खो विधवा च कन्या, शठं च मित्रं
चपलं कलत्रं । विलासकाले न दरिद्रता च, विनाग्निना पञ्च दहन्ति देहं ॥ २ ॥" पुनरपि ज्ञानेन विना मानवः पशुरेव, यतः—

उपाध्यायश्रीसमयसुन्दरगणिकृता—

# श्रीकालिकाचार्यकथा ॥



प्रणम्य श्रीगुरुं गद्य–पद्यवार्ताभिरद्भुतं । कालिकाचार्यसम्बन्धं, वक्ष्येऽहं शिष्यहेतवे ॥ १ ॥

अत्र पूर्वं स्थविरावली व्याख्याता, तत्र श्रीकालिकाचार्योऽपि महाप्रभावकः स्थविरो बभूव, तेन तस्यापि सम्बन्धः कथ्यते—

तत्र कालिकाचार्याः त्रयः स्थविरा जाताः । तन्मध्ये एकः श्रीकालिकाचार्यः श्रीमहावीरदेवनिर्वाणात् सं० ३७६ वर्षे श्रीश्यामाचार्यनामा श्रीप्रज्ञापनाकर्त्ता पूर्वविदां वंशे श्रीसौधर्मस्वामितः आरभ्य त्रयोविंशतितमः पुरुषो जातः । येन ब्राह्मणीभूतसौधर्मेन्द्राग्रे निगोदविचारः कथितः । अत्र केचित् वदन्ति–"सिरिवीरजिणंदाओ तिन्निसए वरिसवीसवोलीणे । कालयसूरी जाओ, सक्को पडिबोहिओ जेण ॥ १ ॥" इति गाथादर्शनात् । ३२० वर्षे निगोदविचारकथकः श्रीकालिकाचार्यो जातः ॥ केचित् वदन्ति–"तिसय–पणवीस इंदो, चउसयतिपन्न सरस्सईगहिया । नवसय तिनवइ वीरा, चउत्थिए जो कालगायरिया ॥ १ ॥" इति निर्मूलप्रायगाथादर्शनात् ३२५ वर्षे जातः ॥ केचित् वदन्ति–चतुर्थ्यां पर्युषणापर्वप्रवर्तक एव निगोदविचारव्याख्याता, यथाश्रुतं बहुश्रुता विदन्तीति ॥ १ ॥ द्वितीयस्तु कालिकाचार्यः श्रीवीरनिर्वाणात् सं० ४५३ वर्षे सरस्वतीभ्राता गर्दभिल्लोच्छेदकः बलमित्र–भानुमित्रनृपयोश्च मातुलो जातः । कुत्रापि तुर्यः चतुर्थ्यां पर्युषणापर्वकर्त्ता कालिकाचार्यः स तयोर्मातुलः प्रोक्तोऽस्ति, यत् अस्ति तत् प्रमाणं ॥ २ ॥ तृतीयस्तु श्रीकालिकाचार्यः श्रीवीरनिर्वाणात्

सं० ९९३ वर्षे श्रीविक्रमसंवत्सराच्च सं० ५२३ वर्षे जातः, येन श्रीवीरवाक्यात् पर्युषणापर्व भाद्रपदसुदिपञ्चमीतः चतुर्थ्यामानीतं ॥ ३ ॥ एवं श्रीकालिकाचार्याः त्रयः पृथक् पृथक् जाताः, परं नामसादृश्यात् द्वयोः अग्रे तयोः कालिकाचार्ययोः एकीभूतैव संलग्ना कथा कथ्यते । अतो अत्र पूर्वं गर्दभिल्लोच्छेदक—श्रीकालिकाचार्यसम्बन्धः कथ्यते—

अस्मिन् जंबूद्वीपे भरतक्षेत्रे धारावासं नाम नगरं अभूत् । परं तत् नगरं कीदृशं अस्ति? । यस्मिन् नगरे अङ्गदेश—वङ्गदेश-तिलङ्गदेश-कलिङ्गदेश-वराङ्गदेश-प्रयागदेश-सुयागदेश-मुरण्डदेश-पुलिन्ददेश-सुरेन्द्रदेश-समुद्रदेश-चित्रकूटदेश-लाटदेश-घाटदेश-नाटदेश-विराटदेश-केलिवाटदेश-भाटदेश-वाटदेश-कुण्टदेश-बुंटदेश-घोडादेश-घाटदेश-मेदपाटदेश-मगधदेश-सोरठदेश-कच्छदेश-गुर्जरदेश-मालवदेश-काश्मीरदेश-कावलिदेश-भुटंतदेश-बदकसांनदेश-बंगालदेश-कोंकणदेश-पंचभर्तृदेश-श्रीराज्यदेश-परतकालदेश-हबसीदेश-फिरङ्गीदेश-पठाणदेश-जलमानसदेश-मरुस्थलदेश-पंचालदेश-सिन्धुदेश-दक्षिणदेश-पूर्वदेश-पश्चिमदेश-उत्तरदेश ( ५२ ) प्रमुखनानादेशवास्तव्यव्यवहारिणो विविधवस्तुक्रयाणकानि लात्वा आगत्य च व्यापारं कुर्वन्ति । पुनरिदं नगरं अष्टाविंशत् ( २८ ) वकारैः शोभितं वर्तते । ते चामी—"**वापी १ वप्र २ विहार ३ वर्ण ४ वनिता ५ वाग्मी ६ वनं ७ वाटिका ८ वैद्य ९ ब्राह्मण १० वेश्य ११ वादि १२ विबुध १३ वेश्या १४ वणिक् १५ वाहिनी १६ विद्या १७ वीर १८ विवेक १९ वित्त २० विनयो २१ वाचंयमः २२ वल्लिकाः २३ वस्त्रं २४ वारण २५ वाजि २६ वेसर २७ वरं २८ वैर्भिः पुरं शोभितं ॥ १ ॥**" पुनः यस्मिन् नगरे एवंविधा स्थितिः—"यस्यां देवगृहेषु दण्डघटना १ स्नेहक्षयो दीपकेष्वन्त-र्जाङ्गुलिकालयं द्विरसना खड्गेषु मुष्टिर्यथा ३ । वादस्तर्कविचारणासु ४ विपणिश्रेणीषु मानस्थितिः ५, बन्धः कुन्तलवल्लरीषु ६ सततं लोकेषु नो दृश्यते ॥ १ ॥" इत्यादिऋद्धिसमृद्धिसहितं सुरलोकसदृशं (नगरं) ज्ञेयं ॥ अथ तस्मिन् धारावासानामनगरे वज्रसिंहनामा राजा राज्यं प्रतिपाल-

वर्त्ति । एवं स राजा कीदृशोऽस्ति ? । शूरवीरनिक्रान्तप्रतापार्क-साहसिक-अनेकदेशनायक-न्यायसत्याख्यायक-अमोघसायक-पुरोगासमानपराक्र-
मी-[illegible]-दुष्टनिग्राहक-शिष्टजनप्रतिपालक-न्यायनीतिमार्ग-
[illegible]-परनारीसहोदर-रूपपुरंदर-परदुःखभंजन-सबलशत्रुगंजन-वानकाछनिकलंक-निराकृतातङ्क-
[illegible]-उगटीरोमराय-सुवर्णवर्णकाय-पातलओ कडिनउ लंक, नही कोई वांक, इस्यो श्रीवत्सअत्यं-
[illegible] साक्षात् शक्र एवंविधो राजा वज्रसिंहः । अथ तस्य राज्ञः सुरसुन्दरी इति नाम्नी पट्टराज्ञी वर्तते ।
[illegible] सा कीदृशी अस्ति ? । सर्वे अनेडरमाहि प्रधान, सर्वगुणनिधान, भर्तारनी भक्त, धर्मनइ विषइ रक्त, राजानइ प्रेमपात्र, सुंदरगात्र शीलगुण-
[illegible], कमलनेत्र पुण्यक्षेत्र जेहनी गीठी वाणी सगली जाणी रूपवंतमांहे वखाणी घणुं स्युं इंद्राणी पिणि जे आगइ
[illegible], अनेक अंगओ लगू दातीन ऊपरि वारवर्तइ छइ, कुण कुण कस्तूरी १ कपूरी २ जवाधि ३ मलयागिरी ४
[illegible] ५ पद्मावती ६ चन्द्रावती ७ चंद्राउलि ८ चांपू ९ सांपू १० सरस्वति ११ गोमति १२ गंगाधरी १३ दीवाधरी १४ रामगिरी
१५ [illegible] १६ [illegible] १७ हरिबोली १८ प्रमुखाः । अथ तस्या सुरसुन्दर्याः शुभस्वप्नसूचितः कालकुमारः पुत्रो जातः, सरस्वतीनाम्नी एका
पुत्री च । एवं स कुमारः कीदृशोऽस्ति ? । महारूपवान् सर्वपुरुषलक्षणशोभितः सर्वजनवल्लभो विशेषतो मातापित्रोः जीवप्राणौ महासौभाग्यवान्
मातृपितृभिः पाल्यमानः चन्द्रकला [illegible] वर्धमानो अष्टवार्षिको जातः । तस्मिन् समये मातापितृभ्यां विचारितं—"माता वैरी पिता शत्रु—र्बालो
येन न पाठितः । न शोभते सभामध्ये, हंसमध्ये बको यथा ॥ १ ॥" पुनरपि "पुत्रोऽतिमूर्खो विधवा च कन्या, शठं च मित्रं
चपलं कलत्रं । विलासकाले च दरिद्रता च, विनाऽग्निना पञ्च दहन्ति देहं ॥ २ ॥" पुनरपि ज्ञानेन विना मानवः पशुरेव, ततः—

"आहार–निद्रा–भय–मैथुनानि, सामान्यमेतत् पशुभिर्नराणां । ज्ञानं विशेषः खलु मानवानां, ज्ञानेन हीना पशवो मनुष्याः ॥ ३ ॥" ततः कलाचार्यसमीपे कलाग्रहणार्थं मुक्तः । कुमारोऽपि स्तोककालेन (७२) द्वासप्ततिकला जग्राह । तत्रापि विशेषतो अश्वपरीक्षायां वाणकलायां च निपुणो जातः । अथ कालिककुमारः सर्वविद्यावान् विनयवान् मातृपितृभक्तः अत्यन्तस्नेहवत्या निजभगिन्या सरस्वत्या युक्तः सन् सुखेन कुमारपदवीं भुञ्जन् आस्ते । अथाऽन्यदा श्रीवज्रसिंहराजः छत्रं धारयन् चामरैः वीज्यमानः सभामण्डपमागत्य सिंहासने उपविष्टः । तत्र कीदृशी सभा निविष्टाऽस्ति ? । यथा–अनेकगणनायक-दण्डनायक-मण्डलीक-महामण्डलीक-सामन्त-महासामन्त-चउरासीआ-मुहता-मुगटवर्धकसंधिपाल-दूतपाल-सइगरणा-वइगरणा-देवगरणा-यमगरणा-संधिविग्रही-परविग्रही-सेठ-सेनापति-सार्थवाह-व्यवहारिया-अंगरक्षक-पुरोहित-वृत्तिनायक-भारवाहक-थईयायत-पडुपडियायत-टाकटमाली-इंद्रजाली-फूलमाली-मंत्रवादी तन्त्रवादी-यन्त्रवादी-धर्मवादी ज्योतिर्वादी-धनुर्वादी-दण्डधर खड्गधर-धनुर्धर-छत्रधर-चामरधर-दीवाधर पुस्तकधर-प्रतीहार-खवरदार गजपाल-अश्वपाल-अङ्गमर्दक-आरक्षक-साचाबोला-मीठाबोला-कथाबोला-गुणबोला-समस्याबोला-साहित्यबन्धक-लक्षणबन्धक-छन्दबन्धक-अलङ्कारबन्धक-नाटकबन्धक-गीतबन्धक-इत्यादिवर्णकविराजिता । तदवसरे राज्ञः खुरासाणदेशात् अनेके अश्वा प्राभृते कृते आगताः । परं कीदृशाः सन्ति ? । वर्णतः केऽपि नीलडा-पीलडा-कंबोजडा-रातडा-सबजिया अबजिया-किवलीया-धवलिया-किहाडा-किरडीया-हरणिया-मेपवरणिया-कालुया-घूसरा-हांसला लक्षणतोऽपि एवंविधाः–"**निर्मांसं मुखमण्डले परिमितं मध्ये लघु कर्णयोः, स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे । पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे, राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः** ॥ १ ॥" इत्यादि । ततो राज्ञा कालिककुमारस्य कथितं–"अहो कुमार ! वहिर्गत्वा एतेषां तुरङ्गमाणां परीक्षा क्रियतां ।" ततः कुमारः तथेति प्रतिपद्य हृष्टः सन् सदृशवयस्क-सेवकपञ्चशतीयुतं तरलतरं तुरङ्गममेकं

भाग्य श्रीगमने गमाम । परं तत् वनं कीदृशमस्ति ? । अंब-निम्ब-केलि-कंकेलि-वल्लि-कणवीर-करीर-कुरबक-आमलक-केतकी-केवडा-कोविसार कचनारि कच्छार कडउ कंदूरी कर्मदा किंशुक ककच काकोदुम्बरि कर्कन्धू करञ्ज कपिकच्छू कमल कैरव कुवलय कोकनद कुरुविन्द करणा करमा अशोक आंबिली अंकोल अगर तगर अरडूसउ अर्जुन अखरोट एरंड उंबर अरणी साग नाग पुंनाग नारिंग पाडल पारिजात बोर लिंब जंबीरी नारंगी फोग गेजड वणसडा ताल तमाल सदाफल नागरवेलि वालउवेडलि जाइ जूही दमणउ मरूयउ मोगरउ मचकुंद ग्रांरड प्रमुखनानाविधवृक्षालीविराजितं । तस्मिन् वने बहुवेलां अश्ववाहनिकां कृत्वा, श्रमातुरः सन् कुमारः सपरिवारः सहकारतरोः छायायां मुक्तवान् ऊर्ध्वं विश्राम । तस्मिन् प्रस्तावे तत्र वने अनेकसाधुपरिवारवृताः श्रीगुणाकरसूरयो यथार्थनामानः समवसृताः सन्ति । परं ते कीदृशाः सन्ति ? । पडिरूवो तेयस्सिणो जुगप्पहाणागमो महुरवक्को गंभीरो धीइमंतो उवएसपरो अपरिस्साविणो सोमपइगणो ॥ संगहसीलो अविकत्थणो अमायिणो अचवलो पसंतहियया संतिजुया मद्दवजुया अज्जवजुया मुत्तिजुया तवस्सिणो ॥ संजमपालगा सच्चजुया सोयजुया वाक्कुशला संवेगरासिणो अणिगाइदुवालसभावणाभावगा एवं ३६ षट्त्रिंशत्सूरिगुणैः शोभमानाः । पुनः कीदृशास्ते ? । जियकोहा जियमाणा जियमाया जियलोहा जियपरीसहा जियभया जियनिद्दा जियविगहा संसारपारगामिणो परमसंविग्गा संसारभवउव्विग्गा सुयसायरा करुणानिहिणो सव्वजीवानुकंपिणो दीहदंसिणो कुत्तिसंबला सपुण्णनुयबला निम्ममा निब्भमा निरहंकारा निव्विकारा मिच्छित्ततिमिरनासगा निरवज्जवासगा सुसमाहियगा गच्छनायगा किं बहुना सर्वसाधुगुणसम्पूर्णाः । तेषां मेघगर्जितगम्भीरव्याख्यानध्वनिं श्रुत्वा कुमारः केकीव हर्षितः सञ्जातविस्मयः " अहो ! कः देवेन गुरुणा विना धर्ममाख्याति ?, तत्र गत्वा श्रूयते तदा चारु ।" ततो जातविवेकातिरेकः समुत्थाय तत्र गत्वा सूरिगुरुं विनयेन नत्वा उचितस्थाने समुपविष्टः । राजपुत्रा विनयं कुर्वन्त्येव, यतः उक्तं–"विनयं राजपुत्रेभ्यः, पण्डितेभ्यः सुभाषितं । अनृतं द्यूत-

कारेभ्यः, स्त्रीभ्यः शिक्षेत कैतवं ॥ १ ॥" अथ च समृद्धःपुमान् विनयं कुर्वन् मृष्टं लगति, यदुक्तं–"**पाई पढइ पढाई वखाणइ रूपवंतनइ गाई जाणइ। रिद्धिवंतनइ विनय पउट्टइ सक्करिसत्थे घेवर लुट्टइ ॥ १ ॥**" ततः श्रीसूरिभिः धर्मोपदेशः प्रारब्धो यथा–"अहो कुमार! इयं राज्यलक्ष्मीः चञ्चला दृश्यते, यदि न त्यज्यते तदा आरम्भपापपङ्कमग्नत्वेन दुर्गतौ गम्यते। यदुक्तं–"**गयकन्नचंचलाए, अपरिचत्ताइं रायलच्छीए। जीवासकम्मकलिमलभरियभरातो पडंति अहे ॥ १ ॥**" पुनरपि बुद्धिमतो मनुष्यस्य बुद्धेः तदेव फलं यत् पुण्यपापादौ तत्त्व विचारणा क्रियते, यत आह–"**बुद्धेः फलं तत्त्वविचारणं च, देहस्य सारं व्रतधारणं च। अर्थस्य सारं किल पात्रदानं, वाचः फलं प्रीतिकरं नराणां ॥ १ ॥**" पुनरपि शरीरादि सर्वं अनित्यं ज्ञात्वा विवेकिना दीर्घदर्शिना मनुष्येण धर्मस्यैव सङ्ग्रहः कर्तव्यः। यत् उक्तं–"**अनित्यानि शरीराणि, विभवो नैव शाश्वतः। नित्यं संनिहितो मृत्युः, कर्तव्यो धर्मसङ्ग्रहः ॥ १ ॥**" तथा धर्मस्यापि पण्डितेन सुवर्णस्येव परीक्षा कार्या। यत् अवादि–"**यथा चतुर्भिः कनकं परीक्ष्यते, निघर्षण–च्छेदन–ताप–ताडनैः। तथैव धर्मो विदुषा परीक्ष्यते, श्रुतेन शीलेन तपो–दयागुणैः ॥१॥**" तत्रापि "विंशतिविशोपकदयामयो जरामरणादिच्छेदकः चक्रवर्तितोऽप्यधिकसुखस्वरूपः संसारसमुद्रतारकः अजरामरशाश्वतसुखदायकः पञ्चमहाव्रतरूपो यतिधर्म एव सर्वधर्मोत्तमः," एवं श्रीगुरुवचनश्रवणात् संसारस्याऽसारतां ज्ञात्वा सञ्जातवैराग्यो भाग्यवान् श्रीकालिककुमारः प्रतिबुद्धः सन् करद्वयं संयोज्य विज्ञपयति स–"हे भगवन्! हे परोपकारवन्! भवद्वचनेन अहं प्रतिबुद्धोऽस्मि, अथ यावन्निजगृहे गत्वा मातापित्रोः अनुमतिं लात्वा युष्मत्समीपे नाऽयामि [न आगमिष्यामि] तावत् श्रीगुरुभिरत्रैव वने स्थातव्यं" इति प्रतिज्ञाय स्वगृहे गत्वा मातापित्रोः उवाच–"मया गुरुदेशनया संसारोऽसारो ज्ञातः, अहं दीक्षां लास्यामि, ममाऽऽदेशं दत्त।" ततो मातापितरौ तद्दुःखेन मोहेन च मूर्च्छामापतुः। पुनः व्यजनादिवातोपचारैः लब्धचेतनौ एवमूचतुः–"रे पुत्र! त्वं बालोऽसि, यौवनाव-

ग्योऽसि, सुकुमारोऽसि, भागभोगार्होऽसि, ततो राज्यधुराङ्गीकरणेन पूरय मातापित्रोर्मनोरथान्। पुनः परिणतवयस्को दीक्षां गृहीया, परं नास्मिन् दीक्षाग्रहणं नेव, पुनः संयममार्गोऽतिदुःकरोऽस्ति, तत्र यावज्जीवं अस्नानता १ भूमिशयनं २ लोचकरणं ३ देहस्य अप्रतिकर्मता ४ गुरुकुलवासेन गुरुशिक्षायां स्थातव्यं ५ क्षुधादि (२२) द्वाविंशत् परीषहाः सोढव्याः ६ देवाद्युपसर्गे न अक्षोभ्यता ७ लब्धालब्धे समभावना ८ अष्टादशसहस्रशीलाङ्गरथधारिता ९ बाहुभ्यां समुद्रतरणं १० तीक्ष्णखड्गधारोपरि चलनं ११ ज्वलदग्निज्वाला पादाभ्यां विध्यापयितव्या १२ निःस्वादवालुकाया कवलभरणं १३ गङ्गाप्रतिस्रोतसा गन्तव्यं १४ तुलायां मेरुः तोलयितव्यः १५ एकाकिना कर्मारिमहाबलं जेतव्यं १६ राधायन्त्रपुत्रिका वेधयितव्या १७ त्रिभुवनजयपताका गृहीतव्याः १८ इत्यादि।" एवं दुःकरतायां दर्शितायामपि कुमारः प्रवर्धमानवैराग्यः प्राह–"हे मातापितरौ ! एषा या दीक्षायां दुःकरता सा सत्या, तथैव परं कातराणां कापुरुषाणां ज्ञेया, न शूरवीराणां सत्पुरुषाणां, सोऽहं अवश्यं दीक्षां ग्रहीष्यामि, ममाऽऽदेशं दत्त। या वार्ताकरणेऽपि क्षणवेला याति सा ममायुर्मध्ये त्रुटति, अकृतार्थता च याति।" ततो मातृपितृभ्यां 'याता [यान्] म्रियमाणश्च न केनापि रोद्धुं शक्यते' इति विचार्य अनुमतिर्दत्ता। ततः श्रीकालिककुमारेण कृतपितृमहामहोत्सवेन महताऽऽडम्बरेण निजानेकरूपजगतीसहितेन सद्गुणपुरुषवाहिनीं शिबिकां आरुह्य गीतगानतानमानदानसन्मानवाद्यनिर्घोषपूर्वं अपूर्वरीत्या वने गत्वा गुरोः समीपे दीक्षां जगृहे। सरस्वत्यपि तद्भगिनी भ्रातृस्नेहातिरेकात् पृष्ठे दीक्षां जग्राह। मातापितरौ अपि "हे पुत्र ! एषा तव भगिन्यस्ति, अस्या रक्षा कार्या।" इति शिक्षां दत्त्वा विमनस्कौ सन्तौ स्वगृहे गतौ। अथ श्रीकालिककुमारमुनिः स्तोककालेन सुबुद्धित्वात् गुरोः सकाशात् व्याकरण १ तर्क २ छन्दो ३ ऽलङ्कार ४ काव्य ५ नाटक ६ नाटक ७ ज्योतिष ८ वैद्यक ९ नैमित्तिक १० मन्त्र ११ तन्त्र १२ यन्त्र १३ अङ्ग १४ उपाङ्ग १५ छेदग्रन्थ १० पइन्ना ४ मूलसूत्र नन्दी १ अनुयोगद्वार २ एवं (४५) पञ्चचत्वारिंशत् आगमाः तथा

सूत्र-निर्युक्ति-भाष्य-चूर्णि-वृत्ति-प्रकरणादि स्वसमय-परसमय-समस्तशास्त्रपारगामी जातः। ततो गुरुभिः योग्यतां ज्ञात्वा आचार्यपदे स्थापितश्च। अथ श्रीकालिकाचार्याः अनेकसाधुपरिवृताः ग्रामानुग्रामं विहरन्तो भव्यजीवान् प्रतिबोधयन्तो मालवकदेशे श्रीउज्जयिन्यां पुर्यां बहिः उद्यानवने समवसृताः। सर्वेऽपि लोका वन्दनार्थं तत्र यान्ति। धर्मं च सदा शृण्वन्ति। सरस्वती साध्वी अपि अनेकसाध्वीपरिवारपरिवृता उज्जयिन्यां श्राविकापार्श्वे उपाश्रयं मार्गयित्वा स्थिताऽस्ति। अथाऽन्यदा सरस्वती साध्व्यपि निजभ्रातरं कालिकाचार्यं वन्दित्वा यावत् निजोपाश्रयं आगच्छति वर्त्मनि तावत् उज्जयिनीनगरीस्वामिना गर्दभिल्लेन सा दृष्टा, चिन्तितं च तेन–"एषा का? एतादृशी सरूपा किं देवी वा? किं विद्याधरी वा? अथवा किन्नरी वा?" इति संदेहेन निजपार्श्ववर्तिसेवकाः पृष्टाः। तैः उक्तं–"हे महाराज! एषा वज्रसिंहराज्ञः पुत्री सरस्वतीनाम्नी कुमारिका सती निजभ्रातृस्नेहातिरेकात् साध्वी जाता।" ततो गर्दभिल्लेन विचारितं–"अहो! अनया तपसा कायः शोषितः, तथापि सुरूपत्वं न याति, यतः–'काली तउही कस्तूरी, थोडी तउही तेजन तूरी। सूकी तउही वेउल सिरी, तुटी तउही मोती सिरी। भागउ तउही वराह, तूटउ तउही साह। निबलउ तउही गह, निर्गुण तउही नाह। चूरउ तउही साकर, निबलउ तउही ठाकुर। तपाव्यो तउही कांचण, घसउ तउही चंदण। लहुडउ तउही सीह, धुंधलउ तउ दीह। नान्ही तउही नागिणी, निरसी तउही सोहागणी।' ततो यदि एतां इतोऽपहृत्य ममाऽन्तःपुरे मुञ्चामि, स्नानमज्जनादि सम्यक् उपचरामि, मनोज्ञाहारादिना पोषयामि, तदा मम स्त्रीरत्नं भविष्यति। एतां विना च मम राज्यश्रीरपि निष्फला, मम जीवितं च वृथा ज्ञेयं" इत्येवं तां कामग्रहग्रस्तेन गर्दभिल्लेन श्येनेन चटकेव निजसेवकपार्श्वात् नानाविधं विलपन्तीं उत्पाटयित्वा निजान्तःपुरे क्षिप्ता। विलपस्त्वेवं–"हे बान्धव! हे सुगुरो! हे अनेकगुणप्रधान! हे चतुरबुद्धिनिधान! हे जिनशासननायक! हे भव्यजीवसुखदायक! हे जिनशासनशृङ्गार! हे गच्छाधार! हे आगमस्य आकर! हे करुणासागर! हे भ्रातः! हे श्रीकालिकाचार्य! गर्दभिल्लेन राज्ञा

पापिष्ठेन शीलखण्डनेच्छानिष्ठेन मम सर्वथाप्यनिष्टेन मां अनाथां इव अपहरन्तीं रक्ष रक्ष" इति । तदा अन्या अपि साध्व्यः पूत्कारं चक्रुः । श्राद्धा अपि हाहाकारं वितेनिरे । ततो महाकोलाहलो जातः । ततः शीघ्रं साध्वीभिः सर्वोऽपि वृत्तान्तः श्रीकालिकाचार्यस्य निवेदितः—"भवदीय-भगिनी सरस्वती साध्वी गर्दभिल्लेनाऽपहृत्य निजान्तःपुरे क्षिप्ताऽस्ति । न ज्ञायते अथ किं भविष्यति! ।" ततः श्रीकालिकाचार्याः कोपाक्रान्ताः कतिपयशिष्यैः सहिताः राजपार्श्वे जग्मुः । सौम्यशीतलन्यायवचनैः प्रोक्तं—"हे राजन्! एषा साध्वी मम भगिनी, तत्रापि शीलवती, तत्रापि पञ्चमहाव्रतधारिणी, एतस्या वैमनस्यकरणे महाकर्मबन्धो भविष्यति । अपि च अन्योऽपि नगरमध्ये दुष्टमतिः दुःशीलश्च भविष्यति, स तव निग्राह्यो भविष्यति, परं यदि त्वमेव अन्यायं करिष्यसि तदा तव निवारकः को भविता? अपि च यत्र नगरे राजैव चौरो अन्यायी च तत्र लोका नगरं मुक्त्वा वनमेव भजन्ति । यदुक्तं—"यत्राऽस्ति राजा स्वयमेव चौरो, भाण्डीवहो यत्र पुरोहितश्च । वनं भजध्वं ननु नागरा लोकाः!, यतः शरणात् भयमत्र जातं ॥ १ ॥" इति । पुनः कालिकाचार्यैः प्रोक्तं—"हे राजन्! अन्तःपुरे बह्व्यो रूपवत्यश्चातुर्यकलावत्यो युवत्यो स्वकीयाः सन्ति, तासां उपरि संतोषं कुरु, परं माऽनया अस्थिमात्रया मलमलिनगात्र्या अतिजीर्णवस्त्रया साध्व्या समं किं सुखं अनुभविष्यसि? यतो गुरूणां पार्श्वे धर्मशालायां गत्वा एषा संयमं पालयिष्यति ।" एतादृशानि श्रीकालिकाचार्यवचनानि श्रुत्वा गर्दभिल्लो मौनं आधाय, श्रुतमपि अश्रुतमिव कृत्वा स्थितः समुत्थाय चान्तःपुरे गतः । ततः श्रीकालिकाचार्यैश्चिन्तितं—"अथ कोऽपि नवीनः उपायः क्रियते ।" ततः श्रीकालिकाचार्याः उपाश्रयमागत्य सङ्घाग्रे सर्वस्वरूपं प्रोक्तवन्तः । ततः श्रीसङ्घेन चिन्तितं—"आचार्यवचनं न मानितं, परं असद्वचनं मानयिष्यति ।" ततः सङ्घः महाजनं लात्वा, सङ्घोऽपि भूपाग्रे गतः । राज्ञा च पृष्टं—"कथं भो! महाजनैः समागतं?, किं कार्यं? ।" सङ्घेनोक्तं—"हे राजन्! त्वं [illegible], तव ईदृशं कुकर्म कर्तुं न युक्तं, यतो राजा पितेव प्रजाः प्रतिपालयति, विशेषतो दर्शनिनां तपस्विनां वर्गं, ततो मुञ्च इमां

साध्वीं" इत्यादि बहुतरं प्रोक्तं । परं स कुकर्मा कामी राजा न मुञ्चति । ततः सङ्घेन यथागतेन तथाऽऽगतेन श्रीसूरीणां प्रोक्तं । ततः श्रीकालिकाचार्येण कोपाक्रान्तेन सङ्घाग्रे प्रोक्तं–"अहं समर्थः सन् जिनशासनप्रत्यनीकानां यदि शिक्षां न दद्मि तदा जिनाज्ञाविरोधकत्वेन दुर्गतिकः स्यां । यदुक्तं–'ये प्रत्यनीका जिनशासनस्य, सङ्घस्य ये चाशुभवर्णवाचः । **उपेक्षकोड्डाहकरा धरायां, तेषामहं यामि गतिं सदैव ॥ १ ॥**" ततः प्रतिज्ञां चक्रे–"यदाऽहं गर्दभिल्लं सराज्यं न उन्मूलयामि तदाऽहं न कालिकाचार्यः ।" ततः स्वगच्छभारं गीतार्थेषु स्थापयित्वा स्वयमग्रथिलोऽपि ग्रथिलीभूय कर्दमादिना गात्रं अनुलिम्पन्, नगरमध्ये भ्रमन्, वक्ति–"यदि गर्दभिल्लो राजा, ततः किं?, यदि तस्य नगरं महत्; तर्हि किं?, यदि गर्दभिल्लस्य अन्तःपुरस्त्रियो बह्व्यः, ततः किं?, यदि राज्ञः भाण्डागार-कोष्ठागार-हस्ति-तुरङ्गम-रथ-पदातयो बहवः, ततः किं?, यदि राजा प्राज्यं साम्राज्यं भुनक्ति, तदा मम किं? ।" इत्येवं प्रलपन्तं प्रतिमार्गं प्रतिगृहं भ्रमन्तं कालिकाचार्यं दृष्ट्वा नगरवासिनो लोकाः सामन्त-श्रेष्ठि-सेनापति-मन्त्रिप्रमुखा एकीभूय राज्ञः समीपे गत्वा एवं प्रोक्तवन्तः–"हे राजेन्द्र! अयं महापुरुष आचार्यो निजभगिनीस्नेहात् ग्रथिलो जातः, ततः कृपां कृत्वा साध्वीं मुञ्च यथाऽयं सज्जो भवति" इत्यादिवचनानि श्रुत्वा कुपितो राजा वक्तुं प्रवृत्तः–"रे लोकाः! यात यात मम दृष्टितः, एवंविधां शिक्षां निजगृहे निजमातृपितृभ्रातृकलत्रादीनां दत्त ।" ततः सामन्तादयो लोका विलक्षीभूय स्वगृहं जग्मुः । श्रीआचार्यैरपि श्रुतं यत् 'सामन्तादिवचनमपि न मानितं', अथ यदि तेन अधमेन अतितानितं तर्हि त्रुटत्येव, यतः–'अतिताण्युं त्रुटइ, अतिभर्युं फूटइ । अतिखाधुं खूटइ, अतिढीली गांठि छूटइ ।' तस्मात् किञ्चित् वैरूप्यं कर्तव्यं । अत्रापि न स्थातव्यं च, कुत्राऽपि देशे गत्वा कमपि उपायं करोमि" इति निश्चित्य श्रीकालिकाचार्याः सिन्धुनदीतटे पश्चिमदिशि एकः पार्श्वकूलो देशोऽस्ति, तत्र गताः, तत्र देशे ये राजानः ते सर्वेऽपि "साखी" इति कथ्यन्ते । तत्र एकस्य साखीभूपस्य नगरसमीपे महात्मवेषेण गताः । तस्मिन् प्रस्तावे तत्र एका कूपिका वर्तते । तत्पार्श्वतो बहवः कुमारा

भ्रमन्तो दृष्टाः, पृष्टं च—"भो ! किं विलोक्यते ? ।" ते प्राहुः—"भो परदेशिन् ! अस्माकं रमगाणानां मणिमयकन्दुकः कूपिकायां पतितः,
ग्रहीतुं न शक्यते, बहिःस्थितानां न च निस्सरति । ततो वयं विलक्षीभूताः सन्तः इतस्ततो भ्रमामः ।" आचार्याः प्राहुः—"भो कुमाराः ! गृहात्
धनुर्बाणान् आनयत यथा कन्दुकं निष्कास्य ददामि ।" ततः तैः तथा कृतं । ततः आचार्यैः आर्द्रछगण-वेष्टन-ज्वलत् तृणक्षेपणपूर्वं धनुराकृष्य
एकेन बाणेन कन्दुको विद्धः, द्वितीयेन बाणेन प्रथमो बाणो विद्धः, एवं तृतीयेन द्वितीयः, इत्येवं परंपरया विद्धबाणप्रयोगेन कूपकण्ठस्थितैः एव
कन्दुको निष्कास्य कुमाराणां दत्तः । सर्वेऽपि कुमारा हर्षिताः सन्तो विस्मयमादधानाः स्वस्वगृहं गत्वा एवं प्रोचुः—"हे तात ! अद्य एकः कोऽपि
परदेशी परदेशात् कल्पवान् समेतोऽस्ति, तेनाऽस्माकं कूपे पतितः कन्दुको निष्कास्य दत्तः ।" सर्वोऽपि वृत्तान्तः कथितः । ततः तत्रत्य साखीभूपैः
निजकुमारान् मुक्त्वा सादरं स्वगृहे श्रीकालिकाचार्याः समानीताः । ततः सूरिभिः आशीर्वादो राज्ञे दत्तो यथा—"चिरं जीव, चिरं नन्द, चिरं
पालय मेदिनीं । निरमाश्रि[त्य]तलोकानां, प्रपूरय मनोरथान् ॥१॥" पुनरपि—"पौषमासे निराहारा, वह्न्याहाराश्च कार्तिके । चैत्रमासे
गुडाहारा, भवन्तु तव शत्रवः ॥ १ ॥" ततः साखीराजेनापि विद्याकलाचातुर्यचमत्कृतेन अतिबहुमानसन्मानादि दत्त्वा निजपार्श्वे रक्षिताः ।
विद्यावन्तो हि सर्वत्र पूज्यन्ते, यदुक्तं—"विद्वत्त्वं च नृपत्वं च, नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते
॥ १ ॥" पुनरपि—"विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं, विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः । विद्या
बन्धुजनो विदेशगमने विद्या परं दैवतं, विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥ १ ॥" अपि च विद्यावतां परदेशोऽपि
स्वदेशः, यतः—"कोऽतिभारः समर्थानां, किं दूरे व्यवसायिनां । को विदेशः सुविद्यानां, कः परः प्रियवादिनाम् ॥ २ ॥"
अथ श्रीकालिकाचार्याः तत्र तिष्ठन्ति । प्रत्यहं साखीराजस्य समीपे यान्ति, नानाविधचेतश्चमत्कारकारिज्योतिर्निमित्तादिविद्यया राज्ञः चित्तं रञ्जयति ।

राजापि अत्यन्तहृष्टतुष्टमनस्को गुरूणां अतिबहुमानं दत्ते। एवं च सति गतानि कियन्ति दिनानि। तदवसरे एकदा एको दूतः एकं कच्चोलकं छुरिकासहितं लेखं चाग्रे मुक्त्वा राज्ञः प्रणम्य सन्मुखं स्थितः। ततः साखीराजो लेखं वाचयित्वा तत् विलोक्य च श्याममुखो बभूव। ततः श्रीकालिकाचार्यैः उक्तं–"भवतां स्वामिप्राभृतं समागतं, तत्र हर्षो विलोक्यते, ततो हर्षस्थाने विषादः कथं?।" राजा प्राह–"अहो! महापुरुष! अद्याऽस्माकं मरणरूपं महाभयं जातं। मरणात् अपि अधिकं भयं किमपि नास्ति। यतः–"**पंथसमा नत्थि जरा, दारिद्दसमो पराभवो नत्थि। मरणसमं नत्थि भयं, खुहासमा वेयणा नत्थि॥ १॥**" ततः सूरिभिः पृष्टं–"किं तत् भयं?।" राजा प्राह–"हे भगवन्! योऽस्माकं क्रुद्धः स्वामी स साहानुसाही वर्तते, तेन कुपितेन लिखितं वर्तते, 'यदुत अनया छुरिकया निजमस्तकं छित्त्वा अस्मिन् कच्चोलके क्षिप्त्वा शीघ्रं मोच्यं, नो चेत् तव सकुटुम्बस्य क्षयो भावी।' यथा मम तथाऽन्येषामपि मम तुल्यानां ९५ पञ्चनवतिसाखीराजानां दूतो मुक्तोऽस्ति। अतो महाभयं किं क्रियते?, कुत्र गम्यते?, कथं छुट्यते?।" ततः श्रीकालिकाचार्यैः विचारितं–"अयं अवसरः, मम च कार्यं।" ततः साखी-राजाय प्रोक्तं–"हे राजन्! मा म्रियस्व, मा चिन्तां कुरु, जीवन् नरो भद्रशतानि पश्यति। यथा दृष्टान्तः–'**भानुश्च मन्त्री दयिता सरस्वती, मृतिं गता सा नृपकैतवेन। गङ्गातटस्थां पुनरेव लेभे, जीवन् नरो भद्रशतानि पश्येत् [पश्यति]॥**" अत्र समये सति दृष्टान्तो वाच्यः। ततः (९५) पञ्चनवतिसाखीराजानः भवान् च सर्वेऽपि एकीभूय मया सार्धं चलन्तु। यथा हिन्दुकदेशे गत्वा गर्दभिल्लनृपं उच्छेद्य उज्जयिनीराज्यं विभज्य भवतां समर्प्यते!।" ततः सूरिवचने प्रतीतिं कृत्वा लेखप्रेषणपूर्वं सर्वान् ९५ राज्ञ आहूय एकत्र मिलित्वा प्रयाणढक्कां दापयित्वा सर्वेऽपि ९६ साखीराजानः श्रीकालिकाचार्यसहिताः चलिताः, अग्रे गच्छन्तः सिन्धुनदीं उत्तीर्य, सौराष्ट्रदेशमध्ये सुखेन समागताः। तदवसरे वर्षाकालः प्रादुर्बभूव। स कीदृशः?। "आयो वर्षाकाल चिहुं दिसि घटा उमटी तत्काल। गडडाट मेह गाजइ, जाणे नालिगोला वाजइ।

काल्हइ आभइ वीजलि झबकइ, विरहणीना हीया द्रबकइ, पपीहा बोलइ वाणिया, धान वेचवा वखार खोलइ, बोलइ मोर दादुर करइ सोर अंधार घोर गाजइ घोर, कंदर्प करइ जोर, मानिनी स्त्री भर्तार नइ करइ निहोर, चंदसूरिज वादले छाया, पंथि जन आप आपणा घर नइ धाया, गयांम मानसरोवर भणी चाल्या, लोके वस्तुवाना वखारमइ घाल्या, वगपंकति सोहइ इंद्रधनुष चित्त मोहइ, आभ थयो रातउ मेहथयो मातउ, मोटी छांट आवइ लोका नइ मन भावइ, झडी लागी करसणीरी भाग्य दसा जागी, मूंसल धारइ मेह वरसइ पृथिवी ऊर्ण—पूर्ण करिवानइ तरसइ, कादव प्रगाउ खलखलइ खाल, नूयइ ओरा भीजइ वस्तुवाना वोरा, टबकइ पटसाल चिंचूयइ बाल नदी आवी पूर कडणिरा रुंपभांजी करइ नकूर नदी वाहला लोक थया काहला, जूना ढूंढा पडइ लोक ऊंचा चडइ हालीए खेत्र खड्या वाडिसुं सेढा जड्या मारग भागा जे जिहां ते तिहां रहिवा लागा, मगल्या राता ममोला धान थया सुंहगा, मोला नीली हरी डहडही धणा हूया दूधनइ दही नीपना घणा धान सांभरया धर्म नइ ध्यान, गयउ रोर लोक करइ चकोर, गयउ दुकाल अयउ दुंदूसुकाल।" ईदृशे वर्षाकाले न कोऽपि गन्तुं शक्नोति। ततः श्रीकालिकाचार्यवचसा सर्वेऽपि शाखीराजानः ९६ निजनिजपटकुटीं विस्तार्य स्थित्वा एवं मासचतुष्टयस्थित्या वर्षाकाले श्रीकालिकाचार्यैः प्रोक्तं—"भो राजानः! मार्गाः समीचीना जाताः, अथ अग्रे चलन्तु यथा भवतां स्वेप्सितं सिध्यति।" तदा ते प्रोचुः—"हे श्रीगुरो! कथं प्रस्थितिः भवति? बहुकालविलम्बनेन अस्माकं द्रव्यं सर्वं निष्ठितं, संबलं च क्षीणं क्षुधातुराणां अस्माकं सर्वं विस्मृतं। तांबो जानइ खाण जां जिमइ जासकथान तां भट्टारक भगवान जांजीनइ नामकथान तां गीतनइ गान, जांजीम० तांताननइ मान जांजी० तां वीवाह नइ जान जां जी० तां फोफल नइ पांन जां जी० तां धर्मनइ ध्यान जां जी० तां तपनइ उपधान जां जी० तां आदर नइ मान जां जी० तां लगसरवा कांन जां जी० तां लग मुहडइ वान जां जी० जां धेला पाटइ गेडीयां तां सवेहि गयां सोटीयां। ततः श्रीआचार्यैः विचारितं—"सत्यमेते वदन्ति, कोऽपि द्रव्योपायः कार्यः यथा संबलं भवति, सैन्यं

चलति, कार्यसिद्धिर्भवति, परं किं कर्तव्यं इति चिन्तया निशि निद्रा न याति, तावत् शासनदेवता प्रकटीभूय प्रोवाच—“हे भगवन्! चिन्ता मा क्रियतां, एषा चूर्णकुम्पिका गृह्यतां यदुपरि वासः करिष्यते तत् सर्वं स्वर्णं भावि” इति उक्त्वा गता। प्रभाते जाते श्रीसूरिभिः सर्वेऽपि राजान आहूताः, प्रोक्तं च—“भो कुत्रापि एक इष्टवाहको विलोक्यतां।” तैः आसन्नस्थाने विलोकयद्भिः दृष्टः, गुरूणां दर्शितश्च। गुरुभिः विद्याबलेन देवतादत्तचूर्णवासक्षेपप्रक्षेपणेन च सर्वोऽपि इष्टवाहः स्वर्णीकृतः, पश्चात् विभज्य सर्वेषां साखीराज्ञां प्रत्येकं स्वर्णेष्टिका दत्ता। ततो हर्षिताः संजात संबलबलाः ते प्रयाणढक्कां दत्त्वा मालवकदेशं प्रति प्रचेलुः। अग्रे गच्छद्भिः लाटदेशस्वामिनौ श्रीआचार्यभागिनेयौ बलमित्र—भानुमित्रराजौ अपि सार्थे गृहीतौ। ततो यावता श्रीकालिकाचार्यसैन्यं मालवकसीम्नि आगतं तावता गर्दभिल्लोऽपि राजा स्वसैन्यं मेलयित्वा ‘प्रयाणढक्कां’ दापयित्वा सन्मुखं आगत्य पतितः। अथ आदित्यवारे द्वयोः अपि सैन्यं प्रयाणढक्कावादनपूर्वं च सम्मुखं [चटितं] चलितं। तत्र केन प्रकारेण युद्धं जातं तत् श्रूयतां—

आम्हा साम्हा कटक आव्या चडी, फौजइ फोज अडी बगतरनइ जीनसाल सुभटे पहिन्या तत्काल, माथइ धऱ्या टोप सुभट चढ्या सबल कोप, पांचे हथियार बांध्या, तीरे तीर सांध्या, अमल पाणि कीधा, भाजणरा सुंस लीधा, घोडे घाली पाखर जाणे आडा आया भाखर, आगइ कीया गज उपरि फरहरइ धज, दमामे दीधी घाई सूरवीर आया धाई, रणतूर वागइ तेपिणि सिंधू [ मइ ] डारागइ, ठाकुरवपु कारइ वडवडा बापांरा बिरुद संभारइ, छूटइ नालिनि पट थोडी विचालि, वहइ गोला लोकल्यइ ओला, छूटइ कुहक बांण कायरांरा पडइ प्राण, काबिली मीर नांखई तीर, मारइ भालांरा बिचाबिचि लागइ बगतर मेदीनइ विचाविचि लागइ खडगारी खडाखडि वागी भडाभडी, गर्दभिल्लरी फोज भागी सबल लीक लागी, हूंतउ जे सेनानी तेतउ धुरथी थयो कानी, जे हूंतउ कोटवाल तेतउ नासउ तत्काल, जे हूंतउ फोजदार तिणरइ माथे पडी मार, जे हूंता वागीया तेपिण भाजिगया अभागिया, जे हूंता सहस्रयोद्धा तेपिणि नासिगया बोधा, जे हुंता मुहता ते नासि घरे पहुता, जे हुंता चउरासीया तीए दांते

थीता थीया, जे हुंता मवास तीण मूकी जीवारी आस, जे हुंता कायर तिणनइ सांभरइ आपणी वायर, जे चडता वाहर ते हथियार छोडी थया हजूर, जे ऊंमरइ धमकइ भिन्ना ते गया पासइ टलता, जे बांधता मोटी पावडी ते उभा न रया एका घडी, जे हुंता एकएकडा तिणरे नाम दिता वेकडा, जे मागइ भरता आंकडा ते मुहडा कीया वांकडा, जे वणावता सास्ंी वांकी तीण तउ रणभूमिका पण पाकीं, जे बांधता विहुं थाने कृपाणी तीणांनइ नागतां भूमि पडी भारी, जे पहिरता लांबा साडा तीण नासिते कोडिकिया पवाडा, गर्दभिल्ल नाठउ बोल घणउ माठउ, गढमांहे गई पइठउ, जिना करइ बेठउ, पोलि ताला जड्या कालिकाचार्यना कटक चहुंदीसी विटी पड्या। अथ उज्जयिनीनगरीमध्ये गर्दभिल्लो वेष्टितः श्रीकालिकाचार्यसैन्यं, एवं कतिचिद्दिनेषु गतेषु साखीराजस्य सुभटा दुर्गस्य चतुर्दिक्षु भ्रमन्तो विलोकयन्ति, परं दुर्गशीर्षोपरि तदीयं सुभटानां न पश्यन्ति। ततः तैः आगत्य श्रीकालिकाचार्याणां विज्ञप्तं—"हे भगवन्! अद्य दुर्गोपरि न कोऽपि सुभटो दृश्यते, न कोऽपि युध्यति न, तत् कथं?।" तेन ततः श्रीकालिकाचार्यैः सूपयोगं दत्त्वा, ज्ञात्वा च तेषां प्रोक्तं—"भो! अद्य कृष्णाष्टमी वर्तते, तेन गर्दभिल्लो गर्दभीं विद्यां साधयन् अस्ति, यूयं पश्यत, यदि कुत्रापि दुर्गोपरि बहिर्मुखा गर्दभी स्थिता भवति, तदा सत्यं," तैः विलोकयद्भिः सा तथैव दृष्टा। ततः आगत्य प्रोक्तं च—"हे भगवन्! भवतां वचनं सत्यं जातं, अस्माभिः सा तथैव दृष्टा।" ततः श्रीगुरुभिः प्रोक्तं—"शृण्वन्तु एतत्परमार्थं, यदा एषा विद्या सम्पूर्णा सिद्धा भविष्यति तदा सा गर्दभी शब्दं करिष्यति, तच्छब्दं ये शत्रवः श्रोष्यन्ते ते मुखात् रुधिरं वमन्तो भूमौ पतिष्यन्ति मरिष्यन्ति वा।" एतां वार्तां श्रुत्वा साखीराट्प्रमुखा भयभ्रान्ता विज्ञपयन्ति स्म—"हे भगवन्! कोऽपि उपायः कर्तव्यः, येन तद्विद्या न प्रभवति।" ततः श्रीकालिकाचार्यैः प्रोक्तं—"यूयमपि निजसैन्यं कोशपञ्चकं दूरे स्थापयन्तु, मम च पार्श्वे शब्दवेधिसुभटानां अष्टोत्तरशतं सावधानीभूय तिष्ठतु, यदा च एषा रासभी शब्दकरणाय मुखं प्रसारयति तदा समकालं अष्टोत्तरशतबाणैः तूणीरवत् तस्या मुखं पूरणीयं, यथा सा शब्दं कर्तुं न शक्नोति,

विद्या च न प्रभवति ।" ततो गुरुवचः प्रमाणयद्भिः तैः तथैव चक्रे । उच्चस्थाने स्थित्वा आकर्णान्तवाणान् आकृष्य शब्दकरणसमये तस्याः मुखं पूरितं । ततः सा रुष्टासती गर्दभिल्लमस्तके विष्ठां कृत्वा लत्तां दत्त्वा आकाशे उत्पत्य गता । ततो सुभटा च प्रतोलीं भङ्क्त्वा मध्ये गत्वा गर्दभिल्लं वामबाहुभ्यां बध्वा श्रीकालिकाचार्याग्रे मुक्तवन्तः । सोऽपि अधमो नीचैर्भूमौ वीक्ष्यते स्म । ततो गुरुभिः प्रोचे—"रे दुष्ट ! पापिष्ठ ! निकृष्टबुद्धे ! किं ते कुकर्माऽऽचरितं ?, दुरात्मन् ! महासतीशीलचरित्रभङ्गपापद्रुमस्येदं इहास्ति पुष्पं, परं फलं तु परत्र नरकादिदुःखं प्राप्स्यसि । अरे वराक ! अद्यापि किमपि विनष्टं नास्ति, सर्वपापक्षयकरं चारित्रं गृहाण, यथा सुखी भविष्यसि" इत्यादि बहव उपदेशाः सूरिभिः दत्ताः, परं पापात्मा न प्रतिबुध्यते । यतः—"**उवएससहस्सेहि वि बोहिज्जंतो न बुज्झइ कोई । जह बंभदत्तराया, उदाइनिव मारउ चेव ॥ १ ॥**" अथवा काको धौतो दुग्धेनापि धवलतां न प्राप्नोति, अथवा मुद्गशैलः पुष्करावर्तमेघप्लावितोऽपि न आर्द्रीभवति, अथवा उपरक्षेत्रे उप्तानि अपि बीजानि नोद्गच्छन्ति, अथवा कूर्मकायः प्रहारशतैः अपि न भेत्तुं शक्यते, अथवा वधिरस्य ग्रन्थकोटिश्रवणेऽपि नाऽवबोधो जायते, अथवा विषं अमृतमिश्रितं अपि न मृष्टं भवति, अथवा लशुनं कर्पूरवासितं अपि न सुगन्धं स्यात्, वन्ध्याया वा बहूपचारैः अपि न सन्तानप्राप्तिः, खलो वा सत्क्रियमाणोऽपि न मैत्रीभावं भजते, एवं गर्दभिल्लो गुरुकर्मत्वात् बहु प्रतिबोध्यमानोऽपि न धर्मं धत्ते स्म । ततो भूपैः मार्यमाणोऽपि गुरुभिः कृपया देशत्यागं कारितः । ततः कालिकाचार्या यस्य गृहे उषिताः आसन् तस्य उज्जयिनीराज्यं दत्तं । अन्येषां च ९५ पञ्चनवतिभूपानां मालवकदेशो विभज्य यथार्हं दत्तः । ततः सरस्वतीसाध्वी अपि आलोचनां दत्त्वा तपः कारयित्वा गच्छमध्ये आनीता । स्वयमपि कालिकाचार्याः स्वारम्भपापं आलोच्य निरतिचाराः सन्तः स्वगच्छभारं बिभराञ्चक्रुः । न च वाच्यं एतादृशमहारम्भकरणेन तेषां विराधकत्वं । यत उक्तं सिद्धान्ते—"**संघाइयाण कज्जे, चूणिज्जा चक्कवट्टिसिन्नं पि [सेनापि] । कुविओ मुणी महप्पा पुलाइलद्धीइ संपन्नो ॥ १ ॥**" अथवा विष्णुकुमारेणापि

साधुप्रत्यनीको नमुचिः हतः, २ अपि च आचार्यरक्षां कुर्वद्भिः रात्रिप्रतिजागरिकैश्चतुर्भिः साधुभिः यामचतुष्टये चत्वारः सिंहा व्यापादिताः ३, अथवा साधुभिः परस्परं क्रियमाणमत्स्योत्पत्त्याम्नायवार्तां श्रुत्वा प्रभूतमत्स्योत्पादकं मात्सिकं वैक्रियसिंहेन हतवन्तः साधवः ४ पुनरपि आगामिभवे सुमङ्गलसाधुः साधुप्रत्यनीकं विमलवाहनं सवाहनं भस्मसात् करिष्यति, मोक्षं च यास्यति इत्यादयो बहवो दृष्टान्ताः वाच्याः। इति जिनशासनप्रत्यनीकोच्छेदनेन महाप्रभावकाः श्रीकालिकाचार्याः संजाताः। अथ तस्मिन् [अवसरे] भृगुकच्छनगरे श्रीकालिकाचार्यभागिनेयौ बलमित्र–भानुमित्रराजौ स्तः। ताभ्यां निजसेवकान् मुक्त्वा श्रीगुरूणां एवं विज्ञप्तं—"हे भगवन्! श्रीमद्भिः कृपां कृत्वा अत्र समागम्यतां, बहुजीवप्रतिबोधेन महान् लाभो भविष्यति।" ततः श्रीपूज्या विज्ञप्तिं अवधार्य लाभं च विभाव्य, ग्रामानुग्रामं विहरन्तो भृगुकच्छनगराभ्यर्णे समाजग्मुः। बलमित्र–भानुमित्राभ्यां राज्ञी सम्मुखमागत्य महताऽऽडम्बरेण प्रवेशोत्सवं कृत्वा धर्मशालायां उत्तारितः। अथ राजा प्रत्यहं जैनधर्ममर्माणि शृणोति, हृष्टः सन् मध्येसभायां जिनधर्मं प्रशंसति, वक्ति च—"अहो! अद्य काले बहवो धर्माः सन्ति, परं हिंसादि दोषदुष्टत्वात् पाखण्डरूपाः, परं जिनधर्मसमानो न कोऽपि श्रेयस्करो धर्मः" इत्यादि जिनधर्मप्रशंसां श्रुत्वा पुरोहितमस्तके शूलमुत्थितं, विचारितं चानेन–"अहो! राजा मा जैनधर्मी भवतु, तथा च सति मम हानिर्भविष्यति। ततो वादं कृत्वा (एनं) मानभ्रष्टं करोमि।" इति सभासमक्षं वादे कृते गुरुभिः जीवादितत्त्वप्रश्नोत्तरैः निरुत्तरीकृतः। परं पुरोहितो जानाति—"कथमप्ययं आचार्यः इतो विहृत्य अन्यत्र याति तदुपायं करोमि" इति विचार्य राज्ञोऽग्रे प्रोवाच–"हे राजन्! एते जगत्पूज्या महान्तो गुरवः, एतेषां अरसविरसाद्याहारो न देयः, यतः पापं लगति। ततः श्रावकान् आहूय प्रच्छन्नं वाच्यं, यदुत गुरूणां क्षीर-खाण्ड-घृतमोदक-घृतपूरकुण्डलाकृतिप्रभृति-मृष्टान्नपानाहारो देयः। यद् विलोक्यते [युज्यते] तत् मम भाण्डागारात् ग्राह्यं।" ततो राज्ञाऽपि परमभक्तेन तथैव कारितं। अथ च यदा यतयो गोचरीं गच्छन्ति तदा प्रतिगृहं श्रावकाः मृष्टान्नपानैः प्रतिलाभयन्ति। एकदा गोचरीगतान् साधून् प्रति बालकाः

प्रोचुः—"भो यतयः ! यूयं वरमिहागताः, चिरं च स्थातव्यं, भवदर्थं क्रियमाणमृष्टान्नपानेन अस्माकमपि मुखं मृष्टं जायते । अथ श्रीगुरुभिरपि उपयोगो दत्तः, सांप्रतं कथं श्रावका विशेषपर्व विनाऽपि मृष्टान्नपानादि प्रयच्छन्ति ? ।" ततो ज्ञातं जैनद्वेषिणा पुरोहितेन एषा अनेषणा व्यधायि । ततः "**संकिलेसकरं ठाणं, दूरओ परिवज्जए**" इति विचार्य भृगुकच्छपुरात् विहृत्य अन्यत्र देशेषु संयमं प्रतिपालयन्ति स्म । अत्रैकस्यां संस्कृतकथायां मगहेसुकथायां च बलमित्र–भानुमित्रयोः सम्बन्धः एवं–उज्जयिन्यां बलमित्र–भानुमित्रराजानौ बभूवतुः । तदाग्रहात् श्रीकालिकाचार्योः चतुर्मास्यां तत्र तस्थुः । तत्र च स्वभगिन्याः पुत्र्याः पुत्रं तयोः भागिनेयं च बलभानुनामानं तयोः अनुमतिं विनाऽपि प्रव्राजयामासुः । ततो बलमित्र–भानुमित्रादयो विमनस्का जाताः । अग्रे सम्बन्धः सदृश एव, परं तत्त्वं तत्त्वविदो विदन्तीति । इत्युक्ताः एके श्रीकालिकाचार्याः ॥

अथ ये श्रीकालिकाचार्याः श्रीवीरनिर्वाणात् ९९३ वर्षे जाताः ते विहरन्तो दक्षिणदेशे प्रतिष्ठानपुरे जग्मुः । तत्र शालिवाहननामा राजा जैनः परमश्रावको यतिभक्तो राज्यं करोति । गुर्वागमनं श्रुत्वा हृष्टः सन् गुरोः समीपे गत्वा वंदित्वा अत्याग्रहं कृत्वा गुरवः चतुर्मास्यां स्थापिताः । अथ राजा सदा धर्मोपदेशं शृणोति, गुरुभक्तिं च करोति, देवगृहेषु स्नात्रमहोत्सवाः क्रियन्ते । एवं च सति श्रीपर्युषणापर्व अत्यासन्नं समागतं । तदा राज्ञा पृष्टं–"हे भगवन् ! श्रीपर्युषणापर्व कदा भावि ? ।" तदा गुरुभिः प्रोचे–"भाद्रपदसुदिपञ्चम्यां भविष्यति ।" तदा राजा प्राह–"हे स्वामिन् ! पञ्चम्यां अस्माकं कुलक्रमागतः, इन्द्रमहोत्सवः स तु अवश्यं कर्तव्य एव । एकस्मिन् दिने तु पर्वद्वयं कर्तुं न शक्यते, परस्परं भिन्नाचारत्वात् ।" ततः प्रसादं कृत्वा श्रीपर्युषणापर्व षष्ठ्यां क्रियते । तथा पूजा-स्नात्र-पौषधादीनि धर्मकृत्यादिनि प्रभूतानि भवन्ति ।" ततो गुरुभिः प्रोचे–"हे राजेन्द्र ! पञ्चमीरात्रिं उलङ्घ्य न कदाऽपि पर्युषणा भवति । यदुक्तं–"**अविचलइ मेरुचूला, सूरो वा उग्गमेइ अवराए । नय पंचमीइरयणिं पज्जोसवणा अइक्कमइ** ॥ १ ॥" कल्पसूत्रेऽपि–"**नो से कप्पइ तं रयणिं उवाइणावित्तए** ।" ततो राज्ञा प्रोक्तं–"हे पूज्य ! तर्हि चतुर्थ्यां क्रियतां ।" ततः

श्रीकालिकाचार्यैः "अंतरा वि य से कप्पइ" इति श्रीकल्पसूत्राक्षरदर्शनेन सातवाहनराजाग्रहाच्च पञ्चमीतः चतुर्थ्यां पर्युषणापर्व प्रवर्तितं । तद्वशेन च चातुर्मासिकं चतुर्दश्यां जातं । अन्यथा आगमोक्तं पञ्चदश्यां आसीत् । तदानीं तेन समस्तसङ्घेनापि प्रमाणीकृतं । यत् उक्तं तीर्थोद्गालिप्रकीर्णके— "तेणउ य नवसएहिं, समइक्कंतेहिं वद्धमाणाओ । पज्जोसवणचउत्थी, कालिगसूरिहिं तो ठविया ॥ १ ॥ वीसहिं दिणेहिं कप्पो, पंचगहाणीय कप्पठवणा य । नवसयतेणउएहिं, वुच्छिन्ना संघआणाए ॥ २ ॥ सालवाहणेण रन्ना, संघाएसेण कारिओ भयवं? । पज्जोसवणचउत्थी, चाउम्मासं चउद्दसिए ॥ ३ ॥ चउमासपडिक्कमणं, पक्खियदिवसंमि चउविहो संघो । नवसयतेणउएहिं, आयरणं तं पमाणंति ॥ ४ ॥ पुनरपि सामाचार्यां "एवं च कारणेणं अज्जकालगायरिएहिं चउत्थीए । पज्जोसवण पवत्तियं, समत्तसंघेण य अणुमन्नियं । तव्वसेण य पक्खियाईवि, चउद्दसीए आयरियाणि । अन्नहा आगम-मुत्ताणि पुण्णिमाए त्ति ॥" न च तस्मिन् एव वर्षे श्रीकालकाचार्यैरपि या तत् पर्युषणापर्व चतुर्थ्यां कृतं पश्चात् पुनरपि पञ्चम्यामेव अभवत् इति वाच्यं । "इयाणिं कहं च अपव्वे चउत्थी पज्जोसविज्जइ" इति शिष्यपृच्छायां गुरुवचनावसरे एवं च जुगप्पहाणेहिं चउत्थी कारणे पवत्तिया सा चेव अणुमाया सव्वसाहूणं" इति श्रीकालिकाचार्यानन्तरं पश्चात्कालभावि निशीथचूर्णिकारोक्तदशमोद्देशकचूर्णिवचनात् भाद्रपदसुदिचतुर्थ्यां एव पश्चात् अपि श्रीपर्युषणापर्व अभूत् । तत्परम्परया च साम्प्रतमपि चतुर्थ्यां क्रियमाणमस्ति । इति सम्यक् समाधानं ॥ अथ श्रीकालिकाचार्याः सुखेन संयमं पालयन्तः तत्र तिष्ठन्ति, परं कालक्रमेण शिष्याः प्रमादिनो जाताः । गुरुभिः बहुप्रेरिता अपि गलितगाव इव न क्रियानुष्ठानादिकं कुर्वन्ति । ततः श्रीकालिकाचार्याः शय्यातरस्याग्रतः सर्वां वार्तां कथयित्वा शिष्यान् सुप्तान् एव मुक्त्वा स्वयमेकाकिन एव स्वर्णपुरे नगरे सागरचन्द्राचार्यस्य निजपौत्रस्य प्रशिष्यस्य उपाश्रये गत्वा एकादेशे मार्गयित्वा तस्थुः । परं न केनाऽपि उपलक्षिताः । प्रभाते सागरचन्द्रेण सभाग्रतो विशेषतो नानारागालापेन मधुर-

ध्वनिना महताऽऽडम्बरेण व्याख्यानं कृत्वा पृष्टं–"अहो वृद्ध! कथय मया कीदृशं सभारञ्जनं व्याख्यानं कृतं?।" ततः कालिकाचार्यैः प्रोक्तं–"भव्यं कृतं।" ततः सागरचन्द्रेण साहङ्कारेण प्रोक्तं–"अहो वृद्ध! तव कोऽपि सिद्धान्ते यदि सन्देहो भवेत् तदा पृच्छ।" तदा कालिकाचार्यैः प्रोक्तं धर्मं श्रद्दधानैः अपि तद्गर्वोत्तारणार्थं–"धर्मोऽस्ति किं वा नास्ति" (इति पृष्टं)। तेनोक्तं–"धर्मोऽस्ति।" कालिकाचार्यैः प्रोक्तं–"धर्मो नास्ति।" अत्र द्वयोः अपि महान् तर्कवादो जातः। धर्मस्थापनोत्थापनयोः अनेकशो युक्तयः सन्ति, ताः तार्किकैः स्वयं वाच्याः, मया ग्रन्थगौरवभिया न लिखिताः। [अत्र स्थाने बृहत्खरतरगच्छीयसाधुभिः परस्परं तर्कवादो विधीयते, कृते श्रुते च तस्मिन् वर्षं यावत् परमश्रेयो भवति, इति प्रवर्तमानपरंपरा दृश्यते]। तथा कृते वादे श्रीकालिकाचार्यैः सागरचन्द्रो जितः। ततः तेन ज्ञातं–'नाऽयं वृद्धः सामान्यः, किन्तु कोऽपि सातिशयी वर्तते।' इतश्च पृष्ठतः प्रमादिनः शिष्या दिनोदये सुप्तोत्थिताः स्वगुरुं अपश्यन्तो विलक्षाः सन्तः परस्परं पृच्छन्ति। तदवसरे शय्यातरश्रावकेणोक्तं–"रे! कुशिष्याः यूयं गुरुशुद्धिं अपि न जानीथ।" तदा अत्याग्रहेण पृष्टेन शय्यातरश्रावकेण प्रोक्तं–"गुरवः सागरचन्द्रपार्श्वे स्वर्णपुर्यां गताः।" ततः सर्वेऽपि शिष्यासंघाटकत्रयं कृत्वा स्वर्णपुरं प्रति चलिताः, पथि लोकाः पृच्छन्ति–"क?।" श्रीकालिकाचार्यः पृष्ठगा वदन्ति–"अग्रे।" अग्रगा वदन्ति–"पृष्ठे समागच्छन्ति।" एवं ते तत्र प्राप्ताः। सागरचन्द्रोऽपि गुर्वागमं श्रुत्वा सम्मुखं चलिताः। पृष्टं च–"क गुरवः?।" तैः उक्तं–"ते तु तव पार्श्वे पूर्वं आगताः सन्ति।" ततो ज्ञातं–"हुं, ते एव।" ततः सर्वशिष्यैः सागरचन्द्रेण तत्रागत्य वन्दिताः क्षामिताश्च। अत्र सर्वेऽपि सुखेन संयमं पालयन्तः तिष्ठन्ति। अथ तदवसरे सौधर्मेन्द्रः श्रीसीमन्धरस्वामिपार्श्वे गत्वा निगोदविचारान् श्रुत्वा प्रोवाच–"हे स्वामिन्! एतादृशं निगोदविचारं कोऽपि भरतक्षेत्रेऽपि जानाति!।" भगवता प्रोक्तं–"भरतक्षेत्रे प्रतिष्ठानपुरे कालिकाचार्यः।" ततो इन्द्रो ब्राह्मणरूपं कृत्वा आगत्य पृच्छति स–"हे भगवन्! निगोदविचारं वदत।" गुरुभिः प्रोक्तं–"**गोला य असंखिज्जा,**

असंखनिगोअओ हवइ गोलो । ? इक्किक्कम्मि निगोए, अणंतजीवा मुणेयव्वा ॥ १ ॥" इत्यादिसूक्ष्मविचारगहनं श्रुत्वा इन्द्रो हर्षं प्राप्य हस्तं दर्शितवान्–"हे भगवन् ! ममाऽऽयुः कियत् अस्ति ! । स्तोकं स्यात् तदा मरणं साधयामि ।" ततो गुरुभिः विलोकितं–वर्षशतात् सहस्राल्लक्षात् कोटितोऽपि अधिकं । ततः सागरोपमस्वरूपं दृष्ट्वा उक्तं–"हे इन्द्र ! धर्मलाभोऽस्तु ।" ततः इन्द्रः प्रकटीभूय दशदिशः उद्द्योतयन् वन्दित्वा अब्रवीत्–"हे पूज्य ! सीमंधरस्वामिना त्वं निगोदविचारपारगः कथितः, स प्रत्यक्षं दृष्टः" इत्युक्त्वा गच्छन् गुरुणा उक्तः–"गोचरीगताः शिष्या आगच्छन्ति, तावत् तिष्ठ, तेऽपि त्वां सहर्षं पश्यन्ति ।" इन्द्रेणोक्तं–"मद्रूपमोहिता मा निदानं करिष्यन्ति ।" उपाश्रयद्वारं परावृत्य देवलोकं गतः । शिष्या आगताः द्वारं अपश्यन्तः शब्दं कुर्वन्तो नव्यद्वारेण गुरुणा प्रवेशिताः । शिष्यैः विज्ञप्तं–"कथं एतत् ?" गुरुभिः सर्वं इन्द्रस्वरूपं निवेदितं । ततः श्रीकालिकाचार्यः चिरं निर्मलं चारित्रं प्रतिपाल्य प्रान्ते अनशनं विधाय समाधिना देवलोकं प्राप्तः । ततः श्रीकालिकाचार्याः महाप्रभाविकाः स्थविरा बभूवुः । तेषां सम्बन्धः उक्तः । अथ प्रभाते साधुसामाचारी वक्ष्यते–सा वर्तमानयोगेन एवं–एके दानं ददति, एके शीलं पालयन्ति, एके तपः तपन्ति, एके भावनां भावयन्ति, स श्रीविधिचैत्यालयपूज्यमानश्रीशान्तिनाथशासनाधीश्वरश्रीवर्धमानतत्पट्टानुक्रमेण श्रीधर्मंतावी तावत् यावत् युगप्रधानश्रीजिनचन्द्रसूरिश्रीजिनसिंहसूरीणां प्रसादः, तेषां आज्ञया च श्रीसङ्घः प्रवर्ततां ॥

श्रीमद्विक्रमसंवति, रस-र्तु-शृङ्गार-संख्यके सहसि । श्रीवीरमपुरनगरे, राउलनृपतेजसी राज्ये ॥ १ ॥

श्रीबृहत्खरतरगच्छे, युगप्रधानसूरयः । जिनचन्द्रा जिनसिंहाश्च, विजयन्ते गणाधिपाः ॥ २ ॥

तच्छिष्यः सकलचन्द्रः, शिष्यः समयसुन्दरः । कथां कालिकसूरीणां चक्रे बालावबोधिकां ॥ ३ ॥ (ग्रंथाग्रं–४४१)

॥ इति कालिकाचार्यकथा समाप्ता ॥

(इति श्रीकालिकाचार्यकथासहितम्)

॥ श्रीकल्पसूत्रं समाप्तम् ॥

न रोचते मे संग्रामो हैडिम्बेन दुरात्मना ।
बलवीर्यसमाविष्टः ससहायश्च सांप्रतम् ॥ ६७

नैष शक्यो युधा जेतुमपि वज्रभृता स्वयम् ।
लब्धलक्ष्यः प्रहारी च वयं च श्रान्तवाहनाः ।
पाञ्चालैः पाण्डवेयैश्च दिवसं क्षतविक्षताः ॥ ६८

तत्र मे रोचते युद्धं पाण्डवैर्जितकाशिभिः ।
घुष्यतामवहारोऽद्य श्वो योत्स्यामः परैः सह ॥ ६९

पितामहवचः श्रुत्वा तथा चक्रुः स्म कौरवाः ।

---

67 [a]) G2 न; Ce मे (as in text) Da1 समाले; T2 संग्रामं. — [b]) = 77[c] K3 Da1 Dn1 (before corr) D1-3 5 6 हैडंबेन B1 D1 S (except M1.4) महात्मना (for दुरा°) — [c]) S (except M2) °समायुक्त. — [d]) S1 B2-4 सु- (for स) Da Dn1 D4 वीर्यवान्; D1 साहस° (for सांप्रतम्).

68 G1 3 read 68 after 70 — [a]) D2 न तु; D4 नैक; T1 G1 न स (for नैष) M2 शल्यो (for शक्यो) D1 रणे जेतुम्; T1 G2 4 महाराज (for युधा जेतुम्) — [b]) T1 G2.4 इंद्रेणापि युधा पाचित् — [c]) Some MSS लब्धलक्ष; Da Dn D2.4 6 T2 लब्धलक्ष- K3 प्रहारे; M2 प्रमाथी; Ce प्रहारी (as in text) M1.3 4 लब्धलक्षोप्रमादी च — [e]) K1 B1 D1 पश्चार्दैः. K2 Dn D3 4 S पांडवैश्चैव — [f]) Da1 क्षयविक्षत; Dn1 क्षतविक्षता; D1 4 (marg.) T1 G शरविक्षिता (D1 °विक्षितं; G1 °विक्षता); D2.6 T2 क्षतविक्षतं (D4 °ता); M2 °शोणिता; M4 °विग्रहा; Ce क्षतविक्षता (as in text) — T1 G1 ins after 68 M2 (om. line 1), after 69[a]:

_34* इदानीं युधि निर्जितुं न शक्योऽसौ स राक्षसः ।
भवन्तोऽपि महिता सर्वे योद्धुं न शक्यते ।
[(L. 2) M- [illegible]]

69 [illegible] — [a]) K0-3 P1-3 D Da D1 [illegible] transp. [illegible] — After 69[a], M[illegible] line 2 of 35[illegible] — [a]) K3 Dn1 D- [illegible]. D1 [illegible] (for [illegible]); D2 [illegible] ([illegible]) [illegible] K- D- [illegible] (D1 [illegible]); M- [illegible] [illegible] [illegible] नैष शक्यैः महाराज [illegible] K- [illegible]; D [illegible] [illegible]